॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
५२



श्रीमद् अमरसिंहविरचितं

नामलिङ्गानुशासनम्

# अमरकोषः

[ अनेकार्थध्वनिमञ्जरी-द्विरूपकोषैकाक्षरकोषैश्च समुपबृंहितः ]

रत्नप्रभाऽऽख्यसंस्कृतव्याख्यया हिन्दीटिप्पण्यादिभिश्च विभूषितः

व्याख्याकारः—

डॉ० ब्रह्मानन्द त्रिपाठी

साहित्य-आयुर्वेद-आचार्यः

एम. ए., पी-एच. डी., डी. एस-सी. ए-वाइ.



चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक—
चौखम्बा सुरभारती प्रकाशन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
के० ३७/११७, गोपालमन्दिर लेन
पोस्ट बाक्स नं० १२९
वाराणसी २२१००१



द्वितीय संस्करण १९८२

मूल्य { प्रथम काण्ड ४-५०
सम्पूर्ण २५-००

अन्य प्राप्तिस्थान—
चौखम्बा विद्याभवन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बनारस स्टेट बैंक भवन के पीछे )
पोस्ट बाक्स नं० ६९
वाराणसी २२१००१

मुद्रक—
श्रीजी मुद्रणालय
वाराणसी

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA



52



# AMARAKOṢA

## NĀMALIṄGĀNUŚĀSANAM

OF

## AMARASIṀHA

[ Enlarged with Anekarthadhvanimanjari, Dwiroopa-Kosha and Ekakshara-Kosha ]

Edited With

'RATNAPRABHĀ'-SANSKRIT & HINDĪ COMMENTARIES

*By*

Dr. Brahmananda Tripathi

**Sahityacharya, Ayurvedacharya**

M. A., Ph. D., D. Sc. Ay.



CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

# वाङ्मुखम्

अयि ! मान्याः !! सुरभारतीसमाराधनसमुपलब्धयशोराशयः सुधियः !!! सुविदितमेव तत्रभवतां भवतां यत् पुरुषार्थचतुष्टयप्राप्तिरेव समेषां मानवानां परमलक्ष्यत्वेन दृष्टिपथमायाति । सा च निगमागमस्वाध्यायफलाऽधीना, तेषाञ्च वाङ्मयी सम्पत् शब्दसन्दोहमयी, शब्दानां व्युत्पत्तिर्व्याकरणाऽऽश्रिता, तेषामर्थज्ञानं निरुक्ताऽऽधीनम् । व्याकरणं निरुक्तञ्चैतदुभयमपि वेदाङ्गत्वेन सुप्रसिद्धम् । श्रुतीनामर्थबोधाय यत् स्थानं निरुक्तानां तदेव समस्तस्य संस्कृतवाङ्मयस्य पदार्थबोधनाय कोषसाहित्यस्य बाभाति ।

संस्कृतवाङ्मयस्य परिसीमां निश्चेतुं न कोऽपि सक्षमः पुरुषायुषजीवी । सर्वं हि ज्ञानं परब्रह्मनिश्वसिताम्नायनिचितं, विविधस्मृतिसमुदायसङ्गतम्, आदिकाव्यरामायणरसितं, व्यासोक्तभारताद्यष्टादशपुराणपूरितं, सङ्ख्यातीतोपनिषदां प्रतानसन्तानितम्, आयुर्वेद-धनुर्वेद-स्थापत्यवेदादिविदितं, ज्योतिश्शास्त्रज्ञानप्रकाशितं, दण्डनीति-राजशास्त्राऽर्थशास्त्र-भूशास्त्रादिशास्त्रसन्दोहसङ्कुलं, विविधकाव्याऽऽख्याननाटककथाऽऽदिभिः सरसीकृतं, नानादर्शनरमणीयं, शङ्कर-मण्डनमिश्र-गार्गी-भोजकालिदास-भारवि-भवभूति-बाण-हर्ष-माघ-मम्मट-जगन्नाथप्रभृतिकविवरततिविततम्, तन्त्र-मन्त्रप्रमुखशास्त्रसमुदायसमुपबृंहितं च विद्योततेतमाम् । एतस्य तत्वार्थबोधाय कोषाणां साहाय्यं सुतरामपेक्षत एव ।

**कोषस्य महत्वम्**—विदुषां शब्दविद्या ( सम्पूर्ण वाङ्मयं ) राज्ञां च प्रजा यदि संसारेऽस्मिन् केनाप्येकेनोपायेन वशतां याति तत् कोषसङ्ग्रहमेव । अतएवेयमभियुक्तोक्तिः सुप्रसिद्धा—

**'विदुषां भूभुजां वापि शब्दविद्या तथा प्रजा ।**
**संसारे वशतामेति न विना कोषसङ्ग्रहम्'** ।। इति ।

एवं सङ्ख्यातीतेषु कोषेषु सत्सु केचन केवलं नामानुशासनस्वरूपास्तदितरे लिङ्गानुशासनमात्रकलेवराः समुपलभ्यन्ते । तेषु एष 'अमरकोषः' प्रसिद्धेः परांकोटिमाटीकते, नामलिङ्गोभयानुशासनस्फीतकलेवरत्वात् । अमरकोषस्य तृतीयकाण्डस्थममुष्य व्याकरणविवेचनमालोक्यैव केनापि बौद्धमताऽसहिष्णुना प्रचारिता मर्मभेदनप्रवणाऽपि सूक्तिरियम्—**'अमरसिंहो हि पापीयान् सर्वं भाष्यमचूचुरत्'** । इति ।

किञ्च व्याकरणशास्त्रकर्तृषु पठ्यतेऽन्यतमोऽमरः । तद् यथा—

**'इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः ।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः'** ।। इति ।

**परिचयः**—अयं हि कोषकारोऽमरसिंहः कदा कुत्र जनिमलभतेति विषये पण्डिता नाद्यापि कमपि निर्णयमवापुः । अतोऽत्र विषये विभिन्नविदुषां मतानि प्रस्तूयन्ते । केचन ज्योतिर्विदाभरणात्—

**'धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कू वेतालभट्टघटखर्परकालिदासाः ।**
**ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य'** ।।

इति पद्यं प्रमाणपदवीमुपस्थापयन्तः ख्रिस्ताब्दात् प्राक् प्रथमे शतकेऽस्य समयं समर्थयन्ते । **विल्सन्**—महोदयस्तु ५०० मिते ख्रिस्तीयाब्देऽयमासीदिति स्वीकरोति । **डॉक्टर केर्न**-महानुभावो बृहत्संहिताया उपोद्घाते निर्दिशति यद् वराहमिहिरामरसिंहौ समकालिकाविति । एतस्य मतेऽयं ख्रिस्तीयषष्ठशतकस्य पूर्वार्धे समभूदिति । **वेवर**-महाभागस्तु कथयति यद् अमरकोषादतिरिक्ताः समेऽप्यन्ये कोषाः ख्रिस्ताब्दीयैकादश-द्वादशशतकात् पश्चाद्वर्तिन एव । तस्माद् अमरसिंहोऽपि नातिपूर्वकालिक, इत्येषा चर्चा **'हिस्ट्री ऑफ संस्कृतलिट्रेचर'**नाम्नि ग्रन्थे सुलभा । यद् **'वेवरः'** कथयति—'अमरकोष' एव सर्वप्राचीन इति, न तद्वचः श्रद्धेयम् । यतोऽमरसिंहः स्वकीये कोषे एवं निर्दिशति यत् **'समाहृत्यान्यतन्त्राणि'** अतस्तदानीमन्येऽपि कोषाः सुलभा नूनमासन्निति । अस्य बौद्धमतानुयायिता तु अहमहमिकया पुरो धावति, न चात्र किमपि वक्तव्यमस्ति । कतिपये पुराणेषु बद्धादराः कथयन्ति यद् **अग्निपुराणम्**—एवास्याधारशिला । नवीनास्तु नैवं मन्वते । साम्प्रतिका विद्वांसस्तु-अमरकोषस्थशब्दविन्यासविशेषानालोक्य[1] एतस्य कालपरिधिमेवं निर्णेतुं यतन्ते । यदयं **प्रायः** २२५ ईशवीयवत्सरेभ्यः पश्चाद्वर्ती भवितुं नैव शक्नोतीति । श्रूयते यद् भगवाञ्शङ्कराचार्यः शास्त्रार्थे बौद्धान् पराजित्य तेषां समस्तं साहित्यं यदा समुद्रे न्यमज्जयत् तदा एतस्य गुणगणैकबद्धादरः सः केवलम् 'अमरकोषम्' एव ततो जग्राह, इति । श्रीमदमरसिंहस्य परिचायिकाऽन्यतमा सूक्तिरेवं समुपलभ्यते । यथा—

'ब्राह्मण्यामभवद् **वराहमिहिरो** ज्योतिर्विदमग्रणी
राजा **भर्तृहरिश्च विक्रमनृपः** क्षत्रात्मजायामभूत् ।
**वैश्यायां हरिचन्द्रवैद्यतिलको** जातश्च **शङ्कुः कृती**
शूद्रायाम्—**'अमरः'** षडेव शबरस्वामिद्विजस्यात्मजाः ।। **इति** ।

---

१. 'खुरणाः स्यात् खुरणसः **प्रज्ञुः** प्रगतजानुकः ।
**ऊर्ध्वज्ञुरू**र्ध्वजानुः स्यात् **संज्ञुः** संहतजानुकः ।। अमरः २।६।४७ ।

अस्तु यत् किमपि स्यात्, प्राचीनविद्वत्परम्परामनुसरता स्वकीयश्लाघानिरपेक्षेणाऽनेनाऽपि स्वकीयेऽस्मिन् कोषे देश-काल-जाति-वंश-गुरु-पितृ-मातृ-प्रभृतिपरिचय प्रदानमुखरा कापि सामग्री क्वापि नोट्टङ्किता । सम्प्रति दिवङ्गतोऽप्ययम् 'अमरः', सर्वथा स्वात्मानं गोपायितुकामोऽपि 'सिंह' आसीदेव, नात्र वैमत्यं कस्यापि ।

**रचना**—अमरसिंहस्य केवलं नामलिङ्गानुशासनमेवोपलभ्यते । **मुकुटस्तु** 'पदचन्द्रिकायां' बृहदमरकोषमपि बहुत्र निर्दिशति, तत्र वयं तूष्णींभावं भजामः । एवं **सदुक्तिकर्णामृते**—अमरसिंहस्य नाम्ना पञ्च पद्यानि समुद्धृतानि सन्ति यदि सोऽयमेवाऽऽसीत्तर्हि अयं कवित्वेनाऽपि स्वीकर्तव्यः । अथवा काव्यरचयिता स्यादन्यः कश्चिदमरसिंहः, यतोऽस्य वर्णनं नान्यत्र सुलभम् । विषयेऽस्मिन् विदुषां सन्ति विभिन्ना धारणाः । 'काव्यकल्पलतायाः' कर्ता श्वेताम्बरजैनः—**अमरचन्द्रः** सर्वथाऽर्वाचीन इति ज्ञातव्यः ।

**अमरकोषस्य टीकाः**—अमरकोषापराभिधस्य नामलिङ्गानुशासनस्य सुप्रसिद्धत्वात् सुधीजनप्रियत्वाच्च तदाशयविशदीकरणबद्धपरिकरैः पण्डितप्रवरैः समये समयेऽस्य बह्व्यष्टीकाः समुल्लिखिताः सन्ति । तासां नामोल्लेखः पिपठिषूणां ज्ञानवर्धनायाऽत्र विधीयते ।

| **व्याख्याः** | **व्याख्याकाराः** | **व्याख्याः** | **व्याख्याकाराः** |
|---|---|---|---|
| व्याख्याप्रदीपः | अच्युतोपाध्यायः | अमरविवेकः | महेश्वरः |
| काशिका | काशीनाथः | मधुमाधवी | माधवः |
| अमरकोषोद्धाटनम् | क्षीरस्वामी | पदचन्द्रिका | मुकुटः |
| कौमुदी | नयनानन्दः | त्रिकाण्डचिन्तामणिः | रघुनाथचक्रवर्ती |
| पदार्थकौमुदी | नारायणचक्रवर्ती | त्रिकाण्डविवेकः | रामनाथविद्यावाचस्पतिः |
| शब्दार्थसन्दीपिका | नारायणविद्याविनोदः | प्रदीपमञ्जरी | रमेश्वरः |
| अमरपञ्जिका | नारायणवेदान्तवागीशः | पीयूषम् | रामकृष्णदीक्षितः |
| सुबोधिनी | नीलकण्ठः | वैषम्यकौमुदी | रामप्रसादतर्कालंकारः |
| अमरचन्द्रिका | परमानन्दमैथिलः | पदविवृतिः | लिङ्गयसूरिः |
| मुग्धबोधिनी | भरतमल्लिकः | पदमञ्जरी | लोकनाथः |
| व्याख्यासुधा | रामाश्रमः | टीकासर्वस्वम् | सर्वानन्दः |
| शारदासुन्दरी | मथुरेशविद्यालंकारः | व्याख्यामृतम् | अज्ञातः |
| विद्वन्मनोहरा | महादेववेदान्ती | सन्देहभञ्जिका | अज्ञातः |

एतदतिरिक्ता अपि भूयस्यः टीकास्तत् तद्देशीयभाषासु ( सिंहल, स्याम, ब्रह्म, महाराष्ट्र, तेलगु, तिब्बत, कर्णाटक, कश्मीरप्रभृतिषु ) दृष्टिपथं यान्ति ।

पुरातनपरम्परायां बालानां सुखबोधाय सर्वप्रथमं शब्दरूपावल्या, धातुरूपावल्या, अमरकोषस्य चानिवार्यत्वेन पाठनं कारयन्ति स्म गुरुजनाः । साम्प्रतिकाः संस्कृताधिकारिणस्तु कोषस्योपयोगितामनुभवन्तोऽपि पाठचक्रमरूपेणैतस्य निर्धारणे नितरां मन्दादरा दृश्यन्ते । ते सम्यग् जानन्ति यत् कोषज्ञानमन्तरा कोऽपि विद्वान् भवितुं नार्हति । हंहो ! तथाप्यत्र ताटस्थ्यम् ? पुनरपि ज्ञाताऽऽस्वादा अमरकोषं विहातुं न समर्था अद्यापि । यतोऽत्र विषये सुप्रसिद्धमिदमाभाणकं जागर्ति विदुषां मनःसु—**'अमरकोषो जगत्पिता'** । इति ।

संस्कृतवाङ्मये प्रविविक्षूणां, लब्धप्रवेशाणां, विश्वविश्रुतानां पण्डितपुङ्गवानाञ्च राज्ञां कोषस्यैवास्य 'अमरकोषस्य' संस्कृतसमाजे समादरं समालोचयद्भिः समस्तसंस्कृतवाङ्मयस्य प्रचार-प्रसारकर्मतत्परैश्-चौखम्बा-सुरभारती-प्रकाशनाधिकारिभिरेतस्य हिन्दीभाषायां व्याख्या-टिप्पण्यादिलेखनाय चिरं प्रार्थितोऽहम् । तदनु श्रौतस्मार्तधुरन्धराणाम्, आयुर्वेदागमकोविदानां वैद्यरत्नपदवीधारिणां पितृचरणानां सहजकृपापात्रताङ्कितेन मया व्याख्याकर्मणि पदं न्यधायि । ये च अस्फुटवाचम्, अक्षरज्ञानविधुरमपि मां बाल्ये वयसि प्रथमप्रथमम् अमरकोषमेव प्राबोधयन् ।

तेषां समेषामन्येषाञ्च गुरुजनानामाशीर्वादपरम्परया कोषस्यास्य व्याख्या प्रत्यूहलेशं विनैव पूर्णतामगात् । सोऽयमिदानीम् **'अनेकार्थध्वनिमञ्जरी-द्विरूपकोषै-काक्षरकोषैश्च'** समुपबृंहितः स्वकीयामधिकाधिकामुपयोगितां बिभ्राणः सुधीजुषां विदुषां करसरोरुहस्पर्शसुखानन्दसन्दोहमनुभविष्यतीति बाढं विश्वसिमि ।

अन्ते सकलशब्दविग्रहात्मकं साम्बं सदाशिवं प्रार्थयंस्तेषां तेषामधमर्णभावमङ्गीकरोमि येषां कृपालेशतोऽपि ग्रन्थस्यास्य कलेवरकल्पना समभूत् । ग्रन्थेऽस्मिन् यत्र कुत्रचित् काश्चित् त्रुटयः शीशकाक्षरसंयोजकानां प्रमादाद् दृष्टिदोषाद् वा स्युः सहृदयधुरीणाः सुधियः ताः सम्मार्ज्य सर्वथाऽस्माननुगृहीष्यन्त्विति । पर्यन्ते व्याख्याकर्तुर्भरतवाक्यायितमिदं पद्यम्—

**अमरगणसमृद्धे दैत्यगन्धर्वपुम्भिः क्षितिपुरगिरिसिंहैः काननाद्यैश्च युक्ते ।**
**अमरकृतिसमुद्रे यत्नपूर्वं निमज्य प्रचिनुत बुधवर्य्याः शब्दरत्नानि कामम् ॥**

आषाढशुक्ले १५ गुरौ
२०३७ संवत्

विद्वद्विधेयः—
**डॉ० ब्रह्मानन्दत्रिपाठी**

## वैदिककोष और उनके रचयिता

| कोष | रचयिता | कोष | रचयिता |
|---|---|---|---|
| निघण्टु | अज्ञात | निरुक्त | गार्ग्य |
| निरुक्त | आग्रायण | ,, | गालव |
| ,, | औपमन्यव | ,, | तैटीकि |
| ,, | औदुम्बरायण | ,, | वार्ष्यायणि |
| ,, | और्णवाभ | ,, | शाकपूणि |
| ,, | कात्थक्य | ,, | स्थौलाष्ठीवि |
| ,, | क्रौष्टुकि | ,, | यास्क |

## संस्कृत साहित्य के प्राचीन कोष तथा कोषकार*

| कोष | कोषकार | कोष | कोषकार |
|---|---|---|---|
| नामलिङ्गानुशासन | अमरसिंह | विश्वप्रकाश | महेश्वर |
| कल्पद्रुकोष | केशव | शब्दभेदप्रकाश | ,, |
| अभिधानचिन्तामणि | जिनदेवमुनीश्वर | नानार्थशब्दकोष | मेदिनीकर |
| शिलोञ्छकोष | ,, | मेदिनीकोष | ,, |
| शब्दार्णव | दुर्गादास | वैजयन्ती | यादवप्रकाश |
| शब्दार्णव | वाचस्पति | लिङ्गविशेषविधि | वररुचि |
| प्रमाणनाममाला | धनञ्जय | पञ्चतत्वप्रकाश | वेणीदत्त |
| एकाक्षरकोष | पुरुषोत्तमदेव | नानार्थसमुच्चय | शाश्वत |
| द्विरूपकोष | ,, | एकाक्षरीनाममाला | विश्वशम्भु |
| त्रिकाण्डशेष | ,, | गणितनाममाला | हरिदत्त |
| हारावली | ,, | अभिधानरत्नमाला | हलायुध |
| वर्णदेशना | ,, | शारदीनाममाला | हर्षकीर्ति |
| द्विरूपकोष | भरतसेनमल्लिक | अनेकार्थसंग्रह | हेमचन्द्र |
| मातृकानिघण्टु | महीदास | अभिधानचिन्तामणि | ,, |
| अनेकार्थध्वनिमञ्जरी | महाक्षपणक | निघण्टुशेष: | ,, |
| अव्ययकोष | महादेव | लिङ्गानुशासनम् | ,, |

* यहाँ आयुर्वेदिक तथा पाली साहित्य के कोषों तथा कोषकारों का उल्लेख अप्रासंगिक होने के कारण नहीं किया गया है।

| कोष | कोषकार | कोष | कोषकार |
|---|---|---|---|
| लक्ष्मीनिवास | शिवराम | शब्दार्णव | काशिनाथ |
| उत्पलिनी | व्याडि | लोकप्रकाश | क्षेमेन्द्र |
| संसारावर्त | विक्रमादित्य | अनेकार्थध्वनिमंजरी | गदसिंह |
| नाममाला | कात्य | शब्दमाला | गोपीनाथ |
| त्रिकाण्ड | भागुरि | नामावली | गोवर्द्धन |
| नानार्थसङ्ग्रह | अजय | शब्दसागर | गोविन्दशर्मा |
| अनेकार्थकोष | मङ्ख | शब्दचन्द्रिका | चक्रपाणिदत्त |
| नानार्थार्णव | केशवस्वामी | अभिधानतन्त्र | जटाधराचार्य |
| शब्दरत्नसमन्वय | शाहजी महाराज | कोमलकोषसंग्रह | तीर्थस्वामी |
| शब्दरत्नाकर | सुन्दरगणि | गीर्वाणभाषाभूषण | त्रिविक्रमाचार्य |
| उक्तिरत्नाकर | ,, | नानार्थरत्नमाला | दण्डनाथ |
| धातुरत्नाकर | ,, | नाममाला | दुर्गाचार्य |
| अमरमाला | अमरदत्त | नामार्थसमुच्चय | धरणीश |
| शब्दरत्नाकर | वामनभट्ट | कविजीवन | धर्मराज |
| नानार्थरत्नमाला | इरुगदण्डाधिनाथभा० | वर्णाभिधान | नन्दनभट्ट |
| नानार्थमञ्जरी | राघव | राजवल्लभ | नारायणदास |
| कल्पतरु | विश्वनाथ | रत्नकोष | नृसिंहमुनि |
| नाममालिका | भोजराज | मङ्खकोष | मङ्ख |
| एकाक्षरनामाला | सौभरि | त्रिरूपकोष | बिल्हण |
| द्व्यक्षरनाममाला | ,, | उणादिकोष | रामशर्मा |
| वस्तुरत्नकोष | अज्ञात | शब्दचन्द्रिका | बाणभट्ट |
| आख्यातचन्द्रिका | महामल्ल | नाममाला | भोजराज |
| कविरहस्य | हलायुध | शब्दरत्नावली | मथुरेश |
| वाङ्मयार्णव | रामावतारशर्मा | पदचन्द्रिका | मयूरभट्ट |
| मुक्तावली | श्रीधर | अनेकार्थतिलक | महीप |
| शब्दसंग्रह | अगस्त्य | शब्दरत्नाकर | महीप |
| नामसंग्रहमाला | अप्पय्यदीक्षित | सुप्रसिद्धपदमञ्जरी | मुरारि |
| एकाक्षरनाममाला | अमरसिंह | शब्दार्थनिर्णय | राक्षस |
| प्रयुक्तपदमञ्जरी | कालिदास | शब्दमाला | रामेश्वर |

| कोष | कोषकार | कोष | कोषकार |
|---|---|---|---|
| रूपमञ्जरीनाममाला | रूपचन्द्र | द्विरूपकोष | श्रीहर्ष |
| कविमञ्जरी | वल्लभ | श्लेषार्थपदसंग्रह | श्रीहर्ष |
| शब्दरत्नाकर | वामनभट्ट | लिङ्गप्रकाश | सारेश्वर |
| शब्दार्थचिन्तामणि | विठ्ठलाचार्य | भुवनप्रदीपिका | सार्वभौममिश्र |
| कोषकल्पतरु | विश्वनाथ | शब्दरत्नाकर | सुन्दरगणि |
| शब्दार्थकल्पतरु | वेङ्कट | अनेकार्थतिलक | सामभव |
| संयमिनाममाला | शंकर | कविदीपिकानिघण्टु | विक्रमादित्य |
| शिवकोष | शिवदत्त | दशदीपनिघण्टु | वेदान्ताचार्य |

## कतिपय विशिष्ट कोष

| | |
|---|---|
| एकवर्णसंग्रह | साध्यकोष |
| ऊष्मविवेक | मुनिकोष |
| चकारभेद | पालकोष |
| जकारभेद | गोवर्धनकोष |
| सकारभेद | चन्द्रकोष |
| लिङ्गप्रकाश | चरककोष |
| सुभूतिकोष | महाखण्डनकोष |
| दण्डिकोष | कोषसार |
| बीजकोष | सारस्वताभिधान |
| रत्नकोष | संसर्गावर्त |

## कतिपय अन्य कोषकार जिनकी कृतियों के नाम अज्ञात हैं—

| | |
|---|---|
| कात्यायन | रुद्र |
| मंगल | वोपालित |
| महेश | साहसाङ्क |
| रभस | हड्डचन्द्र |
| अमरदत्त | दामोदर |
| गङ्गाधर | धर्मदास |
| चन्द्रगोमी | भागुरि |
| तारपाल | भोगीन्द्र |

| | |
|---|---|
| मार्तण्ड | विक्रमादित्य |
| रन्तिदेव | विश्वरूप |
| राजशेखर | भट्टमल्ल |
| राजमुकुट | विश्वलोचन |
| धरणीधर | सोमनन्दी |
| वाचस्पति | साहसाङ्क |
| राजदेव | कात्यायन |
| वामन | वाग्भट्ट |
| मुकुट | व्यादि |



।। श्रीः ।।

श्रीमद् अमरसिंहविरचितं

नामलिङ्गानुशासनम्

# अमरकोषः

## रत्नप्रभाऽऽख्यव्याख्यया संवलितः

---

## अथ प्रथमकाण्डम्

मङ्गलाचरणम्

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।**
**सेव्यतामक्षयो धीराः स श्रिये चामृताय च ।। १ ।।**

व्याख्याकर्तुः—मङ्गलाचरणम्

**अकारादिहकारान्त-शब्दविग्रहबन्धुरम् ।**
**कलये तमहं शश्वत् स्मेरास्यं गणनायकम् ।। १ ।।**
**शब्दागममहासिन्धु-निस्तारणपटीयसः ।**
**गुरून् नत्वाऽक्षरब्रह्म-चरिवस्यां तनोम्यहम् ।। २ ।।**

**व्याख्या**—यद्यपि श्रीमदमरसिंहो बुद्धमतानुयायीति प्रथमेनानेन पद्येन विदितं भवति तथाप्येतस्य पद्यस्य शिवसम्बन्धिव्याख्यानं न सुतरां रोचते । अतस्तदेव प्रागुल्लिख्य पश्चादमुष्य मतानुयायि व्याख्यानं करिष्ये ।

**यस्येति**—भो धीराः ! सुधियः !, अक्षयः विनाशरहितः, सः शङ्करः, सेव्यताम् भक्तैरिति शेषः । यस्य लोकोत्तरशक्तिवतः, अगाधस्य अनन्तमहिमाशालिनः, ज्ञानदयासिन्धोः ज्ञानदययोः समुद्रस्वरूपस्य, किं वा सर्वज्ञाननिधेः, आशुतोषस्य च अनघाः कल्मषरहिता अतएव पवित्राश्च, क्षमाशान्तिप्रमुखाः, गुणाः

सद्गुणाः, सन्ति, किमर्थं सेव्यतामिति जिज्ञासयाऽऽह—श्रियै धमार्थकामानामुपलब्ध्यर्थं, तथा अमृताय मोक्षप्राप्त्यर्थञ्च ( सेव्यतामिति )। स भगवाञ्छिवः चतुर्वर्गप्रदातेति शास्त्रसम्मतः।

अथ क्रमप्राप्तं बुद्धमतानुयायिव्याख्यानम्—हे धीराः ! धैर्यादिगुणगणसम्पन्नाः पुमांसः, ज्ञानदयासिन्धोः ज्ञानस्य दयायाश्च सिन्धुः समुद्रः, तस्य, अगाधस्य न गाधस्तलस्पर्शो यस्य तस्य, लोकवृत्तालोकनैरतिगभीरस्येतिभावः, अनघाः सर्वजनपावनसमर्थाः, शीलसौजन्यादिगुणाः सन्ति, सः सुगताभिधो बुद्धः, श्रिये कल्याणाय, अमृताय मुक्तये च भवद्भिः भवन्मतानुयायिभिः सर्वैः सेव्यताम् ॥ १ ॥

**हिन्दी**—विद्वज्जनों ! जो अलौकिकशक्ति सम्पन्न, अनन्तमहिमावान्, ज्ञान और दया का समुद्र है, जिसके पवित्र क्षमा शान्ति आदि अनेक सद्गुण सर्वविदित हैं, इसे उस अविनाशी भगवान् शिव की ऐहलाकिक और पारलौकिक सुखों की प्राप्ति के लिए सबको उपासना करनी चाहिए।

बुद्ध पक्ष में—धीरता आदि गुणसम्पन्न पुरुषों ! ज्ञान और दया के समुद्र अत्यन्त गम्भीर विचारवान् सकललोकपावन समर्थ गुणों से परिपूर्ण उस भगवान् बुद्ध की कल्याण और मोक्ष प्राप्ति के लिए सबको उपासना करनी चाहिए ॥१॥

**वक्तव्य**—यद्यपि 'अमरसिंह' बुद्धमतानुयायी थे, ऐसी प्रसिद्धि है, किन्तु उक्त मङ्गलाचरण के लिए प्रयुक्त पद्य से शिव सम्बन्धी अर्थ भी अभिव्यक्त होता है, अतः उस अर्थ का भी यहाँ उल्लेख कर दिया गया है।

## परिभाषाप्रकरणम्

**समाहृत्यान्यतन्त्राणि सङ्क्षिप्तैः प्रतिसंस्कृतैः।**
**सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥**

**व्याख्या**—पद्येऽस्मिन् अभिधेयप्रयोजनं प्रदर्शयति—**समाहृत्येति**। अन्यतन्त्राणि अन्येषां व्याडिप्रभृतीनां तन्त्राणि नामलिङ्गानुशासनानि, नामानि च लिङ्गानि च तानि, अनुशिष्यन्ते बोध्यन्ते अनेन तानि, समाहृत्य एकीकृत्य सङ्गृह्येत्यर्थः, सङ्क्षिप्तैः परिमितशब्दैः, प्रतिसंस्कृतैः यथायथं विनियोजितैः, वर्गैः प्रकरणैः, समन्वितम्, अत एव सम्पूर्णम् अखिलं, मया अमरसिंहेन, उच्यते कथ्यते सर्वेषामुपकारायेति, शेषः ॥ २ ॥

**हिन्दी**—इस पद्य द्वारा ग्रन्थकार ने ग्रन्थ निर्माण का प्रयोजन बतलाया है। व्याडि आदि कोषकारों के कोष-ग्रन्थों को एकत्रित करके उनका सङ्क्षेपण

तथा प्रतिसंस्कार कर उस विषय का वर्गों तथा काण्डों में विभाजन कर इस नामलिङ्गानुशासन नामक **'अमरकोष'** की रचना की है ॥ २ ॥

**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।**
**स्त्री-पुं-नपुंसकं ज्ञेयं तद् विशेषविधेः क्वचित् ॥ ३ ॥**
**भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।**
**कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥ ४ ॥**
**त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।**
**निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ५ ॥**

**व्याख्या**—अथ लिङ्गनिर्णयोपायं परिभाषते—**प्रायश इति**–अस्मिन्नामलिङ्गानुशासनाऽऽख्येऽमरकोषे प्रायशः अधिकांशतया, रूपभेदेन घञ्, टाप्, ङीप्, विसर्गाऽनुस्वादिविशेषैः स्त्री-पुं-नपुंसकं ज्ञेयं, बोध्यं, क्वचित् तद् विशेषविधेः स्त्री-पुं-नपुंसकादीनां विशिष्यसङ्केतात् स्त्री-पुं-नपुंसकमिति ज्ञेयम् ।

**रूपभेदेन**—'लक्ष्मीः पद्मालया पद्मा' । इत्यत्र स्त्रीलिङ्गस्य । पिनाकोऽजगवं धनुः' । इत्यत्र पुंल्लिङ्ग-नपुंसकयोः । कुत्रचित् लिङ्गशब्दसाहचर्य्यात्, तन्निर्णयः । यथा—'भानुः करो मरीचिः स्त्री-पुंसयोर्दीधितिः स्त्रियाम्' इत्यादिः ।

**साहचर्यात्**—यत्र निश्चितलिङ्गवतां शब्दानां सहचरभावात् लिङ्गनिर्णयो भवति सः 'साहचर्यपदव्यपदेशः ।' तद्यथा—'अश्वयुगश्विनी' । भानुः करो—मरीचिः स्त्रीपुंसयोः' । 'वियद्विष्णुपदम्' । एषूदाहरणेषु—अश्विनी-कर-विष्णु-पदानां साहचर्यात् क्रमेण अश्वयुक्–भानु–वियच्छब्दानां स्त्रीपुंनपुंसकत्वमवधेयम् ।

**क्वचित्**—कुत्रचित् स्थलेषु ततोऽपि विशेषोपादानात् सुस्पष्टं लिङ्गनिर्देशः । यथा—'भेरी स्त्री दुन्दुभिः पुमान्' । 'रोचिः शोचिरुभे क्लीबे' ।

**तद्विशेषविधेः**—अर्थात् स्त्री-पुं-नपुंसकलिङ्गानां, वचनस्य च विशिष्यवर्णनात् समाधानं भवति । तद् यथा—'गृहाः पुंसि च भूम्न्येव' । 'मरीचिः स्त्रीपुंसयोः' । 'दीधितिः स्त्रियाम्' । 'श्रुतिः स्त्री' । 'गुणे शुक्लादयः पुंसि' । 'तुवरस्तु कषायोऽस्त्री' । 'रमाः पुंसि' । 'भेरी स्त्री दुन्दुभिः' पुमान् । इत्यादि ॥ ३ ॥

**हिन्दी**—इस अमरकोष में प्रायः रूपभेद से स्त्रीलिंग, पुंल्लिग और नपुंसकलिंग के शब्दों का प्रयोग किया गया है । कहीं-कहीं इनको समझाने के लिए विशेष विधि का प्रयोग किया गया है । जिसका वर्णन संस्कृत व्याख्या में उदाहरण सहित कर दिया गया है ॥ ३ ॥

**भेदाख्यानायेति**—अत्र कोषसाहित्ये-अनुक्तानां स्वकीयपर्यायावसरेष्वपठितानां भिन्नलिङ्गानां भिन्नं लिङ्गं येषां पदानां तेषां, शब्दानां, भेदाख्यानाय लिङ्गभेद-प्रदर्शनाय द्वन्द्वः एकशेषः, न कृतः। क्रमाद् ऋते क्रमं प्रसङ्गं तस्माद् ऋते विना, अर्थात् प्रसङ्गमन्तरा, सङ्करो न कृतः, भिन्नलिङ्गवतां शब्दानां समस्थाननिवेशनं सङ्करः, तस्य प्रयोगो न विहितः।

**द्वन्द्वः**—'परिवल्लिङ्गं द्वन्द्वतत्पुरुषयोः'। इति पाणिनीयशासनात् लिङ्गभ्रमे हेतुः। अतः द्वन्द्वो न कृतः। यथा—१. 'कुलिशं भिदुरं पविः'। अत्र 'कुलिश-भिदुरपवयः'। एवं प्रकारकः प्रयोगो न विहितः। २. 'दैवतादेवतामराः'। इति न कृतम्।

**एकशेषः**—अस्मिन् शिष्यमाणलिङ्गस्यैव बोधो बोभवीति। यथा—'नभः खं श्रावणो नभाः' इत्यत्र 'खश्रावणौ तु नभसी' इत्येवमेकशेषो न कृतः। समलिङ्ग-वतां शब्दानां तदवैषम्याद् द्वन्द्वैकशेषौ विहितावेव। यथा—१. 'स्वर्गनाकत्रिदिव-त्रिदशालयाः'। अत्र सर्वेऽपि शब्दाः पुंवाचकाः। २. 'पादा रश्म्यङ्घ्रितुर्यांशाः'। अत्रापि सैव स्थितिः। ३. 'मातापितरौ पितरौ'। एवमादिबोध्यम्।

**सङ्करः**—भिन्नलिङ्गवतां शब्दानां मिश्रणं सङ्करः पूर्वं व्याख्यातः। अयं हि सङ्करः क्रमप्राप्तस्थलेषु कृत एव अन्यत्र तु स्पष्टमेव लिङ्गभेदो निर्दिष्टः। प्रसङ्गं विना सङ्करो न कृतः। यथा—'स्तवः स्तोत्रं स्तुतिर्नुतिः। अत्रोदाहरणे स्तवः पुल्लिङ्गात्मकः, स्तोत्रं नपुंसकलिङ्गातमकम्, स्तुतिः नुतिः च स्त्रीलिङ्गमाश्रयतः। 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः'। अत्र पद्यांशे क्रमेण नपुंसक—स्त्री—पुंल्लि-ङ्गानां निर्देशो विहितो न सङ्करः। किन्त्वन्यत्र प्रसङ्गप्राप्ते भिन्नलिङ्गानां शब्दानां सङ्करो दृश्यते। यथा—'वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिः। अत्र द्वन्द्वसङ्करौ। एव-मग्रेऽपि ॥ ४ ॥

**हिन्दी**—पर्यायों के वर्णन के अवसर में जहाँ शब्दों के आगे पीछे लिंगों का उल्लेख नहीं किया गया है, वहाँ समझने में कठिनाई न हो इस भेद को दिखलाने के लिए इस कोष में द्वन्द्व तथा एकशेष समास और संकर ( भिन्न-भिन्न लिंग वाले शब्दों का एक साथ मिश्रण ) नहीं किया गया है ॥ ४ ॥

**त्रिलिङ्ग्यां**—त्रयाणां लिङ्गानां समाहारः, तस्यां, त्रिषु इति पदं प्रयुक्तम्। अर्थात् यस्य शब्दस्य प्रयोगस् त्रिषुलिङ्गेषु भवति तदर्थं त्रिषु शब्दप्रयोगः कृतः। यथा—त्रिषु स्फुलिङ्गोऽग्निकणः' 'त्रिषु तूत्तरौ····दाविकसारवौ'।

**मिथुने**—यत्र तु स्त्री-पुंसात्मकस्य किं वा पुं-नपुंसकात्मकस्य शब्दस्य प्रवृत्तिर्भवति, तत्र 'द्वयोः' इति पदं ज्ञेयम्। यथा—'द्वयोः प्रणाली पयसः'। अत्र प्रणालशब्दः स्त्री-पुंसयोः। द्वयोर्ज्वालकीलौ', स्त्री-पुंसयोः।

**निषिद्धलिङ्गं**—निषिद्धं निषेधीकृतं लिङ्गं यस्य तत् पदं, शेषार्थम् अवशिष्टलिङ्गबोधकं बोध्यमिति तात्पर्यः। यथा—'वज्रमस्त्री'। अत्र स्त्रीलिङ्गस्य निषिद्धत्वात् पुं-नपुंसकता वज्रशब्दस्य ज्ञेया।

**त्वन्ताथादि**—तु शब्दः अन्ते यस्य तत् **त्वन्तम्**। अथ शब्दः आदौ यस्य तत् **अथादि**। त्वन्तञ्च अथादि च नामपदं, लिङ्गपदं, सर्वनामपदम् अव्ययपदञ्च पूर्वभाक् पूर्वपदसम्बन्धि न भवति अपितु तस्योत्तरपदेन सह सम्बन्ध इति सिद्धान्तः। **नामपदं** यथा—'पुनर्नवा तु शोथघ्नी'। 'नगरी त्वमरावती'। **लिङ्गपदम्**—'पुंसि त्वन्तर्द्धिः'। शस्तं चाथ त्रिषु द्रव्ये'। **सर्वनामपदम्**—'तस्य तु प्रिया'। **अव्ययपदम्**—'वा तु पुंसि'। **अथादि**—वातायनं गवाक्षोऽथ', अनुक्रोशोऽप्यथो हसः'। 'तपा माघेऽथ फाल्गुने॥ ५॥

**हिन्दी**—प्रायः विशेषण शब्दों का प्रयोग विशेष्य के अनुसार चलने के कारण उनका लिंग परिवर्तन हो जाता है, अतः ऐसे शब्द जिनका तीनों लिगों में प्रयोग होता है उनके साथ **'त्रिषु'** शब्द का तथा जो शब्द उभयलिंगात्मक ( पुल्लिग-स्त्रीलिंग, या पुल्लिग-नपुंसकलिंग ) हों उनके लिए **'द्वयोः'** शब्द का प्रयोग किया गया है।

जहाँ किसी लिंग विशेष का निषेध किया गया है वहाँ उससे शेष लिगों में उस शब्द का प्रयोग समझना चाहिए। श्लोक के बीच में जिस शब्द के साथ **'तु'** अथवा **'अथ** या **अथो'** शब्दों में से किसी का प्रयोग हुआ हो, उस शब्द से पूर्व शब्द का सम्बन्ध समाप्त हो जाता है। शेष संस्कृत व्याख्या में दिये हुए उदाहरणों पर ध्यान दें॥ ५॥

**वक्तव्य**—अमरकोष पढ़कर केवल याद कर लेने से ही तब तक ठीक-ठीक समझ में नहीं आ सकता जब तक श्लोक संख्या २ से लेकर ५ तक की व्याख्या को आप भलीभाँति मन में नहीं बैठा लेते। अन्यथा प्रयोग करने पर आप पर्यायों तथा लिंगों की पग-पग पर भूल करते जायेंगे, फलतः आपका श्रम व्यर्थ जायेगा।

इति परिभाषाप्रकरणम्।

# १. अथ स्वर्गवर्गः

[१]स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥ ६ ॥
[२]अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ ७ ॥
आदितेया दिविषदो लेखा अदितिनन्दनाः ।
आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥ ८ ॥
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥ ९ ॥
[३]आदित्यविश्ववसवस्तुषिताऽऽभास्वरानिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥ १० ॥
[४]विद्याधरोऽप्सरो यक्षरक्षोगन्धर्वकिन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥ ११ ॥
[५]असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः ।
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२ ॥

---

( १ ) नव स्वर्गलोकस्य नामानि, दिवशब्दो नपुंसकलिङ्गेऽपि—'मन्दरः सैरिभिः शक्रभवनं खं दिवं नभः' । इति त्रिकाण्डशेषात् । [ स्वर्ग के ९ नाम । ] ( २ ) षड्विंशति नामानि देवानाम् । [ देवताओं के २६ नाम । ] ( ३ ) नव नामानि आदित्यादीनाम् । गणदेवतानां विवरणं वाचस्पतिकोषे—

'आदित्या द्वादशप्रोक्ता विश्वेदेवा दशस्मृताः ।
वसवश्चाष्ट सङ्ख्याताः षट्त्रिंशत् तुषिता मताः ॥
आभास्वराश्चतुष्षष्टिर्वाताः पञ्चाशदूनकाः ।
महाराजिकनामानो द्वे शते विंशतिस्तथा ॥
साध्या द्वादशविख्याता रुद्राश्चैकादशस्मृताः ।'

गणदेवताओं की संख्या का विवरण इस प्रकार वाचस्पतिकोष में दिया गया है—आदित्य १२, विश्वेदेवा १०, वसु ८, तुषित ३६, आभास्वर ६४, मरुत ( वात ) ४९, महाराजिक २२०, साध्य १२ और रुद्र ११ होते हैं । ( ४ ) विद्याधरादयो देवयोनिविशेषो दश । [ देवयोनियों के १० नाम । ] ( ५ ) असुराणां दश-नामानि । [ असुरों के १० नाम । ]

[1]सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ॥ १३ ॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।
मुनीन्द्रः श्रीघनः शास्ता मुनिः [2]शाक्यमुनिस्तु यः ॥ १४ ॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥ १५ ॥
[3]ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।
हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः ॥ १६ ॥
धाताऽब्जयोनिर्द्रुहिणो विरञ्चिः कमलासनः ।
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः ॥ १७ ॥
[ नाभिजन्माण्डजः पूर्वो निधनः कमलोद्भवः ।
सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ॥ ]
[4]विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ ॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥ १९ ॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥ २१ ॥
विश्वम्भरः कैटभजिद् विधुः श्रीवत्सलाञ्छनः ।
[ पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ।
जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः ॥ ]

---

( १ ) अष्टादशनामानि बुद्धस्य । [ बुद्ध के १८ नाम । ] ( २ ) सप्त-नामानि शाक्यमुनेः । [ शाक्यमुनि ( बुद्धविशेष ) के ७ नाम । ] ( ३ ) ब्रह्मणो विंशति नामानि । नाभिजन्मेत्यादीनि नव नामानि प्रक्षिप्तानि सन्ति । [ ब्रह्मा के २९ नाम । ] ( ४ ) विष्णोः ऊनचत्वारिंशत् नामानि, पुराणपुरुषेति सप्त प्रक्षिप्तानि । [ विष्णु के ४६ नाम । ]

[1]वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥ २२ ॥
[2]बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।
रेवतीरमणो रामः कामपालो हलायुधः ॥ २३ ॥
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।
सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥ २४ ॥
[3]मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥ २५ ॥
शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥ २६ ॥
ब्रह्मसूर्विश्वकेतुः [4]स्यादनिरुद्ध उषापतिः ।
[5]लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥ २७ ॥
[ इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।
भार्गवी लोकजननी क्षीरसागरकन्यका ॥ ]
[6]शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं[7] सुदर्शनः ।
[8]कौमोदकी गदा [9]खड्गो नन्दकः [10]कौस्तुभो मणिः ॥ २८ ॥

---

( १ ) द्वे नामनी वसुदेवस्य । [ वसुदेव के २ नाम । ] ( २ ) सप्तदश बलरामस्य नामनि । [ बलराम के १७ नाम । ] ( ३ ) कामदेवस्य एकविंशति नामानि । [ कामदेव के २१ नाम । ] ( ४ ) अनिरुद्धस्य नामद्वयम् । [ अनिरुद्ध के २ नाम । ] कामदेवस्य पञ्च बाणाः—

उन्मादनस्तापनश्च शोषणस्तम्भनस्तथा ।
सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः ॥

कामदेव के बाणों के नाम—१. उन्मादन, २. तापन, ३. शोषण ४. स्तम्भन ५. सम्मोहन । ( ५ ) लक्ष्म्याश्चतुर्दश नामानि । [ लक्ष्मी के १४ नाम । ] ( ६ ) विष्णोः शङ्खस्य नामैकम् । [ विष्णु के शंख का नाम । ] ( ७ ) विष्णोश्चक्रस्य नामैकम् । [ विष्णु के चक्र का नाम । ] ( ८ ) विष्णोर्गदाया नामैकम् । [ विष्णु की गदा का नाम । ] ( ९ ) विष्णोः खड्गस्य नामैकम् । [ विष्णु की तलवार का नाम । ] ( १० ) विष्णोर्मणेर्नामैकम् । [ विष्णु की कौस्तुभमणि का नाम । ]

[ [1]चापः शार्ङ्गंमुरारेस्तु [2]श्रीवत्सो लाञ्छनं स्मृतम् ।
[3]अश्वाश्च शैव्य–सुग्रीव–मेघपुष्प–बलाहकाः ॥
[4]सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः । ]
[5]गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।
नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ २९ ॥
[6]शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः ॥ ३० ॥
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३१ ॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३२ ॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३३ ॥
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥ ३४ ॥
[ अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः । ]
[7]कपर्दोऽस्य जटाजूटः [8]पिनाकोऽजगवं धनुः ।
[9]प्रथमाः स्युः पारिषदा [10]ब्राह्मीत्याद्यास्तु मातरः ॥ ३५ ॥

---

( १ ) विष्णोर्धनुषो नामैकम् । [ विष्णु के धनुष का नाम । ] ( २ ) विष्णोर्वक्षस्थलस्थलाञ्छनस्यैकम् । [ विष्णु के वक्षस्थल के चिह्न का नाम । ] ( ३ ) विष्णोरश्वानां चत्वारि नामानि । [ विष्णु के घोड़ों के ४ नाम । ] ( ४ ) विष्णोः सारथेः, मन्त्रिणः, भ्रातुः च एकैकं नाम । [ विष्णु का सारथी–दारुक, मन्त्री–उद्धव, छोटा भाई–गद । ( ५ ) विष्णुवाहनस्य नव नामानि । [ गरुड़ के ९ नाम । ] ( ६ ) अष्टाचत्वारिंशत् शिवस्य नामानि । [ शिव के ४८ नाम । ] ( ७ ) शम्भोर्जटाजूटस्य नामैकम् । [ शिव की जटा । ] ( ८ ) शम्भोर्धनुषो नामद्वयम् । [ शिवधनुष के २ नाम । ] ( ९ ) शिवसेवकानां नामनी । [ शिव के गणों के २ नाम । ] ( १० ) ब्राह्म्यादिशक्तीनामेकैकं नाम । [ ब्रह्मा आदि देवताओं की शक्तियों के १-१ नाम । ]

[ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥ ]
[1]विभूतिर्भूतिरैश्वर्यम[2]णिमादिकमष्टधा ।
[ अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्व वशित्वं चाष्टसिद्धयः ॥ ]
[3]उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ ३६ ॥
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका ॥ ३७ ॥
[ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा । ]
[4]विनायको विघ्नराज–द्वैमातुर–गणाधिपाः ।
अप्येकदन्त–हेरम्ब–लम्बोदर–गजाननाः ॥ ३८ ॥
[5]कार्तिकेयो महासेनः शरजन्मा षडाननः ।
पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ३९ ॥
बाहुलेयस्तारकजिद् विशाखः शिखिवाहनः ।
षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४० ॥
[ [6]शृङ्गी भृङ्गी रिटिस्तुण्डी [7]नन्दिको नन्दिकेश्वरः ।
[8]कर्ममोटी तु चामुण्डा चर्ममुण्डा च चर्चिका ॥ ]
[9]इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः ।
वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥ ४१ ॥
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा ॥ ४२ ॥

( १ ) विभूतीनां नामानि त्रीणि । [ विभूति के ३ नाम । ] ( २ ) अणिमाद्यष्टसिद्धीनां नामानि । [ अणिमा आदि ८ सिद्धियों के नाम । ] ( ३ ) एकविंशति पार्वत्याः । [ पार्वती के २१ नाम । ] ( ४ ) अष्टौ नामानि गणेशस्य । [ गणेश के ८ नाम । ] ( ५ ) कीर्तिकेयस्य सप्तदश नामानि । [ कार्तिकेय के १७ नाम । ] ( ६ ) शृङ्गयादिशिवगणानां नामानि [ शृंगी भृंगी रिटि तुण्डी ये शिव के गणों के नाम हैं । ] ( ७ ) नन्दिकेश्वरस्य नामद्वयम् । [ नन्दी के २ नाम । ] ( ८ ) चामुण्डायाश्चत्वारि नामानि । [ चामुण्डा के ४ नाम । ] ( ९ ) पञ्चत्रिंशद् नामानि इन्द्रस्य । [ इन्द्र के ३५ नाम । ]

वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४३ ॥
सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।
आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ॥ ४४ ॥
[1]पुलोमजा शचीन्द्राणी [2]नगरी त्वमरावती ।
[3]हय उच्चैःश्रवाः, [4]सूतो मातलिर्नन्[5]दनं वनम् ॥ ४५ ॥
स्यात् [6]प्रासादो वैजयन्तो [7]जयन्तः पाकशाशनिः ।
[8]ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः ॥ ४६ ॥
[9]ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।
शतकोटि स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥ ४७ ॥
[10]व्योमयानं विमानोऽस्त्री [11]नारदाद्याः सुरर्षयः ।
[12]स्यात्सुधर्मा देवसभा [13]पीयूषममृतं सुधा ॥ ४८ ॥
[14]मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।
[15]मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ४९ ॥
[16]पञ्चैते देवतरवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५० ॥

---

( १ ) इन्द्रस्य भार्यायाः त्रीणिः नामानि । [ इन्द्र की स्त्री के ३ नाम । ] ( २ ) इन्द्रनगर्या एकं नाम । [ इन्द्र की नगरी का नाम । ] ( ३ ) इन्द्रस्याश्वस्य नामैकम् । [ इन्द्र के घोड़े का नाम । ] ( ४ ) इन्द्रस्य सारथेर्नामैकम् । [ इन्द्र के सारथी का नाम । ] ( ५ ) इन्द्रस्योद्यानस्यैकं नाम । [ इन्द्र के बगीचा का नाम । ] ( ६ ) इन्द्रप्रासादस्यैकम् । [ इन्द्र के महल का नाम । ] ( ७ ) इन्द्रपुत्रस्य नामैकम् । [ इन्द्र के पुत्र का नाम । ] ( ८ ) इन्द्रगजस्य चत्वारि नामानि । [ इन्द्र के हाथी के ४ नाम । ] ( ९ ) वज्रस्य नामानि दश । [ वज्र के १० नाम । ] ( १० ) द्वे नामनी विमानस्य । [ विमान के २ नाम । ] ( ११ ) नारद, भारत, पर्वत, तुम्बुरु, देवल प्रभृतीनामेकं नाम । [ नारद आदि देव ऋषियों का नाम । ( १२ ) देवसभाया नामैकम् । [ देवसभा का नाम । ] ( १३ ) अमृतस्य त्रीणि नामानि । [ अमृत के ३ नाम । ] ( १४ ) स्वर्गगङ्गायाः चत्वारि नामानि । [ स्वर्गगङ्गा के ४ नाम । ] ( १५ ) सुमेरुपर्वतस्य पञ्चनामानि । [सुमेरु पर्वत के ५ नाम] ( १६ ) पञ्च देववृक्षविशेषाः । [५ देववृक्ष ।]

[1]सनत्कुमारो वैधात्रः, [2]स्वर्वैद्यावश्विनीसुतौ ।
नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५१ ॥
स्त्रियां [3]बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।
[4]हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५२ ॥
[5]अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५३ ॥
बर्हिःशुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५४ ॥
रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥ ५५ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्वस्तु[6] वाडवो वडवानलः ॥ ५६ ॥
[7]वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ।
[8]त्रिषु स्फुलिङ्गोऽग्निकणः, [9]सन्तापः संज्वरः समौ ॥ ५७ ॥

---

( १ ) ब्रह्मणः पुत्रस्य द्वे नामनी । [ ब्रह्मा के पुत्र के २ नाम । ] ( २ ) अश्विनीकुमारयोः षड् नामानि द्विवचनान्तानि । [ अश्विनी कुमारों के ६ नाम । ] ( ३ ) उर्वशीप्रमुखानां द्वे नामनी । तत्र सान्तो नित्यबहुवचनान्तश्च अप्सरश्शब्दः । [ अप्सराओं के २ नाम । ] ( ४ ) देवगायकानाम् एकैकं नाम । यथा—हाहा-हूहू-तुम्बरु-वृषणश्व-विश्वावसु-चित्ररथादयः । भोजस्तु-हाहा-हुहु शब्दयोरव्ययत्व-मुभयह्रस्वत्वञ्चाह । [ हाहा-हूहू आदि गन्धर्वों के नाम । ] ( ५ ) अग्नेश्च-तुस्त्रिंशन्नामानि [ अग्नि के ३४ नाम । ] पारस्करगृह्यसूत्रे—वह्निजिह्वानां सप्त-नामानि, यथा—

'काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च लोलायमाना इति सप्तजिह्वाः ॥''

( ६ ) वडवानलस्य त्रीणि नामानि । [ समुद्र की अग्नि के ३ नाम । ] (७) वह्नि-ज्वालायाः पञ्च नामानि । अर्चिः शब्द इकारान्तः सकारान्तोऽपि । [अग्निकी लौ के ५ नाम । ] ( ८ ) अग्निकणस्य द्वे नामनी । स्त्रीलिङ्गे स्फुलिङ्गेति टाबन्तः । [ चिनगारी के २ नाम । ] (९) द्वे सन्तापस्य नामनी । [सन्तान के २ नाम । ]

[ [1]उल्का स्यान्निर्गतज्वाला, [2]भूतिर्भसितभस्मनी ।
क्षारो रक्षा च, [3]दावस्तु दवो वनहुताशनः ] ॥
[4]धर्मराजः पितृपतिः समवर्ती परेतराट् ।
कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ॥ ५८ ॥
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।
[5]राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ॥ ५९ ॥
रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ।
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६० ॥
[6]प्रचेता वरुणः पाशी यादसाम्पतिरप्पतिः ।
[7]श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६१ ॥
पृषदश्वो गन्धवहो गन्धवाहाऽनिलाशुगाः ।
समीर-मारुत-मरुज्जगत्प्राण-समीरणाः ॥ ६२ ॥
नभस्वद्-वात-पवन-पवमान प्रभञ्जनाः ।
[ [8]प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः ]
[9]प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६३ ॥
शरीरस्था इमे, [10]रंहस्तरसी तु रयः स्यदः ।
जवोऽथ [11]शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥ ६४ ॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च ।

---

(१) उल्काया द्वे नामनी । [उल्का के २ नाम ।] (२) भस्मनः पञ्च नामानि । [ भस्म के ५ नाम । ] ( ३ ) वनाग्नेस्त्रीणि नामानि । [ दावाग्नि के ३ नाम । ] ( ४ ) यमराजस्य चतुर्दश नामानि । [ यमराज के १४ नाम । ] ( ५ ) राक्षसानाम् पञ्चदश नामानि । [ राक्षसों के १५ नाम ] । ( ६ ) वरुणस्य पञ्च नामानि । [ वरुण के ५ नाम । ] ( ७ ) वायोर्विंशति नामानि । [ वायु के २० नाम । ] ( ८ ) सवृष्टिकस्य महावातस्य त्रीणि नामानि । [ झञ्झावात के ३ नाम । ] ( ९ ) शरीरस्थवायूनां पञ्च नामानि । तेषां स्थानानि यथा—

हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥

[ शरीर में स्थित वायुओं के ५ नाम । ] ( १० ) वेगस्य पञ्च नामानि । [वेग के ५ नाम । ] ( ११ ) शीघ्रस्यैकादश नामानि । [ शीघ्रता के ११ नाम । ]

[1]सततानारताश्रान्तसन्तताविरतानिशम् ॥ ६५ ॥
नित्यानवरताजस्रमप्यथातिशयो[2] भरः ।
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६६ ॥
तीव्रैकान्तनितान्तानि गाढ-बाढ-दृढानि च ।
[3]क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां सत्त्वगामि यत् ॥ ६७ ॥
[4]कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ६८ ॥
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ॥ ६९ ॥
[5]अस्योद्यानं चैत्ररथं, [6]पुत्रस्तु नलकूबरः ।
[7]कैलासः स्थानमलका[8] पूर्विमानन्तु[9] पुष्पकम् ॥ ७० ॥
[10]स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः ।

---

(१) निरन्तरस्य नव नामानि । [ लगातार के ९ नाम । ] (२) अतिशयस्य चतुर्दश नामानि । [अतिशय के १४ नाम ।] (३) अद्रव्ये वर्तमानं शीघ्रादि क्लीबे भवति, 'सत्वगामि' इत्यस्य स्थाने 'भेद्यगामि' इति पाठभेदो दृश्यते । तत्र भेद्यगामीति शब्दस्य विशेष्यलिङ्गमित्याशयः । यथा—शीघ्रं चलति । सततं वहति । अत्र यत् सत्वगामि (द्रव्यवाचि) भवति तत् त्रिषु लिङ्गेषु प्रयुज्यते । यथा—शीघ्रो हयः । शीघ्रा नाडी । शीघ्रं गमनम् । ( ४ ) कुबेरस्य ( कुत्सितं बेरं शरीरं यस्य तस्य ) सप्तदश नामानि । ऐलविलः ऐडविडोऽपि डलयोरभेदात् । इलबिला पुलस्तेः पत्नी कुबेरस्य माता, इलविलायाः अपत्यम् ऐडविड ऐलविलो वा । [ कुबेर के १७ नाम । ] ( ५ ) एकं कुबेरस्योद्यानस्य । [ कुबेर के बगीचे का नाम । ] ( ६ ) कुबेरपुत्रस्यैकं नाम । [ कुबेर के पुत्र का नाम । ] ( ७ ) कुबेरस्थानस्यैकम् । [ कुबेर के स्थान ( कैलास ) का नाम । ] ( ८ ) कुबेरस्य नगर्या एकम् । [ कुबेर की नगरी ( अलका ) का नाम । ] ( ९ ) कुबेरस्य विमानस्यैकं नाम । [ कुबेर के विमान ( पुष्पक ) का नाम । ] ( १० ) चत्वारि नामानि किन्नरस्य ( देवयोनिविशेषस्य ) इमे केचिद् अश्वमुखाः पुरुषाकारा, अपरे नरमुखा अश्वशरीरा भवन्ति । [ किन्नरों के ४ नाम । ]

[1]निधिर्ना शेवधिर्भेदाः[2] पद्मशङ्खादयो निधेः ॥ ७१ ॥

इति स्वर्गवर्गः ।

## २. अथ व्योमवर्गः

[3]द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।
नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥
वियद् विष्णुपदं वा तु पुंस्याकाश-विहायसी ।
[ विहायसोऽपि नाकोऽपि द्युरपि स्यात् स्वरव्ययम् ।
तारापथोऽन्तरिक्षञ्च मेघाध्वा च महाबिलम् ] ॥

इति व्योमवर्गः ।

## ३. अथ दिग्वर्गः

[4]दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।
[5]प्राच्यवाचीप्रतीच्यस्ताः पूर्व-दक्षिण-पश्चिमाः ॥ १ ॥

---

( १ ) द्वे नामनी निधेः । [निधि ( खजाना ) के २ नाम । ] ( २ ) निधि-विशेषस्य नव भेदाः । [ निधि के ९ भेद होते हैं । ] शब्दार्णवे निधिभेदाः—

'पद्मोऽस्त्रियां महापद्मः शङ्खो मकर-कच्छपौ ।
मुकुन्द-कुन्द-नीलाश्च खर्वश्च निधयो नव' ॥

नौ निधियों के नाम—१—पद्म, २—महापद्म, ३—शङ्ख, ४—मकर, ५—कच्छप, ६—मुकुन्द, ७—कुन्द ८—नील और ९—खर्व ]

इति स्वर्गवर्गः ।



( ३ ) आकाशस्य चतुर्विंशति नामानि । [ आकाश के २४ नाम । ]

इति व्योमवर्गः ।



( ४ ) दिशः पञ्च नामानि । [ दिशा के ५ नाम ] ( ५ ) पूर्वादिदिशामेकैकं नाम । [ पूर्व आदि दिशाओं के १-१ नाम । ]

उत्तरा दिगुदीची स्याद्दिश्यन्तु त्रिषु [1]दिग्भवे ।
[ अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ।
प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ] ।
[2]इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।
[ [3]रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।
बुधो बृहस्पतिश्चेति दिशाञ्चैव तथा ग्रहाः ॥ ]
[4]ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
[5]करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ॥ ४ ॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।
[6]क्लीबाव्ययन्त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥ ५ ॥
[7]अभ्यन्तरं त्वन्तरालं [8]चक्रवालन्तु मण्डलम् ।
[9]अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥

---

( १ ) दिग्भववस्तुमात्रे दिश्यम् । [ पूर्वादि दिशाओं में होनेवाली वस्तु के नाम । ] ( २ ) पूर्वादीनां दिशां स्वामीनां नामानि । [ पूर्वादि दिशाओं के स्वामियों के नाम । ] ( ३ ) पूर्वादीनां दिशां ग्रहाः । [ क्रम से पूर्व आदि दिशाओं के ग्रह । ] ( ४ ) अष्टो दिग्गजाः । [ दिशाओं के ८ गज । ] ( ५ ) दिग्गजानां क्रमेण कारिण्यः । दिग्गजों की हथिनियाँ । [ **स्पष्टीकरण**—पूर्वदिशा का गज **ऐरावत**, हथिनी **अभ्रमु** । आग्नेयकोण का गज **पुण्डरीक**, हथिनी **कपिला** । दक्षिण दिशा का गज **वामन**, हथिनी **पिङ्गला** । नैर्ऋत्यकोणका गज **कुमुद**, हथिनी **अनुपमा**, पश्चिम दिशा का गज **अञ्जन**, हथिनी **ताम्रपर्णी**, वायव्यकोण का गज **पुष्पदन्त**, हथिनी **शुभ्रदन्ती** । उत्तरदिशा का गज **सार्वभौम**, हथिनी **अङ्गना** और ईशानकोण का गज **सुप्रतीक**, हथिनी **अञ्जनावती** । ( ६ ) आग्नेयादि कोणानां द्वे नामनी । [ आग्नेय आदि कोणों के २ नाम । ] ( ७ ) अभ्यन्तरस्य द्वे नामनी । [ भीतर के २ नाम । ] ( ८ ) मण्डलाकारेण स्थितस्य सेनासमूहस्य नामद्वयम्, [ गोलाई से स्थित सेना समूह के २ नाम । ] ( ९ ) पञ्चदश मेघस्य नामानि । [ मेघ के १५ नाम । ]

धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ।
घन–जीमूत–मुदिर-जलभुग्–धूमयोनयः ॥ ७ ॥
[1]कादम्बिनी मेघमाला, [2]त्रिषु मेघभवेऽभ्रियम् ।
[3]स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥ ८ ॥
[4]शम्पा-शतह्लदा-ह्लादिन्यैरावत्यः क्षणप्रभा ।
तडित् सौदामनी विद्युच्चञ्चला चपला अपि ॥ ९ ॥
[5]स्फूर्जथुर्वज्रनिर्घोषे [6]मेघज्योतिरिरम्मदः ।
[7]इन्द्रायुधं शक्रधनुस्तदेव [8]ऋजु रोहितम् ॥ १० ॥
[9]वृष्टिर्वर्षं, तद् [10]विघातेऽवग्राहाऽवग्रहौ समौ ।
[11]धारासम्पात आसरः, [12]सीकरोऽम्बुकणाः स्मृताः ॥ ११ ॥
[13]वर्षोपलस्तु करका, [14]मेघच्छन्नेऽह्नि दुर्दिनम् ।
[15]अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥
अपिधान-तिरोधान-पिधानाऽऽच्छादनानि च ।
[16]हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥

---

( १ ) मेघपङ्क्तेर्द्वे नामनी । [ बादलों की घटा के २ नाम । ] ( २ ) मेघजलस्यकं नाम । [ मेघ के जल का १ नाम । ] ( ३ ) मेघध्वनेश्चत्वारि नामानि । [ मेघगर्जन के ४ नाम । ] ( ४ ) दश नामानि विद्युतः । [ बिजली के १० नाम । ] ( ५ ) वज्रनिर्घोषस्य द्वे नामनी । [ बिजली की गर्जन के २ नाम । ] ( ६ ) मेघज्योतिषी द्वे नामनी । [ आकाश से गिरने वाली बिजली के २ नाम । ] ( ७ ) इन्द्रधनुषो द्वे नामनी । [ इन्द्रधनुष के २ नाम । ] ( ८ ) उत्पातादिहेतुना यदि तद् इन्द्रधनुः ऋजु स्यात् तदा रोहितमित्युच्यते । [ सीधे इन्द्रधनुष का १ नाम । ] ( ९ ) वृष्टेः द्वे नामनी । [ वर्षा के २ नाम । ] ( १० ) वृष्टिविघातस्य द्वे नामनी । [ वर्षा के अभाव के २ नाम । ] ( ११ ) धारावृष्टेः द्वे नामनी । [ मूसलाधार वर्षा के २ नाम । ] ( १२ ) जलबिन्दोर्नामैकम् । तत्र शीकरशब्दः दन्त्यादिः, तालव्यादिश्च । [ पानी की बूंद या फुहार का १ नाम । ] ( १३ ) वर्षोपलस्यैकम् । [ ओले (पत्थर) का १ नाम । ] ( १४ ) दुर्दिनस्यैकं नाम । [ दुर्दिन ( बादलों से ढके हुए दिन ) का १ नाम । ] ( १५ ) अष्टौ नामानि तिरोधानस्य । [ छिपने के ८ नाम । ] ( १६ ) विंशतिर्नामानि चन्द्रमसः । [ चन्द्रमा के २० नाम । ]

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः।
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥ १४ ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः।
[1]कला तु षोडशो भागो, [2]बिम्बोऽस्त्री मण्डलं त्रिषु ॥ १५ ॥
[3]भित्तं शकल-खण्डे वा पुंस्यर्धोऽर्धं [4]समेंऽशके।
[5]चन्द्रिका कौमुदी ज्योत्स्ना, [6]प्रसादस्तु प्रसन्नता ॥ १६ ॥
[7]कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्।
[8]सुषमा परमा शोभा, [9]शोभा कान्तिर्द्युतिश्छविः ॥ १७ ॥
[10]अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्।
प्रालेयं मिहिका चाथ [11]हिमानी हिमसंहतिः ॥ १८ ॥
[12]शीतं गुणे [13]तद्वदर्थाः सुषीमः शिशिरो जडः।
तुषारः शीतलः शीतो हिमः सप्ताऽन्यलिङ्गकाः ॥ १९ ॥
[14]ध्रुव औत्तानपादिः [15]स्यादगस्त्यः कुम्भसम्भवः।
मैत्रावरुणिरस्यैव [16]लोपामुद्रा सधर्मिणी ॥ २० ॥

---

( १ ) चन्द्रमसः षोडशांशस्यैकं नाम। [ चन्द्रकला का १ नाम। ] ( २ ) सूर्यस्य चन्द्रस्य च बिम्बस्य द्वे नामनी। विशेष्यनिघ्नत्वात् मण्डलं त्रिषु। [ सूर्य-चन्द्र बिम्ब के २ नाम। ] ( ३ ) खण्डस्य चत्वारि नामानि। [ टुकड़ा के ४ नाम। ] ( ४ ) समेंऽशकेऽर्धशब्दो नित्यं नपुंसकलिङ्गः। [ दो आधे भागों में से एक खण्ड का नाम।] ( ५ ) ज्योत्स्नायाः त्रीणि नामानि। [चाँदनी के ३ नाम।] ( ६ ) प्रसन्नताया द्वे नामनी। [ प्रसन्नता के २ नाम। ] ( ७ ) षड् नामानि चिह्नस्य। [ चिह्न के ६ नाम। ] ( ८ ) परमशोभाया एकं नाम। [ परमशोभा का १ नाम। ] ( ९ ) चत्वारि नामानि सामान्यशोभायाः। [ सामान्य शोभा के ४ नाम। ] ( १० ) सप्तनामानि हिमस्य। [ हिम के ७ नाम। ] ( ११ ) द्वे नामनी हिमसमूहस्य। [ बर्फ की शिलाओं के २ नाम। ] ( १२ ) एकं नाम शैत्यस्य। [ जाड़े का १ नाम। ] ( १३ ) शीतलपदार्थस्य सप्त नामानि। एते शब्दाः अन्यलिङ्गकाः विशेष्यलिङ्गा भवन्ति। [ शीतलपदार्थ के ७ नाम। ] ( १४ ) उत्तानपादपुत्रध्रुवस्यैकं नाम। [ ध्रुव का १ नाम। ] ( १५ ) अगस्त्य-मुनेस्त्रीणि नामानि। [ अगस्त्यमुनि के ३ नाम। ] ( १६ ) अगस्त्यपत्न्याः द्वे नामनी। [ अगस्त्य की स्त्री के २ नाम। ]

[1]नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्।
[2]दाक्षायण्योऽश्विनीत्यादि तारा [3]अश्वयुगश्विनी ॥ २१ ॥
[4]राधा विशाखा, [5]पुष्ये तु सिध्यतिष्यौ, [6]श्रविष्ठया।
समा धनिष्ठा, [7]स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥ २२ ॥
[8]मृगशीर्षं मृगशिरस्तस्मिन्नेवाऽऽग्रहायणी।
[9]इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ॥ २३ ॥
[10]बृहस्पतिः सुराचार्यो गोष्पतिर्धिषणो गुरुः।
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥ २४ ॥
[11]शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः।
[12]अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥ २५ ॥
[13]रौहिणेयो बुधः सौम्यः, [14]समौ सौरिशनैश्चरौ।
[15]तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ॥ २६ ॥
[16]सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः।
[ मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः।
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥ ]

---

( १ ) षड् नामानि नक्षत्राणाम्। [ तारा के ६ नाम। ] ( २ ) अश्विनी-प्रभृतिसप्तविंशतिनक्षत्राणां नामैकम्। [ अश्विनी आदि २७ नक्षत्रों का नाम। ] ( ३ ) अश्विनीनक्षत्रस्य नामद्वयम्। [ अश्विनी नक्षत्र के २ नाम। ] ( ४ ) विशाखानक्षत्रस्य नामद्वयम्। [विशाखा नक्षत्र के २ नाम। ] ( ५ ) पुष्यनक्षत्रस्य नामत्रयम्। [ पुष्य नक्षत्र के ३ नाम। ] ( ६ ) धनिष्ठानक्षत्रस्य द्वे नामनी। [ धनिष्ठानक्षत्र के २ नाम। ] ( ७ ) पूर्वाभाद्रपदोत्तरभाद्रपदयोर्द्वे नामनी। [ पूर्वाभाद्रपदा और उत्तराभाद्रपदा के १-१ नाम। ] ( ८ ) मृगशीर्षस्य त्रीणि नामानि। [ मृगशिरा नक्षत्र के ३ नाम। ] ( ९ ) मृगशीर्षनक्षत्रस्योपरिभागस्थ-लघुतारकाणां नामैकम्। [ मृगशिरा नक्षत्र के ऊपरी भाग में स्थित पाँच तारों का १ नाम ] ( १० ) नव बृहस्पतेर्नामानि। [ बृहस्पति के ९ नाम। ] ( ११ ) शुक्रस्य षड् नामानि। [ शुक्र के ६ नाम। ] ( १२ ) पञ्च नामानि मङ्गलस्य। [ मंगल के ५ नाम। ] ( १३ ) त्रीणि नामानि बुधस्य। [ बुध के ३ नाम। ] ( १४ ) द्वे नामनी शनैश्चरस्य। [ शनि के २ नाम। ] ( १५ ) राहोः पञ्च नामानि। [ राहु के ५ नाम। ] ( १६ ) सप्तर्षीणां द्वे नामनी। [ सप्तर्षि और चित्रशिखण्डी। ] विशेष—मरीचि, अंगिरा, अत्रि, पुलस्त्य, पुलह, क्रतु, वसिष्ठ।

[1]राशीनामुदयो लग्नं, ते तु [2]मेष-वृषादयः ॥ २७ ॥
[3]सूर-सूर्या-ऽर्यमा-ऽऽदित्य-द्वादशात्म-दिवाकराः ।
भास्कराऽहस्कर-ब्रध्न-प्रभाकर-विभाकराः ॥ २८ ॥
भास्वद् विवस्वत् सप्ताश्वहरिदश्वोष्णरश्मयः ।
विकर्तनाऽर्क-मार्तण्ड-मिहिरा-ऽरुण-पूषणः ॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
[ पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा ।
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ।
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ॥ ]
[4]माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः ॥ ३१ ॥
[5]सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।
[6]परिवेषस्तु परिधिरुपसूर्यक-मण्डले ॥ ३२ ॥

---

( १ ) मेषादिराशीनामुदयस्य नामैकम् । [ लग्न का १ नाम ] ( २ ) मेष-वृषादिद्वादशराशीनां नामानि । [ बारह राशियों के नाम । ] यथा—

'मेषो वृषोऽथ मिथुनं कर्कटः सिंह-कन्यके ।
तुला च वृश्चिको धन्वी मकरः कुम्भ-मीनकौ ॥'

( ३ ) सप्तविंशतिनामानि सूर्यस्य प्रक्षिप्तैः सप्तदशभिः सह चतुःपञ्चाशत् नामानि । [ सूर्य के ५४ नाम । ] ( ४ ) सूर्यस्य पार्श्ववर्तिषु प्रधानानामेकैकं नाम । यथाह क्षीरस्वामी—

'तत्र शक्रो वामपार्श्वे दण्डाख्यौ दण्डनायकः ।
वह्निश्च दक्षिणे पार्श्वे पिङ्गलो वामनश्च सः ॥
यमोऽपि दक्षिणे भागे भवेन्माठरसंज्ञया' । इति ।

[ सूर्य के पार्श्वचरों के ३ नाम । ] ( ५ ) सूर्यसारथेः पञ्च नामानि । [ अरुण के ५ नाम । ] ( ६ ) सूर्यस्य परिधेश्चत्वारि नामानि । [ सूर्य की परिधि के ४ नाम । ]

[1]किरणोऽस्र–मयूखांशु–गभस्ति–घृणि–रश्मयः ।
भानुः करो मरीचिः स्त्री-पुंसयोर्दीधितिःस्त्रियाम् ॥ ३३ ॥
[2]स्युः प्रभा-रुग् रुचिस्त्विड् भाश्छवि-द्युति-दीप्तयः ।
रोचिः शोचिरुभे क्लीबे, [3]प्रकाशो द्योत आतपः ॥ ३४ ॥
[4]कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।
[5]तिग्मं तीक्ष्णं खरं [6]तद्वन्मृगतृष्णा मरीचिका ॥ ३५ ॥

इति दिग्वर्गः ।

## ४. अथ कालवर्गः

[7]कालो दिष्टोऽप्यनेहापि समयोऽप्यथ [8]पक्षतिः ।
पतिपद् द्वे इमे स्त्रीत्वे, [9]तदाद्यास्तिथयो द्वयोः ॥ १ ॥
[10]घस्रो दिनाऽहनी वा तु क्लीबे दिवस-वासरौ ।
[11]प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि ॥ २ ॥

---

( १ ) एकादशकिरणानां नामानि [ किरणों के ११ नाम । ] ( २ ) एकादशनामानि प्रभायाः । तत्र भाशब्दः सकारान्त आकारान्तोऽपि । [ प्रभा के ११ नाम । ] ( ३ ) आतपस्य त्रीणि नामानि । [ घाम ( धूप ) के ३ नाम । ] (४) मन्दोष्णस्य नामत्रयम् । त्रयोऽप्येते शब्दा गुणे नपुंसकाः । अन्यत्र विशेष्यनिघ्नाः । [ गुनगुना के ३ नाम । ] ( ५ ) अत्युष्णस्य नामत्रयम् । एतेऽपि शब्दा गुणे नपुंसकाः । द्रव्ये विशेष्यनिघ्ना अतएव त्रिषु लिङ्गेषु प्रयुज्यन्ते । [ अत्यन्त गरम के ३ नाम । ] ( ६ ) मृगतृष्णाया नामद्वयम् । [ मृगतृष्णा के २ नाम । ]

इति दिग्वर्गः ।

( ७ ) चत्वारि नामानि समयस्य । [ समय के ४ नाम । ] ( ८ ) प्रतिपत्तिथेर्नामद्वयम् । [ प्रतिपदा के २ नाम । ] ( ९ ) तदाद्याः प्रतिपत् आद्या येषां ताः, क्रमेण प्रतिपत्, द्वितीया, तृतीया, चतुर्थी पञ्चमीप्रभृतयः 'तिथय' इत्युच्यन्ते । तिथिशब्दः स्त्रीलिङ्गे पुंसि च प्रयुज्यते । [ तिथि का नाम । ] ( १० ) दिनस्य पञ्च नामानि । [ दिन के ५ नाम । ] ( ११ ) नव प्रातःकालस्य नामानि । तत्र व्युष्टादिनामत्रयं प्रक्षिप्तम् । [ प्रात.काल ( पौ फटना ) के १२ नाम । ]

[ व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते ] ।
प्रभातञ्च, [1]दिनान्ते तु सायं, [2]सन्ध्या पितृप्रसूः ।
[3]प्रह्णा-ऽपराह्ण-मध्याह्नास्त्रिसन्ध्यमथ [4]शर्वरी ॥ ३ ॥
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरी-तमस्विन्यौ रजनी यामिनी तमी ॥ ४ ॥
[5]तमिस्रा तामसी रात्रिर् [6]ज्यौत्स्नी चन्द्रिकयाऽन्विता ।
[7]आगामिवर्तमानाऽहर्युक्तायां निशि पक्षिणी ॥ ५ ॥
[8]गणरात्रं निशा बह्व्यः, [9]प्रदोषो रजनीमुखम् ।
[10]अर्धरात्र-निशीथौ द्वौ, द्वौ [11]याम-प्रहरौ समौ ॥ ६ ॥
[12]स पर्वसन्धिः प्रतिपत् पञ्चदश्योर्यदन्तरम् ।
[13]पक्षान्तौ पञ्चदश्यौ द्वे, [14]पौर्णमासी तु पूर्णिमा ॥ ७ ॥
[15]कलाहीने सा-ऽनुमतिः, [16]पूर्णे राका निशाकरे ।
[17]अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ८ ॥

---

( १ ) दिनान्तस्यैकं नाम । [सायंकाल का १ नाम ।] ( २ ) सन्ध्याकालस्य नामद्वयम् । [ सन्ध्याकाल के २ नाम । ] ( ३ ) दिनस्य पूर्वोभागः-प्राह्णः, मध्योभागः-मध्याह्नः, अन्त्योभागः—अपराह्णः, एतत्त्रयं त्रिसन्ध्यमिति । [ तीनों संध्याकालों के १-१ नाम । ] ( ४ ) रात्रेर्द्वादश नामानि । [ रात्रि के १२ नाम । ] ( ५ ) अन्धकारपूर्णायारात्रेर्नामद्वयम् । [ अँधेरी रात के २ नाम । ] ( ६ ) चन्द्रिकयाऽन्विताया रात्रेर्नाम । [ चाँदनी रात्रि का १ नाम । ] ( ७ ) दिनद्वयमध्यगतारात्रेरेकं नाम । [ दो दिन के बीच की रात का १ नाम । ] (८) गणरात्रस्य नामैकम् । [ रातों के समूह का १ नाम । ] ( ९ ) प्रदोषस्य नामद्वयम् । [ प्रदोष के २ नाम । ] ( १० ) अर्धरात्रस्य नामद्वयम् । [आधीरात के २ नाम ।] (११) प्रहरस्य नामद्वयम् । [ पहर ( तीन घंटा ) के २ नाम । ] ( १२ ) प्रतिपत् पञ्चदश्योः सन्धेर्नामद्वयम् । [ पर्वसन्धि के २ नाम । ] ( १३ ) पक्षान्तस्य पूर्णिमायाः, अमावास्यायाश्च नामैकम् । [ पूर्णिमा और अमावास्था का १ नाम । ] ( १४ ) पूर्णिमाया नामद्वयम् । [ पूर्णिमा के २ नाम । ] ( १५ ) एककलाहीना पूर्णिमा-अनुमतिः । चन्द्रोदयसमये प्रतिपद्योगादेककलाक्षयो यद्दिने भवति सा अनुमति नाम्ना कथ्यते । ( १६ ) षोडशेन्दुकलापूर्णा पूर्णिमा 'राका' कथ्यते । [ १६ कला युक्त पूर्णिमा को 'राका' कहते हैं । ] ( १७ ) अमावास्यायाः चत्वारि नामानि । [ अमावास्या के ४ नाम । ]

[1]सा दृष्टेन्दुः सिनीवाली, [2]सा नष्टेन्दुकला कुहूः ।
[3]उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ॥ ९ ॥
[4]सोपप्लवोपरक्तौ [5]द्वावग्न्युत्पात उपाहितः ।
[6]एकयोक्त्या पुष्पवन्तौ दिवाकर-निशाकरौ ॥ १० ॥
[7]अष्टादश निमेषास्तु काष्ठा, [8]त्रिंशत्तु ताः कला ।
[9]तास्तु त्रिंशत्क्षणस्ते तु [10]मुहूर्तो द्वादशाऽस्त्रियाम् ॥ ११ ॥
ते तु[11] त्रिंशदहोरात्रः, [12]पक्षस्ते दश पञ्च च ।
[13]पक्षौ पूर्वाऽपरौ शुक्ल-कृष्णौ, [14]मासस्तु तावुभौ ॥ १२ ॥
द्वौ द्वौ [15]मार्गादिमासौ स्यादृतुस्तैरयनं[16] त्रिभिः ।
[17]अयने द्वे गतिरुदग्दक्षिणाऽर्कस्य वत्सरः ॥ १३ ॥

( १ ) चतुर्दशीयोगाद् दृष्टचन्द्रा अमावास्या, 'सिनीवाली' कथ्यते । [ सिनीवाली का नाम । ] ( २ ) अदृष्टचन्द्रा सा कुहूरित्युच्यते । [ 'कुहू' का नाम । ] ( ३ ) चन्द्रसूर्योपरागस्य नामद्वयम् । [ सूर्य-चन्द्रग्रहण के २ नाम । ] ( ४ ) राहुग्रस्तसूर्यचन्द्रयोर्द्वे नामनी । [राहु से ग्रस्त सूर्य-चन्द्र का नाम ।] (५) अग्न्युत्पातस्य नामद्वयम् । [ आग लगने के २ नाम । ] ( ६ ) सहोक्तौ सूर्यचन्द्रौ पुष्पदन्तौ पुष्पवन्ताविति च । [ एक साथ कहे गये सूर्य-चन्द्र को पुष्पदन्त या पुष्पवन्त संज्ञा है ।] ( ७ ) अष्टादशनिमेषाः काष्ठा इति । [ १८ बार पलक गिरने के समान समय का नाम । काष्ठा = $\frac{1}{4}$ सेकेंड । ] ( ८ ) त्रिंशत्ताः काष्ठा एका कला । [ ३० काष्ठा = १ कला = ८ सेकेंड ।] ( ९ ) ताः त्रिंशत्कलाः क्षणः । [३० कला = १ क्षण = ४ मिनट । ] ( १० ) द्वादशक्षणाः, मुहूर्तः । [१२ क्षण = १ मुहूर्त = २ घड़ी = ४८ मिनट । ] ( ११ ) त्रिंशन्मुहूर्तैरेकोऽहोरात्रो जायते । [ ३० मुहूर्त = ६० घड़ी = २४ घंटा = १ दिन ।] (१२) पञ्चदशदिनानि एकः पक्षः । [१५ दिन = १ पक्ष ।] ( १३ ) तत्र शुक्लपक्षः पूर्वः, अपरः कृष्णपक्षः । [ प्रथम शुक्लपक्ष और द्वितीय कृष्णपक्ष । ] ( १४ ) तावुभौ शुक्ल-कृष्णपक्षौ एको मासः । [ दोनों पक्षों ( ३० दिनों ) का १ महीना । ] ( १५ ) मार्गशीर्ष-पौषादिद्वाभ्यां द्वाभ्यां मासाभ्यां क्रमेण हेमन्तादयः षड् ऋतवो भवन्ति । [ मार्गशीर्ष और पौष आदि दो-दो महीनों की हेमन्त आदि ६ ऋतुएँ होती हैं । ] ( १६ ) त्रिभिर्ऋतुभिः ( षड्भिः मासैः ) एकमयनं भवति । [ तीन ऋतुओं का १ अयन होता है । ] ( १७ ) सूर्यस्य उत्तरदिग्गमनम् उत्तरायणं, दक्षिणदिग्गमनं दक्षिणायनम्, द्वाभ्यामयनाभ्यामेको वत्सरः । [ उत्तरायण और दक्षिणायन को मिलाकर १ वर्ष होता है । ]

[1]समरात्रिन्दिवे काले विषुवद् विषुवं च तत् ।
[ पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ।
नाम्ना स पौषो, माघाद्याश्चैवमेकादशाऽपरे ॥ ]
[2]मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ १४ ॥
[3]पौषे तैष-सहस्यौ द्वौ, [4]तपा माघेऽथ [5]फाल्गुने ।
स्यात्तपस्यः फाल्गुनिकः, [6]स्याच्चैत्रे चैत्रिको मधुः ॥ १५ ॥
[7]वैशाखे माधवो राधो, [8]ज्येष्ठे शुक्रः, [9]शुचिस्त्वयम् ।
आषाढे, [10]श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥ १६ ॥
[11]स्युर्नभस्यः प्रौष्ठपद-भाद्र-भाद्रपदाः समाः ।
[12]स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तु [13]कार्तिके ॥ १७ ॥
बाहुलोर्जौ कार्तिकिको, [14]हेमन्तः, [15]शिशिरोऽस्त्रियाम् ।
[16]वसन्ते पुष्पसमयः सुरभि[17]र्ग्रीष्म ऊष्मकः ॥ १८ ॥

---

( १ ) समरात्रिन्दिवकालस्य द्वे नामनी । [ विषुवत् के २ नाम । ] ( २ ) मार्गशीर्षस्य चत्वारि नामानि । [ मार्गशीर्ष ( अगहन ) के ४ नाम । ] ( ३ ) पौषमासस्य नामत्रयम् । [ पौषमास के ३ नाम । ] ( ४ ) द्वे नामनी माघमासस्य । [ माघमास के २ नाम । ] ( ५ ) फाल्गुनस्य त्रीणि नामानि । [ फाल्गुन के ३ नाम । ] ( ६ ) चैत्रमासस्य त्रीणि नामानि । [ चैतमास के ३ नाम । ] ( ७ ) वैशाखस्य नामत्रयम् । [ वैशाख के ३ नाम । ] ( ८ ) द्वे ज्येष्ठस्य नामनी । [ जेठ के २ नाम । ] ( ९ ) आषाढस्य नामद्वयम् । तत्र शुचिशब्दो बहुत्र प्रयुज्यते । यथा--

'शुचि ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि ।
ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु'' ॥ मेदिनी ।

[ आषाढ़ के २ नाम । ] ( १० ) त्रीणि नामानि श्रावणस्य । [ श्रावण के ३ नाम । ] ( ११ ) भाद्रमासस्य चत्वारि नामानि । [ भादों के ४ नाम । ] (१२) आश्विनस्य त्रीणि नामानि । [ आश्विन (कुआर) के ३ नाम । ] ( १३ ) कार्तिकस्य चत्वारि नामानि । [ कार्तिक के ४ नाम । ] ( १४ ) मार्गशीर्ष-पौषाभ्यां हेमन्तर्तुः । [ अगहन पौष=हेमन्त ऋतु । ] ( १५ ) माघ-फाल्गुनाभ्यां शिशिरर्तुः । [ माघ-फाल्गुन = शिशिर ऋतु । ] (१६) चैत्र-वैशाखाभ्यां वसन्तर्तुः । तस्य नामत्रयम् । [ चैत वैशाख = वसन्त ऋतु के ३ नाम । ] ( १७ ) ज्येष्ठाऽऽषाढाभ्यां ग्रीष्मर्तुः । तस्य सप्त नामानि । [ जेठ आषाढ़ = ग्रीष्म ऋतु के ७ नाम । ]

**निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।**
**[1]स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा, [2]अथ शरत् स्त्रियाम् ॥ १९ ॥**
**[3]षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।**
**[4]संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥ २० ॥**
**[5]मासेन स्यादहोरात्रः पैत्रो, [6]वर्षेण दैवतः ।**
**[7]दैवे युगसहस्रे द्वे ब्राह्मः, [8]कल्पौ तु तौ नृणाम् ॥ २१ ॥**
**[9]मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ।**
**[10]संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ २२ ॥**

---

( १ ) श्रावण-भाद्राभ्यां वर्षर्तुः । तस्य द्वे नामनी । वर्षाशब्दः स्त्रियां बहुवचनान्तः । [ श्रावण भादों=वर्षाऋतु के २ नाम । ] ( २ ) आश्विनकार्तिकाभ्यां शरदर्तुः । [ आश्विन ( कुआर ) कार्तिक = शरद् ऋतु । ] ( ३ ) मार्गशीर्षादिमासयुग्मैः हेमन्तप्रभृतयः षड्ऋतवो भवन्ति । [ छः ऋतुओं के नाम । ] ( ४ ) द्वादशमासात्मकस्य वर्षस्य षड् नामानि । तत्र समाः शब्दः स्त्रियां नित्यं बहुवचनान्तः । [ वर्ष ( साल ) के ६ नाम । ] ( ५ ) मनुष्याणामेकेन मासेन पितॄणामेकोऽहोरात्रः । [ मनुष्यो का एक मास पितरों का १ दिन होता है । ] ( ६ ) मनुष्याणामेकेन वर्षेण देवनामेकोऽहोरात्रः । [ मनुष्यों के १ वर्ष से देवताओं का १ दिन होता है । ] ( ७ ) देवानां युगसहस्रे द्वे ब्रह्मण एकोऽहोरात्रः । एतदेव गीताया अष्टमेऽध्याये—

'सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः' ॥

[ मनुष्यों के ३६० वर्षों से देवताओं का एक वर्ष । देवताओं के १२००० वर्षों मे मनुष्यों के चार युग होते हैं । मनुष्यों के चार युग से देवताओं का एक युग होता है । इस प्रकार देवताओं के हजार युगों से ब्रह्मा का एक दिन ( २४ घण्टा ) होता है । ] ( ८ ) एवं ब्रह्मणो दिनं मनुष्याणां स्थितिकालः । तस्य रात्रिः प्रलयकालः, तौ दिनं रात्रिश्च कल्पौ भवतः । [ ब्रह्मा का दिन ( १२ घण्टा ) मनुष्यों का स्थितिकाल है । ब्रह्मा की रात्रि ( १२ घण्टा ) मनुष्यों का प्रलय काल है । ये दोनों मनुष्यों की गणना में कल्प कहे जाते हैं । ] ( ९ ) दिव्यानां युगानामेकसप्ततिः-मन्वन्तरं भवति । [ इकहत्तर दिव्यगुणों का एक मन्वन्तर होता है । ] ( १० ) प्रलयस्य पञ्च नामानि । [ प्रलय के ५ नाम । ]

[1]अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विष-कल्मषम् ।
कलुषं वृजिनैनोऽघमंहो दुरित-दुष्कृतम् ॥ २३ ॥
[2]स्याद्धर्ममस्त्रियां पुण्य-श्रेयसी सुकृतं वृषः ।
[3]मुत्प्रीतिः प्रमदो हर्षः प्रमोदाऽऽमोद-सम्मदाः ॥ २४ ॥
स्यादानन्दथुरानन्दः शर्म-शात-सुखानि च ।
[4]श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥ २५ ॥
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।
शस्तं चाऽथ [5]त्रिषु द्रव्ये पापं पुण्यं सुखानि च ॥ २६ ॥
[6]मतल्लिका मचर्चिका प्रकाण्डमुद्ध-तल्लजौ ।
प्रशस्तवाचकान्यमून्ययः[7] शुभावहो विधिः ॥ २७ ॥
[8]दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।
[9]हेतुर्ना कारणं बीजं, [10]निदानं त्वादिकारणम् ॥ २८ ॥
[11]क्षेत्रज्ञ आत्मा पुरुषः, [12]प्रधानं प्रकृतिः स्त्रियाम् ।
[13]विशेषः कालिकोऽवस्था, [14] गुणाः सत्त्वं रजस्तमः ॥ २९ ॥
[15]जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।

---

( १ ) द्वादशनामानि पापस्य । [ पाप के १२ नाम । ] ( २ ) पुण्यस्य पञ्च नामानि । [ पुण्य के ५ नाम । ] ( ३ ) हर्षस्य द्वादश नामानि । [ हर्ष के १२ नाम । ] ( ४ ) कल्याणस्य द्वादश नामानि । [ कल्याण के १२ नाम । ] ( ५ ) पापादयः शब्दाः द्रव्ये प्रयुज्यमाना विशेष्यलिङ्गा भवन्ति । यथा—पापः पुरुषः । पापा प्रतीपदर्शिनी । पापं कर्म । [ पाप, पुण्य, सुख के नाम । ] ( ६ ) प्रशस्तवाचकानि पञ्च शब्दा. । [ ५ प्रशंसावाचक शब्द । ] ( ७ ) शुभ-प्रदविधेरेकं नाम । [शुभप्रदविधि का १ नाम । ] ( ८ ) भागधेयस्य षड् नामानि । [ भाग्य के ६ नाम । ] ( ९ ) कारणस्य त्रीणि नामानि । [कारण के ३ नाम । ] ( १० ) आदिकारणं निदानं कथ्यते तस्यैकं नाम । [ निदान का १ नाम । ] ( ११ ) आत्मनो नामानि त्रीणि । [ आत्मा के ३ नाम । ] ( १२ ) प्रकृतेर्नाम-द्वयम् । [ प्रकृति के २ नाम । ] ( १३ ) कालकृतविशेषस्य नामैकम् अवस्था । [ विशेष परिस्थिति का १ नाम । ] ( १४ ) रजः तमः सत्वश्च एते गुणाः । अदन्तावपि रज-तमशब्दौ पुंसि प्रयुज्येते । [सत्व, रज, तम इनको गुण कहते हैं । ] ( १५ ) जन्मनः षड्-नामानि । अदन्तोऽपि जन्मशब्दः । [ जन्म के ६ नाम । ]

[1]प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ॥ ३० ॥
[2]जातिर्जातञ्च सामान्यं, [3]व्यक्तिस्तु पृथगात्मता ।
[4]चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥ ३१ ॥

इति कालवर्गः ।

## ५. अथ धीवर्गः

[5]बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिश्चित् संवित् प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥
[6]धीर्धारणावती मेधा, [7]सङ्कल्पः कर्म मानसम् ।
[ [8]अवधानं समाधानं प्रणिधानन्तथैव च । ]
[9]चित्ताभोगो मनस्कारश्चर्चा[10] सङ्ख्या विचारणा ॥ २ ॥
[ [11]विमर्शो भावना चैव वासना च निगद्यते । ]
[12]अध्याहारस्तर्क ऊहो [13]विचिकित्सा तु संशयः ।
सन्देह-द्वापरौ चाऽथ समौ [14]निर्णय-निश्चयौ ॥ ३ ॥

---

( १ ) प्राणिनः षड् नामानि । [ प्राणी के ६ नाम । ] ( २ ) घटत्वपटत्वाद्येकत्वविशिष्टाया जातेस्त्रीणि नामानि । [ जाति के ३ नाम । ] ( ३ ) घटादिव्यक्तेर्नामद्वयम् । [ व्यक्ति के २ नाम । ] ( ४ ) अष्टौ नामानि मनसः । [ मन के ८ नाम । ]

इति कालवर्गः ।



( ५ ) बुद्धेश्चतुर्दशनामानि । [ बुद्धि के १४ नाम । ] ( ६ ) मेधायास्त्रीणि नामानि । [ धारणाशक्ति वाली बुद्धि के ३ नाम । ] ( ७ ) मानसिककर्मण एकं नाम । [ संकल्प का १ नाम । ] ( ८ ) समाधानस्य त्रीणि नामानि । [ सावधानता के ३ नाम । ] ( ९ ) मानसप्रत्यक्षस्य नामद्वयम् । [ मानस प्रत्यक्ष के २ नाम । ] ( १० ) त्रीणि विचारणाया नामानि । [ विचार के ३ नाम । ] (११) त्रीणि नामानि वासनायाः । [ वासना के ३ नाम । ] ( १२ ) त्रीणि नामानि तर्कस्य । [ तर्क के ३ नाम । ] ( १३ ) संशयस्य चत्वारि नामानि । [ सन्देह के ४ नाम । ] ( १४ ) निर्णयात्मकस्य ज्ञानस्य द्वे नामनी । [ निश्चय के २ नाम । ]

[1]मिथ्यादृष्टिर्नास्तिकता, [2]व्यापादो द्रोहचिन्तनम् ।
[3]समौ सिद्धान्तराद्धान्तौ, [4]भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ ४ ॥
[5]संविदागूः प्रतिज्ञानं नियमाऽऽश्रवसंश्रवाः ।
अङ्गीकाराभ्युपगम-प्रतिश्रव-समाधयः ॥ ५ ॥
[6]मोक्षे धीर्ज्ञानमन्यत्र [7]विज्ञानं शिल्पशास्त्रयोः ।
[8]मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसाऽमृतम् ॥ ६ ॥
मोक्षोऽपवर्गो[9]ऽथाऽज्ञानमविद्याऽहम्मतिः स्त्रियाम् ।
[10]रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ॥ ७ ॥
गोचरा इन्द्रियार्थाश्च, [11]हृषीकं विषयीन्द्रियम् ।
[12]कर्मेन्द्रियं तु पाय्वादि [13]मनोनेत्रादि धीन्द्रियम् ॥ ८ ॥
[14]तुवरस्तु कषायोऽस्त्री, [15]मधुरो [16]लवणः [17]कटुः ।

---

( १ ) नास्तिकताया नामद्वयम् । [ नास्तिकता के २ नाम । ] ( २ ) परा-हितविचारस्य नामद्वयम् [ अनिष्टचिन्तन के २ नाम । ] ( ३ ) सिद्धान्तस्य द्वे नामनी । [सिद्धान्त के २ नाम । ] (४) भ्रान्तेर्नामत्रयम् । [भ्रान्ति के ३ नाम । ] ( ५ ) स्वीकरणस्य दश नामानि । [ स्वीकार करने के १० नाम । ] ( ६ ) मोक्षोपयोगिनी बुद्धिः ज्ञानम् । [ ज्ञान का १ नाम । ] ( ७ ) शिल्पादिबुद्धेरेकं नाम । [ विज्ञान का १ नाम । ] ( ८ ) अष्टौ नामानि मोक्षस्य । [ मोक्ष के ८ नाम । ] ( ९ ) अज्ञानस्य त्रीणि नामानि । [अज्ञान के ३ नाम ।] (१०) रूपादि-विषयाणां नामानि । [ रूप आदि विषयों के ३ नाम । ] ( ११ ) इन्द्रियाणां त्रीणि नामानि । [ इन्द्रियों के ३ नाम । ] ( १२ ) पाय्वादीनि कर्मेन्द्रियाणि । यथोक्तं ग्रन्थान्तरे–'पायूपस्थे पाणिपादौ वाक्चेतीन्द्रियसङ्ग्रहः' । [ गुद, लिंग आदि को कर्मेन्द्रिय कहते हैं । ] (१३) मनोनेत्रादीनि ज्ञानेन्द्रियाणि । यथोक्तं ग्रन्थान्तरे—

'मनः कर्णौ तथा नेत्रं रसना च त्वया सह ।
नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते' ॥ इति ।

[ मन तथा नेत्र आदि को ज्ञानेन्द्रिय कहते हैं । ] ( १४ ) कषायस्य द्वे नामनी । [ कषायरस के २ नाम । ] ( १५ ) एकं मधुररसस्य । [ मीठा रस । ] ( १६ ) एकं लवणरसस्य । [ नमकीन रस । ] ( १७ ) एकं कटुरसस्य । यथोक्तं शार्ङ्गधरसंहितायाम्—

'संवेजयेद् यो रसनां निपाते तुदतीव च ।
विदहन् मुख-नासाऽक्षि संस्रावी स कटुः स्मृतः ॥ इति ।

[1]तिक्तो[2]ऽम्लश्च [3]रसाः पुंसि, [4]तद्वत्सु षडमी त्रिषु ॥ ९ ॥
[5]विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।
[6]आमोदः सोऽतिनिर्हारी, [7]वाच्यलिङ्गत्वमागुणात् ॥ १० ॥
[8]समाकर्षी तु निर्हारी, [9]सुरभिर्घ्राणतर्पणः ।
इष्टगन्धः सुगन्धिः [10]स्यादामोदी मुखवासनः ॥ ११ ॥
[11]पूतिगन्धस्तु दुर्गन्धो, [12]विस्रं स्यादामगन्धि यत् ।
[13]शुक्ल-शुभ्र-शुचि-श्वेत-विशद-श्येत-पाण्डुराः ॥ १२ ॥
अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः ।

---

[ कटुरस, जैसे मिर्च । ] अन्य टीकाकारों ने कटु रस के उदाहरण में नीम को प्रस्तुत किया है जो सर्वथा भ्रम है । स्पष्टीकरण के लिए कटुरस का प्रमाण संस्कृत टीका में दे दिया है ।

( १ ) एकं तिक्तरसस्य । यथोक्तं शार्ङ्गधरसंहितायाम्—

'प्रतिहन्ति निपाते यो रसनां स्वदते न च ।
स तिक्तो मुख-वैशद्य-शोषप्रह्लादकारकः' ॥ इति ।

[ तिक्तरस, जैसे नीम । ] तिक्त के प्रयोग में अधिकांश लोग भूल करते हैं । उक्त श्लोक के लक्षणों पर ध्यान दें । मुख वैशद्य के लिए ही नीम की दातून की जाती है । ( २ ) अम्लरसस्यैकम् । [ खट्टारस । ] ( ३ ) मधुरादयो गुणमात्रवाचका रसा इति कथ्यन्ते । [ मधुर आदि का एक नाम रस । ] ( ४ ) अमी रसवाचकाः शब्दास्त्रिषु प्रयुज्यन्ते । [ रसवाचक शब्दों का प्रयोग तीनों लिंगों में होता है । ] ( ५ ) मनोहरस्य गन्धस्य । [ इत्र । ] ( ६ ) अत्यन्तचेतोहरस्य गन्धस्यैकम् । [ रूह । ] ( ७ ) गुणशब्दं यावत् सर्वे शब्दास्त्रिषु लिङ्गेषु भवन्ति । ( ८ ) आकर्षणगुणयुक्तस्य गन्धस्य नामद्वयम् । [ आकर्षक गन्ध के २ नाम । ] ( ९ ) घ्राणतर्पणात्मकस्य सुगन्धस्य चत्वारि नामानि । [ उत्तमगन्ध के ४ नाम । ] ( १० ) मुखवासनद्रव्यादेर्नामद्वयम् । शब्दार्णवे विशेषः—

'कस्तूरिकायामामोदः कर्पूरे मुखवासनः ।
बकुले स्यात् परिमलश्चम्पके सुरभिस्तथा' ॥

[ पान के सुगन्धित मसाला आदि के २ नाम । ] ( ११ ) दुर्गन्धस्य द्वे नामनी । [ दुर्गन्ध के २ नाम । ] ( १२ ) अपक्वमांसगन्धस्य नामद्वयम् । [ कच्चे मांस की गन्ध के २ नाम । ] ( १३ ) त्रयोदशनामानि शुक्लवर्णस्य । [ सफेद रंग के १३ नाम । ]

[1]हरिणः पाण्डुरः पाण्डुरी[2]षत्पाण्डुस्तु धूसरः ॥ १३ ॥
[3]कृष्णे नीला-ऽसित-श्याम-काल-श्यामल-मेचकाः ।
[4]पीतो गौरो हरिद्राभः, [5]पालाशो हरितो हरित् ॥ १४ ॥
[6]रोहितो लोहितो रक्तः, [7]शोणः कोकनदच्छविः ।
[8]अव्यक्तरागस्त्वरुणः, [9]श्वेतरक्तस्तु पाटलः ॥ १५ ॥
[10]श्यावः स्यात्कपिशो, [11]धूम्र-धूमलौ कृष्णलोहिते ।
[12]कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥
[13]चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।

---

( १ ) ईषत् पीतवर्णस्य त्रीणि नामानि शब्दार्णवे विशेषः—

'पाण्डुस्तु पीतभागार्धः केतकी धूलिसन्निभः ।
धूसरस्तु सितः पीतलेशवान् बकुलच्छविः' ॥

[ हल्के पीले रंग के ३ नाम । ] ( २ ) धूसरवर्णस्यैकं नाम । [ धूसर वर्ण का १ नाम ।] (३) कृष्णवर्णस्य सप्त नामानि । शब्दार्णवस्तु कृष्णमेचकयोरित्थं भेदमाह—'मेचकः कृष्णनीलः स्यादतसीपुष्पसन्निभः' ॥ [ काले रंग के ७ नाम । ] ( ४ ) हरिद्राभपीतवर्णस्य नामत्रयम् । [ पीला रंग के ३ नाम । ] ( ५ ) हरितवर्णस्य नामत्रयम् । [ हरा रंग के ३ नाम । ] ( ६ ) रक्तवर्णस्य नामत्रयम् । [ लाल रंग के ३ नाम । ] ( ७ ) अत्यन्तरक्तस्य नामद्वयम् । [गहरा लाल रंग के २ नाम । ] ( ८ ) ईषद्रक्तस्य द्वे नामनी । [ हल्का लाल रंग के २ नाम । ] ( ९ ) श्वेतवर्णमिश्रितरक्तवर्णस्य नामद्वयम् । [ सफेदी युक्त लाल रंग के २ नाम । ] ( १० ) कृष्णपीतमिश्रितवर्णस्य नामद्वयम् । [ काला पीला मिले हुए रंग के २ नाम । ] ( ११ ) धूम्रवर्णस्य नामत्रयम् । [ धूम्रवर्ण के ३ नाम । ] ( १२ ) षट् कपिलवर्णस्य नामानि । अत्र शब्दार्णवे विशेषः । तद्यथा—

'सित-पीत-हरिद्-रक्तः कडारस्तृणवह्निवत् ।
अयन्तूद्रिक्तपीताङ्गः कपिलो गोविभूषणः ॥
हरितांशेऽधिकेऽसौ तु पिशङ्गः पद्मधूलिवत् ।
पिशङ्गस्त्वसितावेशात् पिङ्गोः दीपशिखादिषु ॥
पिङ्गलस्तु परच्छायः पिङ्गः शुक्लाङ्गखण्डवत् । इति ।

[ कपिलवर्ण के ७ नाम ] ( १३ ) विचित्रवर्णस्य षड् नामानि । [ चितकबरा के ६ नाम । ]

[1]गुणे शुक्लादयः पुंसि, गुणिलिङ्गास्तु तद्वति ॥ १७ ॥

इति धीवर्गः ।

---

## ६. अथ शब्दादिवर्गः

[2]ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।
[3]व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥
[4]अपभ्रंशोऽपशब्दः स्याच्छास्त्रे[5] शब्दस्तु वाचकः ।
[6]तिङ्-सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ॥ २ ॥
[7]श्रुतिः स्त्री वेद आम्नायस्त्रयी-धर्मस्तु[8] तद्विधिः ।
[9]स्त्रियामृक्सामयजुषी इति [10]वेदास्त्रयस्त्रयी ॥ ३ ॥

---

( १ ) गुणवाचकाः शुक्लादयः पुंसि । द्रव्यवाचकाः शब्दा विशेष्यनिघ्ना भवन्ति । यथा——शुक्ला भित्तिः । शुक्लं यशः । शुक्लः केशः । [ गुणवाचक शुक्ल आदि शब्द पुल्लिग होते हैं । और वे ही शब्द द्रव्यवाचक होने पर विशेष्य के लिंग के अनुसार लिंग वाले होते हैं । ]

इति धीवर्गः ।

---

( २ ) सरस्वत्याः सप्त नामानि । [सरस्वती के ७ नाम ।] ( ३ ) भाषणस्य षड् नामानि । केचिदाचार्याः ब्राह्मीत्यारभ्य वचः पर्यन्तम् भाषणस्यैव पर्याया इत्यामनन्ति । [ भाषण के ६ नाम । ] ( ४ ) अपभ्रंशशब्दस्य द्वे नामनी । [ अपभ्रंश शब्द के २ नाम । ] ( ५ ) व्याकरणादिशास्त्रे यः साधुः स शब्दः । [ वाचकशब्द का १ नाम । ] ( ६ ) तिङन्त-सुबन्तसमूहः, कारकान्विता क्रिया वा वाक्यं भवति । तिङन्तचयः—भवति, एधते प्रभृतिः । सुबन्तचयः—'सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः' । [वाक्य लक्षण का १ नाम ।] ( ७ ) वेदस्य चत्वारि नामानि । [ वेद के ४ नाम । ] ( ८ ) वेदनिर्दिष्टकर्मण एकं नाम । [ धर्म । ] ( ९ ) वेदत्रयस्य प्रत्येकमेकैकं नाम । [ ऋग्, यजुः, सामवेद के नाम । ] ( १० ) वेदत्रययस्यैकं नाम । [ तीनों वेदों का १ नाम । ]

[1]शिक्षेत्यादि श्रुतेरङ्गम[2]ोङ्कारप्रणवौ समौ ।
[3]इतिहासः पुरावृत्तम[4]ुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥
[5]आन्वीक्षिकी दण्डनीतिस्तार्कविद्याऽर्थशास्त्रयोः ।
[6]आख्यायिकोपलब्धार्था, [7]पुराणं पञ्चलक्षणम् ॥ ५ ॥
[8]प्रबन्धकल्पना कथा, [9]प्रबह्लिका प्रहेलिका ।
[10]स्मृतिस्तु धर्मसंहिता, [11]समाहृतिस्तु सङ्ग्रहः ॥ ६ ॥
[12]समस्या तु समासार्था, [13]किंवदन्ती जनश्रुतिः ।

---

( १ ) शिक्षेत्यादिश्रुतेरङ्गम् । तद्यथा—

'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते' ॥ इति ।

[ वेदाङ्ग का नाम । ] ( २ ) ॐकारस्य द्वे नामनी । [ ओंकार के २ नाम । ] ( ३ ) इतिहासस्य द्वे नामनी । [ इतिहास के २ नाम । ] ( ४ ) उदात्तादि-स्वराणामेकं नाम । तद्यथा—

'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः' ॥ इति ।

[ उदात्त आदि स्वरों के नाम । ] ( ५ ) आन्वीक्षिकी तर्कविद्या । अर्थशास्त्रं राजनीतिशास्त्रं दण्डनीतिरिति । [ तर्कविद्या और दण्डनीति का नाम । ] ( ६ ) ज्ञातविषया कथा आख्यायिका कथ्यते । (सत्यकथा ।) ( ७ ) पुराणं पञ्चलक्षणा-त्मकम् । तद्यथा—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितश्चैव पुराणं पञ्च लक्षणम्' ॥ इति ।

[ पुराण का नाम । ] ( ८ ) प्रबन्धकल्पना कथेत्युच्यते । [ कहानी वा उपन्यास । ] ( ९ ) प्रहेलिकाया द्वे नामनी । [ पहेली के २ नाम । ] ( १० ) मनुप्रभृतिरचितधर्मशास्त्रस्य नामद्वयम् । [ धर्मशास्त्र के २ नाम । ] ( ११ ) सङ्ग्रहस्य द्वे नामनी । सङ्ग्रहस्य स्वरूपम्—

'विस्तरेणोपदिष्टानामर्थानां सूत्र-भाष्ययोः ।
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः ॥ इति ।

[ संग्रह के २ नाम । ] ( १२ ) द्वे समस्यायाः । [ समस्या के २ नाम । ] ( १३ ) किंवदन्त्या द्वे नामनी । [ किंवदन्ती ( कहावत ) के २ नाम । ]

[1]वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः [2]स्यादथाह्वयः ॥ ७ ॥
आख्याह्वे अभिधानञ्च नामधेयं च नाम च ।
[3]हूतिराकारणाऽऽह्वानं [4]संहूतिर्बहुभि कृता ॥ ८ ॥
[5]विवादो व्यवहारः [6]स्यादुपन्यासस्तु वाङ्मुखम् ।
[7]उपोद्घात उदाहारः, [8]शपनं शपथः पुमान् ॥ ९ ॥
[9]प्रश्नोऽनुयोगः पृच्छा च, [10]प्रतिवाक्योत्तरे समे ।
[11]मिथ्याभियोगोऽभ्याख्यानमथ [12]मिथ्याभिशंसनम् ॥ १० ॥
अभिशापः, [13]प्रणादस्तु शब्दः स्यादनुरागजः ।
[14]यशः कीर्तिः समज्ञा च, [15]स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥
[16]आम्रेडितं द्विस्त्रिरुक्तम्[17]उच्चैर्घुष्टन्तु घोषणा ।
[18]काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥ १२ ॥
[19]अवर्णा-ऽऽक्षेप-निर्वाद-परीवादा-ऽपवादवत् ।
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥

---

( १ ) समाचारस्य चत्वारि नामानि । [ समाचार के ४ नाम । ] ( २ ) नाम्नः षड् नामानि । [ नाम ( संज्ञा ) के ६ नाम । ] ( ३ ) आह्वानस्य त्रीणि नामानि । [ बुलाने के ३ नाम । ] ( ४ ) अनेकपुरुषकृतस्य आह्वानस्यैकम् । [ अनेक व्यक्तियों द्वारा एक साथ बुलाने का नाम । ] (५) विवादस्य द्वे नामनी । [ मुकद्दमा के २ नाम । ] ( ६ ) वार्ताप्रारम्भणस्य नाम । [अपनी बात कहना ।] ( ७ ) वक्ष्यमाणार्थवर्णनस्य । अपरे दृष्टान्तादेरिति स्वीकुर्वते । [ दृष्टान्त अथवा उपोद्घात के २ नाम । ] ( ८ ) शपथस्य द्वे नामनी । [ शपथ के २ नाम । ] ( ९ ) प्रश्नस्य नामत्रस्यम् । [ पूछना के ३ नाम । ] ( १० ) उत्तरस्य नामद्वयम् । [ उत्तर ( जबाब ) के २ नाम । ] ( ११ ) मिथ्याभियोगस्य नामद्वयम् । [ झूठा मुकद्दमा के २ नाम । ] ( १२ ) मिथ्यापवादस्य द्वे नामनी । [झूठा कलंक के २ नाम । ] ( १३ ) अनुरागशब्दस्यैकं नाम । [ पुचकारना । ] ( १४ ) कीर्तेः त्रीणि नामानि । [ यश के ३ नाम । ] ( १५ ) स्तुतेश्चत्वारि नामानि । [ स्तुति के ४ नाम । ] ( १६ ) द्विरुक्तेर्नामद्वयम् । [ दो बार कहने का नाम । ] ( १७ ) घोषणायाः नामद्वयम् । [ घोषणा के २ नाम । ] ( १८ ) शोकभीत्यादिभिः ध्वनेः यः विकारस्तस्यैकं नाम । [ दुःख भय आदि के कारण उत्पन्न ध्वनि का नाम 'काकु' । ] ( १९ ) निन्दाया दश नामानि । [ निन्दा के १० नाम । ]

[1]पारुष्यमतिवादः [2]स्याद्भर्त्सनं त्वपकारगीः ।
[3]यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ॥ १४ ॥
[4]तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।
[5]स्यादाभाषणमालापः [6]प्रलापोऽनर्थकं वचः ॥ १५ ॥
[7]अनुलापो मुहुर्भाषा, [8]विलापः परिदेवनम् ।
[9]विप्रलापो विरोधोक्तिः, [10]संलापो भाषणं मिथः ॥ १६ ॥
[11]सुप्रलापः सुवचनम[12]पलापस्तु निह्नवः ।
[ चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा ।
अस्त्री चाटु चटुश्लाघा प्रेम्णा मिथ्या विकत्थनम् ॥ ]
[13]संदेशवाग्वाचिकं स्याद् [14]वाग्भेदास्तु त्रिषूत्तरे ॥ १७ ॥
[15]रुशती वागकल्याणी [16]स्यात्कल्या तु शुभात्मिका ।
[17]अत्यर्थमधुरं सान्त्वं, [18]सङ्गतं हृदयङ्गमम् ॥ १८ ॥
[19]निष्ठुरं परुषं [20]ग्राम्यमश्लीलं, [21]सूनृतं प्रिये ।

---

( १ ) अप्रियभाषणस्य द्वे नामनी । [ अप्रियभाषण के २ नाम । ] ( २ ) तिरस्कारपूर्णवचनस्य द्वे नामनी । [ झिड़कना के २ नाम । ] ( ३ ) सनिन्द-परिभाषणस्यैकम् । [ उलहना । ] ( ४ ) भगिन्यादिमैथुनसम्बन्धिकाक्रोशस्यैकम् । [ माता बहिन सम्बन्धी गाली । ] ( ५ ) सम्भाषणस्य नामद्वयम् । [ सम्भाषण के २ नाम । ] ( ६ ) व्यर्थवचनस्यैकम् । [ बेकार की बकवाद । ] ( ७ ) मुहुर्भाषणस्य द्वे नामनी । [ बार बार बोलना के २ नाम । ] ( ८ ) परिदेवनस्य नामद्वयम् । [ विलाप के २ नाम । ] ( ९ ) विरुद्धवचनस्य नायद्वयम् । [ विरोध-पूर्ण वार्तालाप के २ नाम । ] ( १० ) मिथ. सम्भाषणस्यैकम् । [ बातचीत । ] ( ११ ) सम्यग्भाषणस्य नामद्वयम् । [ सुन्दरभाषण के २ नाम । ] ( १२ ) निह्नववचनस्य द्वे नामनी । [ बात से मुकर जाना के २ नाम । ] (१३) सन्देश-वचनस्य द्वे नामनी । [ सन्देश । ] ( १४ ) रुशत्यादयो वाग्भेदाः त्रिषु लिङ्गेषु भवन्ति इति । [ रुशती आदि के रूप तीनों लिंगों में होते है । ] ( १५ ) अकल्याणकरवचनस्य द्वे नामनी । [ अशुभवचन के २ नाम । ] ( १६ ) शुभवच-नस्य द्वे नामनी । [ कल्याणकारकवचन के २ नाम । ] ( १७ ) सान्त्ववचनस्य त्रिषु । [ आश्वासन देना । ] ( १८ ) हृदयङ्गमशब्दस्य द्वे नामनी । [ प्रियवचन के २ नाम ] ( १९ ) निष्ठुरवचनस्य नामद्वयम् त्रिषु । [ कठोरवचन के २ नाम । ] ( २० ) अश्लीलवचनस्य द्वे नामनी । [ लज्जाकर वचन के २ नाम । ] ( २१ ) सत्यवचनस्य नामद्वयम् । [ सत्यवचन के २ नाम । ]

सत्येऽर्थे[1] सङ्कुलक्लिष्टे परस्परपराहते ॥ १९ ॥
[2]लुप्तवर्णपदं ग्रस्तं, [3]निरस्तं त्वरितोदितम् ।
[4]अम्बूकृतं सनिष्ठीवमबद्धं[5] स्यादनर्थकम् ॥ २० ॥
[6]अनक्षरमवाच्यं [7]स्यादाहतं तु मृषार्थकम् ।
[ [8]सोल्लुण्ठनं तु सोत्प्रासं [9]मणितं रतिकूजितम् ।
[10]श्राव्यं हृद्यं मनोहारि, [11]विस्पष्टं प्रकटोदितम् ॥ ]
[12]अथ म्लिष्टमविस्पष्टं, [13]वितथं त्वनृतं वचः ॥ २१ ॥
[14]सत्यं तथ्यमृतं सम्यगमूनि[15] त्रिषु तद्वति ।
[16]शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वनाः ॥ २२ ॥
स्वान-निर्घोष-निर्ह्राद-नाद-निस्वान-निस्वनाः ।
आरवाऽऽरावसंरावविरावा, [17]अथ मर्मरः ॥ २३ ॥
स्वनिते वस्त्रपर्णानां भूषणानां[18] तु शिञ्जितम् ।

---

( १ ) विरुद्धार्थवचनस्य त्रीणि नामानि । [ विपरीत वचन के ३ नाम । ] ( २ ) भाषणावसरे लुप्तवर्णवचसो द्वे नामनी । [ बोलचाल में स्पष्ट उच्चारण न होने के २ नाम । ] ( ३ ) शीघ्रोच्चारितवचसो नाम । [ जल्दी २ उच्चारण किये वचन का नाम । ] ( ४ ) थूत्कारसहितवाक्यस्य नामद्वयम् । [ थूक के छींटे युक्त वचन के २ नाम । ] ( ५ ) अर्थशून्यवचसो नाम । [ निरर्थक वाक्य का नाम । ] ( ६ ) अवाच्यवचनस्य नामद्वयम् । [ निन्दायुक्त वाक्य के २ नाम । ] ( ७ ) मिथ्यावचनस्यैकं त्रिषु । [ झूठी बात । ] ( ८ ) उपहासयुक्तवचनस्य द्वे नामनी । [ मजाक के २ नाम । ] ( ९ ) रतिकूजितशब्दस्यैकं नाम । [ रति-काल में स्त्री के मुख से निकले शब्द का नाम । ] ( १० ) मनोहारिवचनस्य त्रीणि नामानि । [ प्रियवचन के ३ नाम । ] ( ११ ) स्पष्टवचनस्य नामद्वयम् । [ स्पष्टशब्द के २ नाम । ] ( १२ ) अस्पष्टवचनस्य द्वे नामनी । [ अस्पष्ट वाक्य के २ नाम । ] ( १३ ) वितथवचनस्य द्वे नामनी । [ झूठ के २ नाम । ] ( १४ ) सत्यवचनस्य चत्वारि नामानि । [ सत्य के ४ नाम । ] ( १५ ) अमूनि सत्यादीनि चत्वारि सत्वादिगुणवति पुरुषादौ त्रिषु प्रयुज्यन्ते । [ ये सत्यादि शब्द विशेष्य के अनुसार तीनों लिंगों में प्रयुक्त होते हैं । ] ( १६ ) शब्दस्य सप्तदशनामानि । [ शब्द के १७ नाम । ] ( १७ ) वस्त्रपर्णानां ध्वनेरेकम् । [ वस्त्र और पत्तों के शब्द का नाम । ] ( १८ ) भूषणध्वनेरेकम् । [ आभूषणों की झनकार । ]

[1]निक्काणो निक्कणः क्काणः क्कणः क्कणनमित्यपि ॥ २४ ॥
वीणायाः क्कणिते प्रादेः प्रक्काण-प्रक्कणादयः ।
[2]कोलाहलः कलकलस्तिरश्चां[3] वाशितं रुतम् ॥ २५ ॥
स्त्री [4]प्रतिश्रुत्प्रतिध्वाने, [5]गीतं गानमिमे समे ।

इति शब्दादिवर्गः ॥ ६ ॥



## ७. अथ नाट्यवर्गः

[6]निषाद-र्षभ-गान्धार-षड्ज-मध्यम-धैवताः ॥
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥
[7]काकली तु कले सूक्ष्मे, [8]ध्वनौ तु मधुराऽस्फुटे ।
कलो, [9]मन्द्रस्तु गम्भीरे, [10]तारोऽत्युच्चैस्त्रयस्त्रिषु[11] ॥ २ ॥
[ नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ।
स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते ॥ ]
[12]समन्वितलयस्त्वेकतालो, [13]वीणा तु वल्लकी ।
विपञ्ची, [14]सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥

---

( १ ) वीणाया ध्वनेः सप्त नामानि । [ वीणा की तान के ७ नाम । ] ( २ ) कोलाहलस्य द्वे नामनी । [ कोलाहल के २ नाम । ] ( ३ ) पक्षीणां शब्दस्यैकम् । [ पक्षियों का कलरव । ] ( ४ ) प्रतिध्वनेः द्वे नामनी । [प्रतिध्वनि के २ नाम । ] ( ५ ) गीतस्य द्वे नामनी । [ गीत के २ नाम । ]

इति शब्दादिवर्गः ।



( ६ ) निषादादिसप्तस्वराणामेकैकं नाम । [ संगीत के सातस्वरों के १-१ नाम । ] ( ७ ) सूक्ष्मध्वनेरेकं नाम । [ सूक्ष्मध्वनि का नाम काकली । ] ( ८ ) अव्यक्तमधुरध्वनेरेकम् । [ अव्यक्तमधुरध्वनि का नाम 'कल' । ] ( ९ ) गम्भीर-शब्दस्यैकं नाम । [ गम्भीरशब्द का नाम । ] ( १० ) उच्चशब्दस्यैकं नाम । [ ऊँचा शब्द । ] ( ११ ) कल, मन्द्र, तारशब्दास्त्रिषु लिङ्गेषु प्रयुज्यन्ते । [ कल मन्द्र तार शब्दों का प्रयोग तीनों लिंगों में होता है । ] ( १२ ) समन्वितगीतवाद्य-लयस्यैकम् । [ समा बंधना । ] ( १३ ) वीणायास्त्रीणि नामानि । [ वीणा के ३ नाम ।] ( १४ ) सप्तभिस्तन्त्रीभिः समन्विताया वीणाया नामैकम् । [ सितार । ]

**ततं [1]वीणादिकं वाद्यमानद्धं[2] मुरजादिकम् ।**
**[3]वंशादिकं तु सुषिरं, [4]कांस्यतालादिकं घनम् ॥ ४ ॥**
**[5]चतुर्विधमिदं वाद्यं वादित्राऽऽतोद्यनामकम् ।**
**[6]मृदङ्गा मुरजा [7]भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ॥ ५ ॥**
**[8]स्याद्यशःपटहो ढक्का, [9]भेरी स्त्री दुन्दुभिः पुमान् ।**
**[10]आनकः पटहोऽस्त्री [11]स्यात्कोणो वीणादिवादनम् ॥ ६ ॥**
**[12]वीणादण्डः प्रवालः [13]स्यात्ककुभस्तु प्रसेवकः ।**
**[14]कोलम्बकस्तु कायोऽस्या [15]उपनाहो निबन्धनम् ॥ ७ ॥**
**[16]वाद्यप्रभेदा डमरु-मड्डु-डिण्डिम-झर्झराः ।**
**मर्दलः पणवोऽन्ये च [17]नर्तकी-लासिके समे ॥ ८ ॥**

---

( १ ) वीणादिकं वाद्यं ततमिति कथ्यते । [ वीणा आदि वाद्य का नाम 'तत' है । ] ( २ ) मुरजादिवाद्यम् आनद्धं कथ्यते । [ तबला । ] ( ३ ) एकं वंशादिवाद्यस्य । [ वंशी आदि का नाम । ] ( ४ ) कांस्यतालादेरेकं नाम । [ मंजीरा । ] ( ५ ) चतुर्विधवाद्यस्य त्रीणि नामानि । [बाजा के ३ नाम ।] (६) मृदङ्गस्य नामद्वयम् । [मृदङ्ग के २ नाम ।] (७) वाद्यभेदस्यैकैकं नाम । तद्यथा–

'हरीतक्याऽऽकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः ।
आलिङ्ग्यश्चैव गोपुच्छो मध्यदक्षिणवामगाः' ॥ इति ।

[ हरीतकी के आकार का त्वङ्क्य वाद्य, जौ जैसा ऊर्ध्वक वाद्य और गाय की पूँछ के सदृश आलिङ्ग्य वाद्य होता है । ] ( ८ ) यशः पटहस्य द्वे नामनी । [ डुगडुगी के २ नाम ।] ( ९ ) भेर्या नामद्वयम् । [ भेरी (नगाड़ा) के २ नाम । ] ( १० ) पटहस्य द्वे नामनी । [ पटह ( तासा ) के २ नाम । ] ( ११ ) वीणावादनार्थ-निर्मितधनुषो द्वे नामनी । [ सारंगी बजाने का धनुषाकार डंडा के २ नाम । ] ( १२ ) द्वे वीणादण्डस्य । [ वीणादण्ड के २ नाम । ] ( १३ ) वीणाया अधःस्थितचर्मबद्धदारुभाण्डस्यैकम् । [ वीणा के नीचे चमड़े से बंधे हुए लकड़ी के पात्र का नाम । ] ( १४ ) तन्त्रीरहितवीणाशरीरस्यैकम् । [ बिना तार की वीणा । ] ( १५ ) तन्त्रीनिबन्धनोर्ध्वभागस्यैकम् । [वीणा के तार बाँधने की ऊपरी खूंटी । ] ( १६ ) वाद्यविशेषाणाम् एकैकं नाम । [ वाद्यविशेषों के १-१ नाम । ] (१७) नर्तक्या द्वे नामनी । [ नाचने वाली स्त्री के २ नाम । ]

**[1]विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।**
**[2]तालः कालक्रियामानं [3]लयः साम्यमथास्त्रियाम् ॥ ९ ॥**
**[4]ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्तने ।**
**[5]तौर्यत्रिकं नृत्य-गीत-वाद्यं नाट्यमिदं त्रयम् ॥ १० ॥**
**[6]भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ।**
**स्त्रीवेषधारी पुरुषो नाट्योक्तौ [7]गणिकाऽज्जुका ॥ ११ ॥**
**[8]भगिनीपतिरावुत्तो [9]भावो [10]विद्वानथाऽवुकः ।**
**जनको, [11]युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥**
**[12]राजा भट्टारको देवस्तत्सुता[13] भर्तृदारिका ।**
**देवी [14]कृताभिषेकायामितरासु[15] तु भट्टिनी ॥ १३ ॥**
**[16]अब्रह्मण्यमवध्योक्तौ [17]राजश्यालस्तु राष्ट्रियः ।**

( १ ) विलम्बितनृत्यगीतवाद्यं 'ततम्', द्रुतं नृत्यगीतादि 'ओघः' तथा मध्य-नृत्यगीतादि 'घनम्' इति कथ्यते । [ तत, ओघ, घन नृत्यादि के भेद हैं । ] ( २ ) कालक्रियामानस्यैकं नाम तालः । [ ताल । ] ( ३ ) गीततन्त्रीलयस्यैकम् । [ लय । ] ( ४ ) नृत्यस्य षड् नामानि । [ नृत्य के ६ नाम । ] ( ५ ) नृत्य-गीतवाद्यस्य नामद्वयम् । [ नाचना-गाना-वजाना । ] ( ६ ) स्त्रीवेशधारिनर्तकस्य नाम । [ स्त्री का वेश धारण करके नाचनेवाले पुरुष का नाम । ] ( ७ ) गणिका-अज्जुकाविति नाट्ये उक्तौ । [ वेश्या ( गणिका ) । ] ( ८ ) भगीनीपतिः आवुत्तः कथ्यते । [ भगिनी पति का नाम । ] ( ९ ) नाट्ये विद्वान् 'भाव' इति कथ्यते । [ नाट्य में विद्वान् को भाव कहते है । ] ( १० ) नाट्ये जनकः 'आवुक' इत्युच्यते । [ नाटक में पिता को 'आवुक' कहते हैं । ] ( ११ ) नाट्ये युवराजः कुमारः भर्तृदारकः वा कथ्यते । [ नाट्य में युवराज को कुमार या भर्तृ-दारक कहते है । ] ( १२ ) नाट्योक्तौ राजा भट्टारकः, देवो वा । [ नाट्य में राजा को भट्टारक या देव कहते है । ] ( १३ ) नाट्ये राजपुत्र्या एकं नाम । [नाट्य में राजपुत्री को 'भर्तृदारिका' कहते हैं ।] (१४) नाट्ये राज्ञ्या एकं नाम । [ नाट्य में रानी को देवी कहते हैं । ] (१५) नाट्येऽनभिषिक्तराजपत्नीनामेकम् । [ नाट्य में अभिषेक न की हुई रानियों को भट्टिनी कहते हैं । ] ( १६ ) नाट्ये नार्हं बध्य एवं प्रभृतिप्रार्थनासु 'अब्रह्मण्यम्' इति उच्यते । [ दुहाई देना । ] (१७) नाट्ये राजश्यालस्यैकम् । [नाट्य में राजा का साला को राष्ट्रिय कहते हैं ।]

[1]अम्बा माताऽथ [2]बाला स्याद्वासूरार्यस्तु [3]मारिषः ॥ १४ ॥
[4]अत्तिका भगिनी ज्येष्ठा, [5]निष्ठा-निर्वहणे समे ।
[6]हण्डे-हञ्जे-हलाऽऽह्वाने नीचां चेटीं सखीं प्रति ॥ १५ ॥
[7]अङ्गहारोऽङ्गविक्षेपो, [8]व्यञ्जकाऽभिनयौ समौ ।
[9]निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १६ ॥
[10]शृङ्गार-वीर-करुणा-ऽद्भुत-हास्य-भयानकाः ।
बीभत्स-रौद्रौ च रसाः, [11]शृङ्गारः शुचिरुज्ज्वलः ॥ १७ ॥
[12]उत्साहवर्द्धनो वीरः, [13]कारुण्यं करुणा घृणा ।
कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो [14]हसः ॥ १८ ॥
हासो हास्यञ्च, [15]बीभत्सं विकृतं त्रिष्विदं द्वयम् ।
[16]विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ[17] भैरवम् ॥ १९ ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।

---

( १ ) मातुः एकं नाम । [ माता । ] ( २ ) वालाया वासूरिति नाम । [ बाला । ] ( ३ ) नाटये मान्यस्यैकम् । [ नाटय में आदरणीय को मारिष कहते हैं । ] ( ४ ) ज्येष्ठभगिन्या नाम । [ नाटय में बड़ी बहन को अत्तिका कहते हैं । ] ( ५ ) निर्वहणाभिधसन्धेर्द्वे नामनी नाटये । [ निबहजाना, पूरा होना । ] ( ६ ) नाटके नीचाया आह्वाने हण्डे, चेटया आह्वाने हञ्जे, सख्या आह्वाने हला, इति [ हण्डे, हञ्जे, हला ये क्रमशः नीच, चेटी और सखी को बुलाने के शब्द हैं । ] ( ७ ) नृत्यविशेषस्य द्वे नामनी । [ अङ्गहार नामक नृत्य के २ नाम । ] ( ८ ) हृद्गतभावाभिव्यञ्जकस्य द्वे नामनी । [ अभिनय के २ नाम । ] ( ९ ) अङ्गैर्निष्पन्नं भ्रूविक्षेपादिकम् आङ्गिकम् । सत्येन कृतं स्वेदरोमाञ्चादिकम् सात्विकम् । [आंगिक और सात्त्विक भावों के नाम ।] (१०) शृङ्गारादिरसानामेकैकं नाम । [ शृंगार, वीर, करुण, अद्भुत, हास्य, भयानक, बीभत्स, रौद्र, ये ८ रसों के नाम है । ] ( ११ ) त्रीणि शृङ्गाररस्य नामानि । [ शृंगार रस के ३ नाम । ] ( १२ ) वीररसस्य द्वे नामनी । [ वीररस के २ नाम । ] (१३) करुणरसस्य सप्त नामानि । [ करुणरस के ७ नाम । ] (१४) हास्यरसस्य त्रीणि नामानि । [ हास्य रस के ३ नाम । ] ( १५ ) द्वे बीभत्सरसस्य नामनी त्रिषु । [ बीभत्सरस के २ नाम ] ( १६ ) अद्भुतरसस्य चत्वारि नामानि त्रिषु लिङ्गेषु । [ अद्भुतरस के ४ नाम ] ( १७ ) भयानकरसस्य नव नामानि । [ भयानक रस के ९ नाम । ]

भयङ्करं प्रतिभयं, [1]रौद्रं तूग्रममी [2]त्रिषु ॥ २० ॥
चतुर्दश, [3]दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।
[4]विकारो मानसो भावो[5]ऽनुभावो भावबोधकः ॥ २१ ॥
[6]गर्वोऽभिमानोऽहङ्कारो [7]मानश्चित्तसमुन्नतिः ।
[ [8]दर्पोऽऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ]
[9]अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥
रीढा-ऽवमानना-ऽवज्ञा-ऽवहेलनमसूर्क्षणम् ।
[10]मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा, [11]साऽपत्रपाऽन्यतः ॥ २३ ॥
[12]क्षान्तिस्तितिक्षाऽभिध्या तु [13]परस्वविषये स्पृहा ।
[14]अक्षान्तिरीर्ष्याऽसूया[15] तु दोषारोपो गुणेष्वपि ॥ २४ ॥
[16]वैरं विरोधो विद्वेषो, [17]मन्युशोकौ तु शुक् स्त्रियाम् ।
[18]पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥
[19]कोप-क्रोधा-ऽमर्ष-रोष-प्रतिघा रुट्क्रुधौ स्त्रियौ ।

---

( १ ) रौद्ररसस्य द्वे नामनी । [ रौद्ररस के २ नाम । ] ( २ ) अद्भुताद्याश्चतुर्दशशब्दास्तद्वति त्रिषु प्रयुज्यन्ते । [ अद्भुतादि १४ शब्द तीनों लिंगों में प्रयुक्त होते हैं । ] ( ३ ) षड्भयस्य नामानि । [ भय के ६ नाम । ] ( ४ ) मानसविकारस्यैकम् । [ मनोविकार का नाम । ] ( ५ ) भावबोधनस्यैकम् । [ भावबोधन का नाम । ] ( ६ ) अहङ्कारस्य त्रीणि नामानि । [ अहंकार के ३ नाम । ] ( ७ ) मानस्य नामद्वयम्, अन्ये आचार्या गर्वादयः पञ्च पर्यायाः स्वीकुर्वन्ति । [ अभिमान के २ नाम । ] ( ८ ) प्रक्षिप्तानि षड् दर्पस्य । [घमण्ड के ६ नाम ।] ( ९ ) अनादरस्य नव नामानि । [ अपमान के ९ नाम । ] ( १० ) लज्जायाः पञ्च नामानि । [ लज्जा के ५ नाम । ] ( ११ ) गुरुजनादिभ्यो लज्जाया एकम् । [ बड़ों से लजाने का नाम । ] ( १२ ) क्षमायाः नामद्वयम् । [ क्षमा के २ नाम । ] ( १३ ) परकीयधनापहरणेच्छाया एकम् । [ दूसरे के धन के अपहरण की इच्छा का नाम । ] ( १४ ) ईर्ष्याया नामद्वयम् । [ ईर्ष्या के २ नाम । ] ( १५ ) गुणेषु दोषारोपणस्यैकम् । [ असूया । ] ( १६ ) वैरस्य त्रीणि नामानि । [ वैर के ३ नाम । ] ( १७ ) शोकस्य नामत्रयम् । [ शोक के ३ नाम । ] ( १८ ) पश्चात्तापस्य नामत्रयम् । [ पश्चात्ताप के ३ नाम । ] ( १९ ) क्रोधस्य षड् नामानि । [ क्रोध के ६ नाम । ]

[1]शुचौ तु चरिते शीलम्[2]उन्मादश्चित्तविभ्रमः ॥ २६ ॥
[3]प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ [4]दोहदम् ।
इच्छाऽऽकाङ्क्षास्पृहेहातृड्वाञ्छालिप्सामनोरथः ॥ २७ ॥
कामोऽभिलाषस्तर्षश्च [5]सोऽत्यर्थं लालसा द्वयो ।
[6]उपाधिर्ना धर्मचिन्ता, [7]पुंस्याधिर्मानसी व्यथा ॥ २८ ॥
[8]स्याच्चिन्ता स्मृतिराध्यानम्[9]उत्कण्ठोत्कलिके समे ।
[10]उत्साहोऽध्यवसायःस्यात्स [11]वीर्यमतिशक्तिभाक् ॥ २९ ॥
[12]कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ।
कुसृतिर्निकृतिः शाठ्यं, [13]प्रमादोऽनवधानता ॥ ३० ॥
[14]कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम् ।
[15]स्त्रीणां विलास-बिब्बोक-विभ्रमा ललितन्तथा ॥ ३१ ॥
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ।
[16]द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥
[17]व्याजोऽपदेशो लक्ष्यञ्च [18]क्रीडा खेला च कूर्दनम् ।

---

( १ ) पवित्रचरितस्यैकम् । [ शील । ] ( २ ) उन्मादस्यैकम् । [ पागलपन का नाम । ] ( ३ ) पञ्च नामानि स्नेहस्य । [ प्रेम के ५ नाम । ] ( ४ ) इच्छाया द्वादश नामानि । तत्र दोहदं गर्भिण्या इच्छाया विषये सुप्रसिद्धम् । [ इच्छा के १२ नाम । गर्भिणी की इच्छा को दोहद कहते हैं । ] ( ५ ) अतिप्रीतेरेकं नाम । [ अत्यन्त प्रेम का नाम । ] ( ६ ) धर्मचिन्ताया नामद्वयम् । [ धर्मचिन्ता के २ नाम । ] ( ७ ) मानसिकव्यथाया एकं नाम । [ आधि ( मानसिककष्ट ) । ] ( ८ ) स्मरणस्य त्रीणि नामानि । [ स्मरण के ३ नाम । ] ( ९ ) उत्कण्ठाया नामद्वयम् । [ उत्कण्ठा के २ नाम । ] ( १० ) उत्साहस्य नामद्वयम् । [ उत्साह के २ नाम । ] ( ११ ) अत्यन्तशक्तियुक्तस्यैकम् । [ अत्यधिक शक्तियुक्त का नाम । ] ( १२ ) कपटस्य नव नामानि । [ कपट के ९ नाम । ] ( १३ ) द्वे प्रमादस्य नामनी । [प्रमाद के २ नाम ।] (१४) कौतूहलस्य चत्वारि नामानि । [ कुतूहल के ४ नाम । ] ( १५ ) शृङ्गाराद् रत्यादेः, भावात् मानसिकविकाराच्च समुत्पन्नाः स्त्रीणां क्रियाः, विलासादिकाः षड् हावाभिधा भवन्ति । [ हाव के ६ नाम । ] ( १६ ) क्रीडायाः षड् नामानि । [ खेल तथा परिहास के ६ नाम । ] ( १७ ) व्याजस्य त्रीणि नामानि । [ छल कपट, बहाना के ३ नाम । ] ( १८ ) नामत्रयं क्रीडायाः । [ गेंद आदि खलों के ३ नाम । ]

[१]घर्मो निदाघः स्वेदः स्यात् [२]प्रलयो नष्टचेष्टता ॥ ३३ ॥
[३]अवहित्थाऽऽकारगुप्तिः, [४]समौ संवेग-संभ्रमौ ।
[५]स्यादाच्छुरितकं हासःसोत्प्रासः स [६]मनाक् स्मितम् ।। ३४ ॥
[७]मध्यमः स्याद् विहसितं, [८]रोमाञ्चो रोमहर्षणम् ।
[९]क्रन्दितं रुदितं क्रुष्टं, [१०]जृम्भस्तु त्रिषु जृम्भणम् ॥ ३५ ॥
[११]विप्रलम्भो विसंवादो [१२]रिङ्गणं स्खलनं समे ।
[१३]स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥
[१४]तन्द्री प्रमीला, [१५]भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ।
[१६]अदृष्टिः स्यादसौम्येऽक्षिण [१७]संसिद्धिप्रकृती त्विमे ॥ ३७ ॥
स्वरूपञ्च स्वभावश्च निसर्गश्चाथ [१८]वेपथुः ।
कम्पोऽथ [१९]क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥

इति नाटयवर्गः ।

---

( १ ) घर्मस्य नामत्रयम् । [घाम, पसीना के ३ नाम ।] ( २ ) नष्टचेष्टताया द्वे नामनी । [ वेहोशी के २ नाम । ] ( ३ ) आकारगुप्तेर्नामद्वयम् । [ मानसिक भाव को छिपाने के २ नाम । ] ( ४ ) संवेगस्य द्वे नामनी । [ उतावलापन के २ नाम । ] ( ५ ) मर्मभेदिन उपहासस्यैकं नाम । [ मजाक । ] ( ६ ) स्वल्पहासस्यैकम् । [ मुसकराना । ] ( ७ ) मध्यमहासस्य नाम । [ साधारण हँसना । ] ( ८ ) रोमाञ्चस्य नामद्वयम् । [रोमाञ्च के २ नाम । ] (९) रुदितस्य नामत्रयम् । [ रोना के ३ नाम । ] ( १० ) जृम्भणस्य नामद्वयम् । [ जँभाई के २ नाम । ] ( ११ ) अङ्गीकृतासम्पादनस्य द्वे नामनी । [ स्वीकार किये कार्य को न करने के २ नाम । ] ( १२ ) स्खलनस्य नामद्वयम् । बालानां हस्तपादाभ्यां चलनस्य केचित्, अपरे पिच्छिलादापतनस्य । [ घिसकना, फिसलना के २ नाम । ] (१३) निद्रायाः पञ्च नामानि । [ नींद के ५ नाम । ] ( १४ ) द्वे नामनी तन्द्रायाः । [ ऊँघाई, अवसाद के २ नाम । ] ( १५ ) भृकुटिसमुत्थानस्य त्रीणि नामानि । [ भौह चढ़ाना के ३ नाम । ] (१६) क्रुद्धदृष्टेरेकं नाम । [ कुटिल दृष्टि । ] (१७) स्वभावस्य पञ्च नामानि । [ स्वभाव के ५ नाम । ] ( १८ ) कम्पस्य द्वे नामनी । [ कँपकँपी के २ नाम । ] (१९) उत्सवस्य पञ्च नामानि । [उत्सव के ५ नाम । ]

**इति नाटयवर्गः ।**



# ८. अथ पातालभोगिवर्गः

[१]अधोभुवन-पातालं बलिसद्म रसातलम् ।
नागलोकोऽथ [२]कुहरं शुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ।
[३]गर्ताऽवटौ भुवि श्वभ्रे, [४]सरन्ध्रे शुषिरं त्रिषु ॥ २ ॥
[५]अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।
[६]ध्वान्ते गाढेऽन्धतमसं, क्षीणेऽवतमसं [७] तमः ॥ ३ ॥
[८]विष्वक् सन्तमसं, [९]नागाः काद्रवेयास्तदीश्वरः [१०] ।
शेषोऽनन्तो, [११]वासुकिस्तु सर्पराजोऽथ [१२]गोनसे ॥ ४ ॥
तिलित्सः [१३]स्यादजगरे शयुर्वाहस इत्युभौ ।
[१४]अलगर्दो जलव्यालः, [१५]समौ राजिल-डुण्डुभौ ॥ ५ ॥
[१६]मालुधानो [१७]मातुलाहिर्निर्मुक्तौ मुक्तकञ्चुकः ।
[१८]सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ॥ ६ ॥

---

( १ ) पातालस्य पञ्च नामानि । [पाताललोक के ५ नाम ।] (२) एकादश-नामानि विलस्य । [ बिल के ११ नाम । ] ( ३ ) गर्तमात्रस्य नामद्वयम् । [ गड्ढा के २ नाम ] ( ४ ) रन्ध्रयुक्तस्यैकं नाम [ छिद्रयुक्त । ] ( ५ ) अन्धकारस्य पञ्च नामानि । [ अन्धकार के ५ नाम । ] (६) गाढान्धकारस्यैकं नाम । [ घना अँधेरा । ] ( ७ ) क्षीणान्धकारस्यैकं नाम । [ कम अँधेरा का नाम । ] ( ८ ) सर्वतोव्याप्ततमस एकम् । [ चारों ओर फैला अँधेरा का नाम । ] ( ९ ) फणालाङ्गलयुक्तनराकारदेवयोनिविशेषनागानां नामद्वयम् । [ फण और पूँछ युक्त नराकार सर्पों के २ नाम । ] ( १० ) सर्पराजस्य नामद्वयम् । [ शेषनाग के २ नाम । ] ( ११ ) वासुकिसर्पस्य द्वे नामनी । [ वासुकि नाग के २ नाम । ] ( १२ ) तिलित्साभिधसर्पविशेषस्य द्वे नामनी । [ तिलित्सनाग के २ नाम । ] ( १३ ) अजगरस्य नामत्रयम् । [ अजगर के ३ नाम । ] ( १४ ) जलव्यालस्य नामद्वयम् । [ पानी का साँप के २ नाम । ] ( १५ ) उभयमुखसर्पस्य नामद्वयम् । [ दुमुहा साँप के २ नाम । ] ( १६ ) चित्रवर्णयुक्तस्य सर्पस्य । [ चितकबरा साँप । ] ( १७ ) निर्मुक्तकञ्चुकसर्पस्य नामद्वयम् । [ केचुली छोड़े हुए साँप के (२ नाम । ] १८ ) सर्पस्य त्रयस्त्रिंशन्नामानि । [ साँप के ३३ नाम । ]

आशीविषो विषधरश्चक्री, व्यालः सरीसृपः ।
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ७ ॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ८ ॥
[ लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।
कुम्भीनसः फणधरो हरिर्भोगधरस्तथा ॥
[1]अहेः शरीरं भोगः [2]स्यादाशीरप्यहिदंष्ट्रिका । ]
[3]त्रिष्वाहेयं विषाऽस्थ्यादि, [4]स्फटायां तु फणा द्वयोः ।
[5]समौ कञ्चुक-निर्मोकौ, [6]क्ष्वेडस्तु गरलं विषम् ॥ ९ ॥
[7]पुंसि क्लीबे च काकोल-कालकूट-हलाहलः ।
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ १० ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ।
[8]विषवैद्यो जाङ्गुलिको, [9]व्यालग्राह्यहितुण्डिकः ॥ ११ ॥

इति पातालभोगिवर्गः ।

---

## ९. अथ नरकवर्गः

[10]स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।

---

( १ ) सर्पशरीरस्यैकं नाम । [ साँप के शरीर का नाम 'भोग' । ] ( २ ) सर्पस्य विषदंष्ट्राया द्वे नामानी । [ साँप की विषैली दाढ़ के २ नाम । ] ( ३ ) सर्पविषस्यादेर्नाम । [ साँप के विष, हड्डी आदि का नाम 'आहेय' । ] ( ४ ) सर्पफणाया नामद्वयम् । [ साँपकी फन के २ नाम । ] ( ५ ) सर्पकञ्चुकस्य नामद्वयम् । [ साँप की केंचुली के २ नाम । ] ( ६ ) सामान्यविषस्य नामत्रयम् । [ सामान्य विष के ३ नाम । ] ( ७ ) विषभेदानामेकैकं नाम । [ विषभेदों का १-१ नाम । ] ( ८ ) विषवैद्यस्य नामद्वयम् । [ विषवैद्य ( गारुड़ी ) के २ नाम । ] ( ९ ) सर्पग्राहिणो द्वे नामनी । [ सँपेरा के २ नाम । ]

**इति पातालभोगिवर्गः ।**

---

( १० ) नरकस्य चत्वारि नामानि । [ नरक के ४ नाम । ]

[१]तद्भेदास्तपना-ऽवीचि-महारौरव-रौरवाः ॥ १ ॥
सङ्घातः कालसूत्रञ्चेत्याद्याः, [२]सत्त्वास्तु नारकाः ।
प्रेता [३]वैतरणी सिन्धुः [४]स्यादलक्ष्मीस्तु निर्ऋतिः ॥ २ ॥
[५]विष्टिराजूः [६]कारणा तु यातना तीव्रवेदना ।
[७]पीडा बाधा व्यथा दुःखमार्मनस्यं प्रसूतिजम् ॥ ३ ॥
[९]स्यात्कष्टं कृच्छ्रमाभीलं, [१०]त्रिष्वेषां भेद्यगामि यत् ।

इति नरकवर्गः ।

## १०. अथ वारिवर्गः

[११]समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥ १ ॥
रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः ।
तस्य प्रभेदाः [१२]क्षीरोदो लवणोदस्तथापरे ॥ २ ॥

(१) नरकभेदानां पृथक् पृथक् नामानि । [नरकों के नाम । ](२) नरकवासिजन्तूनां नामद्वयम् । [ नारकीय प्राणियों के २ नाम । ] (३) वैतरणीनद्या एकम् । [ वैतरणी नदी । ] ( ४ ) अलक्ष्म्या नामद्वयम् । [ नारकीयदुर्गति के २ नाम । ] ( ५ ) निर्मूल्यकर्मकरणस्य द्वे, केचित् नरके हठात् प्रक्षेपणस्य, भद्राख्यकरणस्येति वदन्ति । [ नरक में ढकेलना या बेगार के २ नाम । ] ( ६ ) नरकयातनायास्त्रीणि नामानि । [ नरकयातना के ३ नाम । ] ( ७ ) मानसिककष्टस्य त्रीणि नामानि । [ मानसिक कष्ट के ३ नाम ] ( ८ ) प्रसववेदनाया द्वे नामनी । [ प्रसववेदना के २ नाम । ] ( ९ ) शारीरिककष्टस्य त्रीणि नामानि । [ शारीरिककष्ट के ३ नाम । ] ( १० ) दुःखादीनामुपर्युक्तानां शब्दानाम्मध्ये यद् नाम भेद्यगामि द्रव्यवाचि स्यात् तत् त्रिषु लिङ्गेषु प्रयुज्यते । यथा—दुःखा दरिद्रता । दुःख नरकः । दुःखं परगेहनिवासनम् । [ दुःख आदि शब्दों के लिंग विशेष्य के अनुसार बदलते हैं ]

इति नरकवर्गः ।



( ११ ) समुद्रस्य पञ्चदश नामानि [ समुद्र के १५ नाम ] ( १२ ) समुद्रभेदानामेकैकं नाम । [ समुद्र भेदों के नाम । ]

[1]आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥ ४ ॥
मेघपुष्पं घनरसस्त्रिषु द्वे [2]आप्यमम्मयम् ।
[3]भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु[4] ॥ ५ ॥
महत्सूल्लोल-कल्लोलौ, [5]स्यादावर्तोऽम्भसां भ्रमः ।
[6]पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥
[7]चक्राणि पुटभेदाः [8]स्युर्भ्रमाश्च जलनिर्गमाः ।
[9]कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु ॥ ७ ॥
[10]पारावारे परार्वाची तीरे, [11]पात्रं तदन्तरम् ।
[12]द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥
[13]तोयोत्थितं तत्पुलिनं, [14]सैकतं सिकतामयम् ।
[15]निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥

---

( १ ) सप्तविंशति जलस्य नामानि । [ पानी के २७ नाम । ] ( २ ) जलविकारस्य नामद्वयम् । [ पानी से बने हुए बर्फ आदि के २ नाम । ] ( ३ ) चत्वारि तरङ्गस्य नामानि । [ लहर ( तरंग ) के ४ नाम । ] ( ४ ) महातरङ्गस्य नामद्वयम् । [ बड़ी लहरों के २ नाम । ] ( ५ ) अम्भसामावर्तस्य नामद्वयम् । [ भौंरी, पानी का घुमाव के २ नाम । ] ( ६ ) जलकणस्य चत्वारि नामानि । पृषत् छन्दः क्लीवे पृषतशब्दः पुंसि । [ जल कण के ४ नाम । ] ( ७ ) जलभ्रमणस्य द्वे नामनी । [ भँवर के २ नाम । ] ( ८ ) जलनिर्गमयन्त्रस्य द्वे नामनी । केचिद् भूमिमुद्भिद्य समुद्भूतस्य जलस्य नामेति स्वीकुर्वन्ति । [ फुँहारा के २ नाम । ] ( ९ ) तीरस्य पञ्च नामानि । [ किनारे के ५ नाम । ] ( १० ) अर्वाक् तीरम् अवारं, परतीरं पारमित्येकैकं नाम । [ दोनों किनारों के नाम । ] ( ११ ) द्वयोस्तीरयोर्मध्यगतस्य प्रवाहस्यैकम् । [ नदी का पाट । ] ( १२ ) द्वीपस्य नामद्वयम् । [ द्वीप या टापू के २ नाम । ] ( १३ ) तोयोत्थितस्य तटस्यैकम् । [ पानी से उठा हुआ किनारा । ] ( १४ ) बालुकायुक्ततटस्यैकं नाम । [ बालुकामय नदी का किनारा । ] ( १५ ) पङ्कस्य पञ्च नामानि । [ कीचड़ के ५ नाम । ]

[1]जलोच्छ्वासाः परीवाहाः, [2]कूपकास्तु विदारकाः ।
[3]नाव्यं त्रिलिङ्गं नौतार्ये, स्त्रियां [4]नौस्तरणिस्तरिः ॥ १० ॥
[5]उडुपं तु प्लवः कोलः, [6]स्रोतोऽम्बुसरणं स्वतः ।
[7]आतरस्तरपण्यं स्याद् द्रोणी [8]काष्ठाम्बुवाहिनी ॥ ११ ॥
[9]सांयात्रिकः पोतवणिक् [10]कर्णधारस्तु नाविकः ।
[11]नियामकाः पोतवाहाः, [12]कूपको गुणवृक्षकः ॥ १२ ॥
[13]नौकादण्डः क्षेपणी [14]स्यादरित्रं केनिपातकः ।
[15]अभ्रिः स्त्री काष्ठकुद्दालः, [16]सेकपात्रं तु सेचनम् ॥ १३ ॥
[17]क्लीबेऽर्धनावं नावोऽर्धे[18]ऽतीतनौकेऽतिनु त्रिषु ।

---

( १ ) प्रवृद्धजलनिस्सरणमार्गस्य नामद्वयम् । [ बढ़े हुये जल निकलने के मार्ग के २ नाम । ] ( २ ) नद्यादौ जलसंरक्षणार्थ कृतगर्तस्य नामद्वयम् । [ पानी संरक्षण के लिए नदी के बीच में बनाये हुए गड्ढे के २ नाम । ] ( ३ ) नौकयातरणयोग्यनद्यादेर्नामद्वयम् । [ नाव से पार करने योग्य नदी के २ नाम । ] ( ४ ) नौकाया नामत्रयम् । [ नाव के ३ नाम । ] ( ५ ) काष्ठादिनिर्मितनौकायास्त्रीणि नामानि । [ डोंगी, छोटी नाव । ] ( ६ ) स्वतोऽम्बुसरणस्यैकं नाम । [ सोता या झरना । ] ( ७ ) नद्यादितरणार्थं देयशुल्कस्य नामद्वयम् । [ नाव के भाड़ा के २ नाम । ] ( ८ ) जलप्रक्षेपणार्थ काष्ठपाषादिनिर्मित पात्रस्य नामद्वयम् । [ द्रोणी, कुण्डी, नाद के २ नाम । ] ( ९ ) नामद्वयम् पोतवणिजः । [ समुद्री जहाज द्वारा व्यापार करने वाले बनिया के २ नाम । ] ( १० ) कर्णधारस्य नामद्वयम् । [ नाविक, कर्णधार, मल्लाह के २ नाम । ] ( ११ ) पोतवाहस्य द्वे नामनी । [जहाज का खेवैया, मांझी के २ नाम ।] ( १२ ) नौकामध्यस्थितरज्जुबन्धनदण्डस्य द्वे नामनी । [ गुनरखा, पाढ़ी के २ नाम । ] ( १३ ) द्वे नामनी नौकादण्डस्य । [ क्षेपणी, डाँड़ा के २ नाम । ] ( १४ ) अरित्रस्य नामद्वयम् । [ नौका के पीछे स्थित पतवार के २ नाम । ] ( १५ ) नामद्वयं काष्ठकुद्दालस्य । [ लकड़ी का कुदाल के २ नाम । ] ( १६ ) नौकामध्यस्थितजलप्रक्षेपणपात्रस्य । [ नाव में से पानी फेंकने का तसला । ] ( १७ ) नौकाया अर्धभागस्यैकं नाम । [ नाव का अर्धभाग । ] ( १८ ) नौकामतिक्रान्तजलादेरेकं नाम । [ गहरे जल का नाम । ]

[1]त्रिष्वागाधात् [2]प्रसन्नोऽच्छः [3]कलुषोऽनच्छ आविलः ॥ १४ ॥
[4]निम्नं गभीरं गम्भीरमुत्तानं[5] तद्विपर्यये।
[6]अगाधमतलस्पर्शे [7]कैवर्ते दाश-धीवरौ ॥ १५ ॥
[8]आनायः पुंसि जालं स्याच्छ[9]णसूत्रं पवित्रकम्।
[10]मत्स्याधानी कुवेणी स्यात् [11]बडिशं मत्स्यवेधनम् ॥ १६ ॥
[12]पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः।
विसारः शकुलो चाऽथ [13]गडकः शकुलार्भकः ॥ १७ ॥
[14]सहस्रदंष्ट्रः पाठीन, [15]उलूपी शिशुकः समौ।
[16]नलमीनश्चिलिचिमः, [17]प्रोष्ठी तु शफरी द्वयो ॥ १८ ॥
[18]क्षुद्राण्डमत्स्यसङ्घातः पोताधानमथो [19]झषाः।
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥ १९ ॥
तिमिङ्गिलादयश्चाऽथ [20]यादांसि जलजन्तवः।

( १ ) गाधशब्दपर्यन्तं शब्दास्त्रिषु भवन्ति। [ गाधपर्यन्त शब्दों के रूप तीनों लिंगों में होते हैं। ] ( २ ) स्वच्छजलस्य नामद्वयम्। [ साफ जल के २ नाम। ] ( ३ ) आविलजलस्य त्रीणि नामानि। [ मैले जल के ३ नाम। ] ( ४ ) त्रीणि गम्भीरजलस्य नामानि। [ गहरे जल के ३ नाम। ] ( ५ ) उत्तानजलस्यैकं नाम। [ छिछला जल का नाम। ] ( ६ ) अगाधजलस्य नामद्वयम्। [ अगाध जल के २ नाम। ] ( ७ ) धीवरस्य त्रीणि नामानि। [ धीवर के ३ नाम। ] ( ८ ) जालस्य नामद्वयम्। [ जाल के २ नाम। ] ( ९ ) शणसूत्रस्य द्वे नामनी। [ डोरी के २ नाम। ] ( १० ) मत्स्यस्थापनपात्रस्य नामद्वयम्। [ मछली रखने का पात्र के २ नाम। ] (११) मत्स्यवेधनकण्टकस्य नामद्वयम्। [मछली मारने का काँटा के २ नाम। ] ( १२ ) मत्स्यस्य अष्टौ नामानि। [ मछली के ८ नाम। ] ( १३ ) मत्स्यार्भकस्य नामद्वयम्। [ मछली के बच्चे के २ नाम। ] ( १४ ) पाठीनमत्स्यस्य नामद्वयम्। [ पाठीन नामक मछली के २ नाम। ] ( १५ ) शिशुकमत्स्यस्य नामद्वयम्। [ सूईस के २ नाम। ] ( १६ ) नलमीनस्य नामद्वयम्। [ नल नामक मछली के २ नाम। ] ( १७ ) शफरीमत्स्याः नामद्वयम्। [ शफरी के २ नाम। ] ( १८ ) क्षुद्राण्डमत्स्यसङ्घातस्य नामद्वयम्। [ अंडों से निकली छोटी मछलियों के समूह के २ नाम। ] ( १९ ) मत्स्यविशेषाणामेकैकं नाम। [ मत्स्य विशेषों के नाम। ] ( २० ) मकरादिजलजन्तूनां नामद्वयम्। [ मकर आदि जलजन्तुओं के नाम। ]

[1]तद् भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥ २० ॥
[2]स्यात्कुलीरः कर्कटकः, [3]कूर्मे कमठ-कच्छपौ ।
[4]ग्राहोऽवहारो, [5]नक्रस्तु कुम्भीरोऽथ [6]महीलता ॥ २१ ॥
गण्डूपदः किञ्चुलको, निहाका गोधिका समे ।
[8]रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ २२ ॥
[9]मुक्तास्फोटःस्त्रियां शुक्तिः, [10]शङ्खःस्यात्कम्बुरस्त्रियाम् ।
[11]क्षुद्रशङ्खाः शङ्खनखाः, [12]शम्बूका जलशुक्तयः ॥ २३ ॥
[13]भेके मण्डूक-वर्षाभू-शालूर-प्लव-दर्दुराः ।
[14]शिली गण्डूपदी, [15]भेकी, वर्षाभ्वी [16]कमठी डुलिः ॥ २४ ॥
[17]मद्गुरस्य प्रिया शृङ्गी, [18]दुर्नामा दीर्घकोशिका ।
[19]जलाशयो जलाधारस्तत्रा[20]ऽगाधजलो ह्रदः ॥ २५ ॥

---

( १ ) जलजन्तु भेदानामेकैकम् । [ जलजन्तुओं के भेदों के १-१ नाम । ] (२) कुलीरस्य नामद्वयम् । [ केकड़ा के २ नाम । ] ( ३ ) कच्छपस्य त्रीणि नामानि । [ कछुआ के ३ नाम ] ( ४ ) ग्राहस्य नामद्वयम् । [ घड़ियाल के २ नाम । ] ( ५ ) नक्रस्य नामद्वयम् । [ नक्र ( मगर ) के २ नाम । ] ( ६ ) गण्डूपदस्य त्रीणि नामानि । [ केंचुआ के ३ नाम । ( ७ ) गोधाया नामद्वयम् । [ गोह के २ नाम । ( ८ ) जलौकायास्त्रीणि नामानि । [ जौंक के ३ नाम । ] ( ९ ) शुक्तिकायाः नामद्वयम् । [ सीपी के २ नाम । ] ( १० ) शङ्खस्य नामद्वयम् । [ शंख के २ नाम । ] ( ११ ) क्षुद्रशङ्खानां नामद्वयम् । [ छोटे शंखों के २ नाम । ] ( १२ ) जलशुक्तिमात्रस्य नामद्वयम् । [ साधारण सीपी के २ नाम । ] ( १३ ) मण्डूकस्य षड् नामानि । [ मेंढक के ६ नाम । ] ( १४ ) क्षुद्रगण्डूपद्याः नामद्वयम् । [ केंचुआ विशेष के २ नाम । ( १५ ) भेक्या नामद्वयम् । [ मेंढक की स्त्री के २ नाम । ] ( १६ ) कच्छपस्य स्त्रियः द्वे नामनी । [ कच्छपकी स्त्री के २ नाम । ] ( १७ ) मद्गुरस्य स्त्रियः शृङ्गी नाम । [ मद्गुर की स्त्री शृंगी । ] यथाऽऽह भागुरिः—'भार्या भेकस्य वर्षाभ्वी, शृङ्गीस्यान्मद्गुरस्य तु ।
शिली गण्डूपदस्यापि, कच्छपस्य डुलिः स्मृता' ॥ इति ।
( १८ ) दीर्घकोशिकायाः नामद्वयम् । [ जौंक जैसे प्राणी के २ नाम । ] ( १९ ) जलाशयस्य द्वे नामनी । [ जलाशय के २ नाम । ] ( २० ) अगाधजलवतस्तडाग-स्यैकं नाम । [ गहरे जल वाले तालाब का नाम ह्रद । ]

[1]आहावस्तु निपानं स्यादुपकूपजलाशये ।
[2]पुंस्येवाऽन्धुः प्रहिः कूप उदपानन्तु पुंसि वा ॥ २६ ॥
[3]नेमिस्त्रिकाऽस्य, [4]वीनाहो मुखबन्धनमस्य यत् ।
[5]पुष्करिण्यान्तु खातं स्यादखातं[6] देवखातकम् ॥ २७ ॥
[7]पद्माकरस्तडागोऽस्त्री, [8]कासारः सरसी सरः ।
[9]वेशन्तः पल्वलं चाल्पसरो, [10]वापी तु दीर्घिका ॥ २८ ॥
[11]खेयन्तु परिखा[12]ऽऽधारस्त्वम्भसां यत्र धारणम् ।
[13]स्यादालवालमावालमावापोऽथ [14]नदी सरित् ॥ २९ ॥
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥ ३० ॥
[ कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती ]
[15]गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥
[16]कालिन्दी सूर्यतनया यमुना शमनस्वसा ।
[17]रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥ ३२ ॥

---

( १ ) कूपसमीपस्थजलाशयस्य द्वे नामनी [ कुँए के समीप के तालाब के २ नाम । ] ( २ ) कूपस्य चत्वारि नामानि । [ कुँए के ४ नाम । ] ( ३ ) कूपस्य नेमिः तस्या नामद्वयम् । [ गडारी के २ नाम । ] ( ४ ) कूपस्य मुखबन्धनस्यैकं नाम । [ कुँए की जगत । ] ( ५ ) पुष्पकरिण्या नामद्वयम् । [ छोटी तलैया के २ नाम । ] ( ६ ) अकृत्रिमजलाशयस्य नामद्वयम् । [ प्राकृतिक जलाशय के २ नाम । ] ( ७ ) कमलयुक्तसरोवरस्य नामद्वयम् । [ कमलवाले सरोवर के २ नाम । ] ( ८ ) त्रीणि कासारस्य नाम । [ झील के ३ नाम । ] ( ९ ) पल्वलस्य नामत्रयम् । [ पोखरा के ३ नाम । ] ( १० ) वाप्या नामद्वयम् । [ बावड़ी के २ नाम । ] ( ११ ) दुर्गादिवेष्टनखातस्य नामद्वयम् । [ खाई के २ नाम । ] ( १२ ) अम्भसां यत्र धारणम्भवति तस्यैकम्, [ बांध । ] ( १३ ) आलवालस्य त्रीणि नामानि । [ थाला के ३ नाम । ] ( १४ ) नद्याः षोडश नामानि । [ नदी के १६ नाम । ] ( १५ ) गङ्गाया अष्टौ नामानि । [ गंगा के ८ नाम । ] ( १६ ) यमुनायाश्चत्वारि नामानि [ यमुना नदी के ४ नाम । ] ( १७ ) नर्मदायाश्चत्वारि नामानि । [ नर्मदा नदी के ४ नाम । ]

[1]करतोया सदानीरा, [2]बाहुदा सैतवाहिनी ।
[3]शतद्रुस्तु शुतुद्रिः स्याद्[4] विपाशा तु विपाट् स्त्रियाम् ॥ ३३ ॥
[5]शोणो हिरण्यवाहः स्यात्[6] कुल्याऽल्पा कृत्रिमा सरित् ।
[7]शरावती वेत्रवती चन्द्रभागा सरस्वती ॥ ३४ ॥
कावेरी सरितोऽन्याश्च, [8]सम्भेदः सिन्धुसङ्गमः ।
[9]द्वयोः प्रणाली पयसः पदव्यां, [10]त्रिषु तूत्तरौ ॥ ३५ ॥
देविकायां सरय्वां च भवे दाविक-सारवौ ।
[11]सौगन्धिकं तु कल्हारं, हल्लकं रक्तसन्ध्यकम् ॥ ३६ ॥
[12]स्यादुत्पलं कुवलयमथ [13]नीलाम्बुजन्म च ।
[14]इन्दीवरञ्च नीलेऽस्मिन्, [15]सिते कुमुद-कैरवे ॥ ३७ ॥
[16]शालूकमेषां कन्दः स्याद् [17]वारिपर्णी तु कुम्भिका ।

---

( १ ) करतोया नद्या द्वे नामनी । [करतोया नदी के २ नाम ।] ( २ ) सैतव-वाहिन्या नामद्वयम् । [ बाहुदा नदी के २ नाम । ] ( ३ ) शतद्रुनद्या नामद्वयम् । [ सतलज नदी के २ नाम । ] ( ४ ) विपाशानद्या नामद्वयम् । [ विपाशा ( व्यास ) नदी के २ नाम । ] ( ५ ) शोणस्य नामद्वयम् । [ शोणभद्र ( सोन ) नदी के २ नाम । ] ( ६ ) अल्पासरित् कुल्यास्तस्या एकं नाम । [ नहर । ] ( ७ ) नदीविशेषाणां पञ्च नामानि । अन्याश्चेत्यनेन गोदावरी चर्मण्वत्यादयो नद्यो ग्राह्याः । [ शरावती आदि नदियों के १-१ नाम । ] ( ८ ) नदी सङ्गमस्य नामद्वयम् । [ नदी के संगमके २ नाम । ] ( ९ ) जलनिर्गममार्गस्यैकं नाम । [ पनाला । ] ( १० ) उत्तरौ दाविक-सारव शब्दौ त्रिषु लिङ्गेषु प्रयुज्येते । तत्र—देविकानदीसमुत्पन्नस्यैकं नाम, दाविक इति । सरयूनदीजातस्यैकं नाम,-सारव इति । [ दाविक, सारव के नाम । ] ( ११ ) सन्ध्याकालविकासिनः शुक्लकमलस्य नामद्वयम् । [ रात्रि में खिलने वाले सफेदकमल के २ नाम । ] ( १२ ) रक्त-सरोजस्य नामद्वयम् । [ लालकमल के २ नाम । ] ( १३ ) कुमुदस्य नामद्वयम् । [ कुई के २ नाम । ] ( १४ ) नीलोत्पलस्य नामद्वयम् । [ नीलोफर ( नील-कमल ) के २ नाम । ] ( १५ ) श्वेतकमलस्य नामद्वयम् । [ दिन में खिलने वाले सफेदकमल के २ नाम । ] ( १६ ) कमलकन्दस्यैकं नाम । [ कमल के कन्द ( भसीड़ा ) का नाम । ] ( १७ ) जलकुम्भिकाया नामद्वयम् । [ जलकुम्भी के २ नाम । ]

[1]जलनीली तु शैवालं शैवलोऽथ[2] कुमुद्वती ॥ ३८ ॥
कुमुदिन्यां, [3]नलिन्यान्तु बिसिनीपद्मिनीमुखाः ।
[4]वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ ३९ ॥
सहस्रपत्रं कमलं [5]शतपत्रं कुशेशयम् ।
[6]पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ ४० ॥
बिसप्रसूनराजीवपुष्कराऽम्भोरुहाणि च ।
[7]पुण्डरीकं सिताम्भोजमथ [8]रक्तसरोरुहे ॥ ४१ ॥
रक्तोत्पलं कोकनदं, [9]नालो [10]नालमथाऽस्त्रियाम् ।
मृणालं [11]बिसमब्जादिकदम्बे षण्डमस्त्रियाम् ॥ ४२ ॥
[12]करहाटः शिफाकन्दः, [13]किञ्जल्कः केसरोऽस्त्रियाम् ।
[14]संवर्तिका नवदलं, [15]बीजकोशो वराटकः ॥ ४३ ॥

इति वारिवर्गः ॥ १० ॥



---

( १ ) शैवालस्य त्रीणि नामानि । [ सिंवार ( काई ) ३ नाम । ] ( २ ) कुमुदिन्या नामद्वयम् । [ कुमुद की लता के २ नाम । ] ( ३ ) कमलिनीलतायास्त्रीणि । [ कमल की लता के ३ नाम । ] ( ४ ) कमलस्य चत्वारि नामानि । तत्र ये शब्दाः पुंसि निर्दिष्टाः, तेषां साहित्ये प्रयोगोऽप्रयुक्तत्वदोषाय-भवति । [ कमल के ४ नाम । ] ( ५ ) शतदलात्मकस्य कमलस्य नाम कुशेशयम् । [ कुशेशय । ] ( ६ ) सामान्यकमलस्य अष्टौ नामानि । [ सामान्य कमल के ८ नाम । ] ( ७ ) श्वेतकमलस्यैकं नाम । [ पुण्डरीक कमल । ] ( ८ ) रक्तोत्पलस्य त्रीणि नामानि । [ लाल कमल के ३ नाम । ] ( ९ ) पद्मादिदण्डस्य नामद्वयम् । [ कमलनाल के २ नाम । ] ( १० ) मृणालस्य नामद्वयम् [ मृणाल के २ नाम । ] ( ११ ) अब्जादिकदम्बस्यैकं नाम । [ कमलसमूह का नाम । ] ( १२ ) पद्मादिमूलस्य नामद्वयम् । [ कमलमूल के २ नाम । ] ( १३ ) नामद्वयम् पद्मकेसरस्य । [ कमलकेसर के २ नाम । ] ( १४ ) कमलादीनां नवीनपत्राणां नामद्वयम् [ कमल के नये पत्तों के २ नाम । ] ( १५ ) कमलबीजकोशस्य नामद्वयम् । [ कमलगट्टा के २ नाम । ]

इति वारिवर्गः ।



[1]उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।
पातालभोगि नरकं वारि चैषाञ्च सङ्गतम् ॥ १ ॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ २ ॥



---

( १ ) स्वर्ग, व्योम, दिक्, काल, धी, शब्दादि, नाट्य, पातालभोगि, नरक, और वारि वर्गों का वर्णन इस प्रथमकाण्ड में किया गया है ।

इस प्रकार अमर सिंह द्वारा रचित इस नामलिङ्गानुशासन का सम्पूर्ण प्रथमकाण्ड का ठीक प्रकार से वर्णन कर दिया गया है ।

इति श्रीमत्पण्डिततारादत्तत्रिपाठितनूजेन, डॉ० ब्रह्मानन्दत्रिपाठिना विरचितायाम् अमरकोषटीकायां प्रथमं काण्डं समाप्तम् ।

# अथ द्वितीयं काण्डम्

## १. अथ भूमिवर्गः

[1]वर्गाः पृथ्वीपुरक्ष्माभृद्-वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥
[2]भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः॥ २ ॥
सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ॥ ३ ॥
[ विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।
भूतधात्री रत्नगर्भा जगती सागराऽम्बरा ॥ ]
[3]मृन्मृत्तिका, प्रशस्ता तु [4]मृत्सा मृत्स्ना च मृत्तिका ।
[5]उर्वरा सर्वसस्याढ्या, स्यादूषः[6] क्षारमृत्तिका ॥ ४ ॥
[7]ऊषवानूषरो द्वावप्यन्यलिङ्गौ, [8]स्थलं स्थली ।
[9]समानौ मरुधन्वानौ, द्वे [10]खिलाऽप्रहते समे ॥ ५ ॥
त्रिष्वथो[11] जगती लोको विष्टपं भुवनं जगत् ।

---

( १ ) भूमि, पुर, शैल, वनौषधि, सिंहादि, मनुष्य, ब्रह्म, क्षत्रिय, वैश्य, शूद्रवर्गैः—एतत्सम्बन्धीनि सर्वाणि वस्तूनि वर्णितानीत्याशयो ग्रन्थकर्तुः । इस दूसरे काण्ड में भूमि आदि दसवर्गों के द्वारा तत्सम्बन्धी सम्पूर्ण वस्तुओं का साङ्गोपाङ्गवर्णन किया गया है, ऐसा ग्रन्थकार का आशय है। ( २ ) भूमेरष्टात्रिंशन्नामानि । [ भूमि के ३८ नाम । ] ( ३ ) मृत्तिकाया नामद्वयम् । [ मिट्टी के २ नाम । ] ( ४ ) प्रशस्तमृत्तिकाया नामद्वयम् । [ चिकनी मिट्टी के २ नाम । ] ( ५ ) सर्वसस्याढ्याभूमेरेकं नाम । [ उपजाऊ भूमि । ] ( ६ ) क्षारमृत्तिकायुक्तभूमेर्नामद्वयम् । [ ऊषर भूमि के २ नाम । ] ( ७ ) क्षारविशिष्टभूमेस्त्रिषु । [ खारी मिट्टीवाली भूमि के २ नाम । ] ( ८ ) अकृत्रिमभूमेर्नामद्वयम् । [ बिना जोती हुई भूमि के २ नाम । ] ( ९ ) मरुभूमेर्नामद्वयम् । [ मरुभूमि के २ नाम । ] ( १० ) अप्रहतभूमेर्नामद्वयम् । [ पड़ती भूमि के २ नाम । ] ( ११ ) जगतः पञ्च नामानि । [ संसार के ५ नाम । ]

[1]लोकोऽयं भारतं वर्षं, [2]शरावत्यास्तु योऽवधेः—॥ ६ ॥
देशः प्राग्दक्षिणः प्राच्य, [3]उदीच्यः पश्चिमोत्तरः ।
[4]प्रत्यन्तो म्लेच्छदेशः स्यान्[5]मध्यदेशस्तु मध्यमः ॥ ७ ॥
[6]आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ।
[7]नीवृज्जनपदो, [8]देशविषयौ तूपवर्तनम् ॥ ८ ॥
[9]त्रिष्वागोष्ठान् [10]नडप्राये नड्वान्नड्वल इत्यपि ।
[11]कुमुद्वान् कुमुदप्राये, [12]वेतस्वान् बहुवेतसे ॥ ९ ॥
[13]शाद्वलः शादहरिते, [14]सजम्बाले तु पङ्किलः ।

---

( १ ) भारतवर्षस्यैकं नाम । [ भारतवर्ष का १ नाम । ] ( २ ) शरावत्या ( राप्ती ) अवधेर्यः प्राग्दक्षिणो देशः स प्राच्यः । [ राप्ती नदी के पूर्व-दक्षिण तक की सीमा वाले देश को **प्राच्य** कहते हैं । ] ( ३ ) शरावत्या अवधेः पाश्चिमोत्तरो देशः 'उदीच्य' इति । [ राप्ती नदी के पश्चिम-उत्तर तक की सीमा वाले देश को **'उदीच्य'** कहते हैं । ] ( ४ ) शिष्टाचाररहितस्य खशादिदेशस्य नामद्वयम् । तद्—

**यथा**—'चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
तं म्लेच्छविषयं प्राहुरार्यावर्तमतः परम्' ॥

[ 'म्लेच्छ, ( खश ) देश के २ नाम । ] ( ५ ) मध्यदेशस्य नामद्वयम् । **यथाह मनुः**—

'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः' ॥ इति ।

विनशनं, कुरुक्षेत्रम् । [ मध्यदेश के २ नाम । ] ( ६ ) हिमालयविन्ध्यमध्यवर्ति देशस्य नामद्वयम् । [ आर्यावर्त के २ नाम । ] ( ७ ) जनपदस्य द्वे नामनी । [ जनपद ( जिला ) के २ नाम । ] ( ८ ) ग्रामसमुदायलक्षणस्य स्थानमात्रस्य । [ ग्राम समुदाय का नाम । ] ( ९ ) गोष्ठशब्दमभिव्याप्यशब्दाःत्रिषु प्रयुज्यन्ते । ( १० ) नडाधिकप्रदेशस्य त्रिषु । [ अधिक नड वाले प्रदेश का नाम । ] ( ११ ) कुमुदाधिकप्रदेशस्य त्रिषु । [ अधिक कुमुद वाले प्रदेश का नाम । ] ( १२ ) वेतसाधिकप्रदेशस्यैकं त्रिषु । [ अधिक वेतस् वाले प्रदेश का नाम । ] ( १३ ) शादहरितप्रदेशस्यैकं त्रिषु । [ हरी घास वाले प्रदेश का नाम । ] ( १४ ) पङ्किलप्रदेशस्यैकं नाम । [ कीचड़ प्रधान प्रदेश का नाम । ]

[1]जलप्रायमनूपं स्यात् पुंसि [2]कच्छस्तथाविधः ॥ १० ॥
स्त्री [3]शर्करा शर्करिलः, [4]शार्करः शर्करावति ।
[5]देश एवादिमावेवमुन्नेयौ[6] सिकतावति ॥ ११ ॥
[7]देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः—।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥
[8]सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र[9] राजवान् ।
[10]गोष्ठं गोस्थानकं, [11]तत्तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥
[12]पर्यन्तभूः परिसरः, [13]सेतुराली स्त्रियां पुमान् ।
[14]वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् ॥ १४ ॥
[15]अयनं वर्त्म मार्गाऽध्वपन्थानः पदवी सृतिः ।
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥
[16]अतिपन्थाः सुपन्थाश्च सत्पथश्चार्ऽचितेऽध्वनि ।

---

( १ ) जलप्रायदेशस्य नामद्वयम् । [ अधिक जलवाले प्रदेश के २ नाम । ] ( २ ) अनूपसदृशो देशः कच्छः । [ नदी के समीप में स्थित देश का नाम । ] ( ३ ) शर्करायुक्तप्रदेशस्य नामद्वयम् । [ कंकणोंवाले प्रदेश के २ नाम । ] ( ४ ) शर्करामिश्रितवस्तुमात्रस्य द्वे नामनी । [ कंकड़ मिली हुई वस्तु के २ नाम । ] ( ५ ) आदिमौ शर्कराशर्करिलौ देशवाचिनौ शब्दौ । [ शर्करा शर्करिल ये दो शब्द देशवाची हैं । ] ( ६ ) अन्त्यौ सिकतावति वस्तुनि ज्ञेयौ । [ अन्तिम दो बालू वाली वस्तु के नाम । ] ( ७ ) नदीजलसमुत्पन्नव्रीहिपालितो देशः, नदीमातृकः । वृष्टि-जलसमुत्पन्नव्रीहिपालितो देशः, देवमातृकः । [ नदीमातृक और देवमातृक देशों के नाम । ] ( ८ ) सज्जनराजयुक्तदेशस्यैकं नाम । [ धर्मात्मा राजा से युक्त देश का नाम । ] ( ९ ) दुष्टराजयुक्तदेशस्यैकं नाम । [ दुष्ट राजा से युक्त देश का नाम । ] ( १० ) गोष्ठस्य नामद्वयम् । [ गोठ, गोशाला के २ नाम । ] ( ११ ) भूतपूर्वगोष्ठस्यैकं नाम । [ भूतपूर्व गोशाला का नाम । ] ( १२ ) ग्राम-नगर-नद्यादिसमीपभूमेर्नामद्वयम् । [ गाँव, नगर, नदी आदि के समीप की भूमि के २ नाम । ] ( १३ ) सेतोर्नामद्वयम् । [ पुल के २ नाम । ] ( १४ ) वल्मीकस्य नामत्रयम् । [ वल्मीक ( बाँबी ) के ३ नाम । ] ( १५ ) मार्गस्य द्वादशनामानि । [ रास्ता के १२ नाम । ] ( १६ ) सुन्दरमार्गस्य नामत्रयम् । [ साफ, सुन्दर, चौड़ा मार्ग के ३ नाम । ]

[1]व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥ १६ ॥
[2]अपन्थास्त्वपथं तुल्ये, [3]शृङ्गाटक-चतुष्पथे ।
[4]प्रान्तरं दूरशून्योऽध्वा, [5]कान्तारं वर्त्मदुर्गमम् ॥ १७ ॥
[6]गव्यूतिः स्त्री क्रोशयुगं, नल्वः किष्कुचतुःशतम् ।
[8]घण्टापथः संसरणं, [9]तत्पुरस्योपनिष्करम् ॥ १८ ॥
[ [10]द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ।
दिवस्पृथिव्यौ, [11]गञ्जा तु रुमा स्याल्लवणाकरः ] ॥

इति भूमिवर्गः ॥ १ ॥



## २. अथ पुरवर्गः

[12]पूः स्त्री पुरी-नगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत्तु[13] यन्मूलनगरात्पुरम् ॥ १ ॥
तच्छाखानगरं, [14]वेशो वेश्याजनसमाश्रयः ।

---

( १ ) कुपथः पञ्च नामानि । [ खराब मार्ग के ५ नाम । ] ( २ ) मार्ग-रहितस्य नामद्वयम् । [ अमार्ग के २ नाम । ] ( ३ ) चतुष्पथस्य नामद्वयम् । [ चौराहा के २ नाम । ] ( ४ ) छायाविहीननिर्जलदूरदेशस्थमार्गस्यैकं नाम त्रिषु । [ वियावान मार्ग । ] ( ५ ) दुर्गममार्गस्यैकं नाम । [ कठिनमार्ग का नाम । ] ( ६ ) क्रोशयुगस्यैकं नाम । [ दो कोस का नाम 'गव्यूति' । ] ( ७ ) चतुःशतकिष्कु ( हस्त ) परिमितभूमेरेकं नाम । [ चार सौ हाथ लम्बी भूमि का नाम 'नल्व' ] ( ८ ) राजपथस्य नामद्वयम् । [ सड़क के २ नाम । ] ( ९ ) नगरगामिराजमार्गस्यैकम् । [ शहर की सड़क । ] ( १० ) भूम्याकाशयोः पञ्च नामानि । [ भूमि और आकाश के ५ नाम । ] ( ११ ) लवणाकरस्य नाम-द्वयम् । [ नमक की खान के २ नाम । ]

इति भूमिवर्गः ।



( १२ ) नगर्याः सप्तनामानि । [ नगर के ७ नाम । ] ( १३ ) राजधानी समीपस्थनगरस्यैकम् । [ राजधानी के समीप में स्थित नगर का नाम । ] ( १४ ) वेश्यानां निवासस्थानस्य । [ वेश्याओं का निवासस्थान । ]

[1]आपणस्तु निषद्यायां, [2]विपणिः पण्यवीथिका ॥ २ ॥
[3]रथ्या प्रतोली विशिखा [4]स्याँच्चयो वप्रमस्त्रियाम् ।
[5]प्राकारो वरणः सालः, प्राचीनं प्रान्ततो वृतिः ॥ ३ ॥
[6]भित्तिः स्त्री [7]कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।
[8]गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥
निशान्त-पस्त्य-सदनं भवनाऽऽगार-मन्दिरम् ।
गृहाःपुंसि च भूम्न्येव निकाय्य-निलया-ऽऽलयाः ॥ ५ ॥
[9]वासः कुटी द्वयोः शाला सभा, [10]सञ्जवनं त्विदम् ।
चतुःशालं, [11]मुनीनान्तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥
[12]चैत्यमायतनं तुल्ये, [13]वाजिशाला तु मन्दुरा ।
[14]आवेशनं शिल्पिशाला, [15]प्रपा पानीयशालिका ॥ ७ ॥
[16]मठश्छात्रादिनिलयो, [17]गञ्जा तु मदिरागृहम् ।
[18]गर्भाऽगारं [19]वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥

---

( १ ) आपणस्य नामद्वयम् । [ दुकान के २ नाम । ] ( २ ) पण्य-वीथिकाया नामद्वयम् । [ बाजार के २ नाम । ] ( ३ ) रथ्यायास्त्रीणि नामानि । [ गली के ३ नाम । ] ( ४ ) वप्रनिर्माणार्थमिष्टकादिचयस्य नामद्वयम् । [ चबूतरा के २ नाम । ] ( ५ ) प्राकारस्य नामत्रयम् । [ कोट, किला, दुर्ग के ३ नाम । ] ( ६ ) भित्तेर्नामद्वयम् । [ भित्ति, दीवाल के २ नाम । ] ( ७ ) अस्थ्यादि-मध्यनिहितभित्तेर्द्वे नामनी । [ हड्डी युक्त दीवाल के २ नाम । ] ( ८ ) गृहस्य षोडशनामानि । [ घर के १६ नाम । ] ( ९ ) सभागृहस्य चत्वारि नामानि । [ सभागृह के ४ नाम । ] ( १० ) चतुःशालस्य नामद्वयम् । [ चौशाल के २ नाम । ] ( ११ ) मुनिगृहस्य द्वे नामनी । [ पर्णशाला के २ नाम । ] ( १२ ) बौद्धानां स्तूपस्य द्वे नामनी । [ बौद्ध स्तूप के २ नाम । ] ( १३ ) वाजिशालायाः नामद्वयम् । [ घुड़शाल के २ नाम । ] ( १४ ) शिल्पिशालाया नामद्वयम् । [ कारखाना के २ नाम । ] ( १५ ) पानीयशालिकाया नामद्वयम् । [ पौसरा के २ नाम । ] ( १६ ) सन्यासि-विद्यार्थि-निवासस्यैकम् । [ मठ, छात्रावास । ] ( १७ ) मदिरागृहस्य नामद्वयम् । [ शराबखाना के २ नाम । ] ( १८ ) देवप्रति-मादिनिवासार्थगर्भगृहस्य नामद्वयम् । [ देवसभागृह के २ नाम । ] ( १९ ) सूतिकागृहस्य नामद्वयम् । केचन गर्भागारमारभ्य सूतिकागृहपर्यन्तं पर्यायत्वेन स्वीकुर्वन्ति । [ सौरी गृह के २ नाम । ]

[ [1]कुट्टिमोऽस्त्री निबद्धा भूः [2]चन्द्रशाला शिरोगृहम् । ]
[3]वातायनं गवाक्षोऽथ [4]मण्डपोऽस्त्री जनाश्रयः ।
[5]हर्म्यादि धनिनां वासः, [6]प्रासादो देव-भूभुजाम् ॥ ९ ॥
[7]सौधोऽस्त्री राजसदनम् [8]उपकार्योपकारिका ।
[9]स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ।
[10]स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥
[11]शुद्धान्तश्चाऽवरोधश्च, स्यादट्टः क्षौममस्त्रियाम् ।
[12]प्रघाण-प्रघणा-ऽलिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
[13]गृहाऽवग्रहणी देहल्य[14]ङ्गनं चत्वराऽजिरे ।
[15]अधस्ताद्दारुणि शिला, [16]नासा दारूपरिस्थितम् ॥ १३ ॥
[17]प्रच्छन्नमन्तर्द्वारं [18]स्यात्पक्षद्वारं तु पक्षकम् ।

---

( १ ) कुट्टिमस्य नामद्वयम् । [ फर्श, पक्का आंगन के २ नाम । ] ( २ ) शिरोगृहस्य नामद्वयम् । [ छत के ऊपर क़ा कमरा के २ नाम । ] ( ३ ) वातायनस्य नामद्वयम् । [ खिड़की, झरोखा के २ नाम । ] ( ४ ) मण्डपस्य नामद्वयम् । [ मण्डप के २ नाम । ( ५ ) धनिकानां गृहस्यैकम् । [ हवेली । ] ( ६ ) देवभूभुजां भवनस्यैकं नाम, प्रासादः । [ देवता तथा राजाओं के घर का नाम । ] ( ७ ) राजगृहस्य नामद्वयम् । [ राजमहल के २ नाम ] ( ८ ) राजगृहसामान्यस्य नामद्वयम् । [ सामान्य राजगृह के २ नाम । ] ( ९ ) राजधनिकगृहाणामेकैकम् । [ राजा, धनिक आदि के घरों के नाम । ] ( १० ) राज्ञामन्तःपुरस्य चत्वारि नामानि । [ जनानखाना या रनिवास के ४ नाम । ] ( ११ ) गृहस्थितस्योपरिवर्तमानस्य प्रकोष्ठस्य नामद्वयम् । [ अटारी के २ नाम । ] ( १२ ) बहिर्द्वारप्रकोष्ठकस्य चतुष्कस्य नामत्रयम् । [ दरवाजे के बाहर के चौक के ३ नाम । ] ( १३ ) देहल्या द्वे नामनी । [ देहली के २ नाम । ] ( १४ ) चत्वरस्य नामत्रयम् । [ आंगन के ३ नाम । ] ( १५ ) द्वारस्तम्भस्याधोभागस्थितकाष्ठस्यैकं नाम । [ दरवाजा के नीचे स्थित काष्ठ का नाम । ] ( १६ ) द्वारस्तम्भस्योर्ध्वभागस्थितकाष्ठस्यैकं नाम । [ दरवाजा के ऊपर स्थित काष्ठ का नाम 'पटिया' । ] ( १७ ) प्रच्छन्नद्वारस्य नामद्वयम् । [ गुप्तमार्ग के २ नाम । ] ( १८ ) पक्षद्वारस्य नामद्वयम् । [ बगल के दरवाजा के २ नाम । ]

[1]आपणस्तु निषद्यायां, [2]विपणिः पण्यवीथिका ॥ २ ॥
[3]रथ्या प्रतोली विशिखा स्याच्चयो[4] वप्रमस्त्रियाम् ।
[5]प्राकारो वरणः सालः, प्राचीनं प्रान्ततो वृतिः ॥ ३ ॥
[6]भित्तिः स्त्री [7]कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।
[8]गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ ४ ॥
निशान्त-पस्त्य-सदनं भवनाऽऽगार-मन्दिरम् ।
गृहाःपुंसि च भूम्न्येव निकाय्य-निलया-ऽऽलयाः ॥ ५ ॥
[9]वासः कुटी द्वयोः शाला सभा, [10]सञ्जवनं त्विदम् ।
चतुःशालं, [11]मुनीनान्तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥
[12]चैत्यमायतनं तुल्ये, [13]वाजिशाला तु मन्दुरा ।
[14]आवेशनं शिल्पिशाला, [15]प्रपा पानीयशालिका ॥ ७ ॥
[16]मठश्छात्रादिनिलयो, [17]गञ्जा तु मदिरागृहम् ।
[18]गर्भाऽगारं [19]वासगृहमरिष्टं सूतिकागृहम् ॥ ८ ॥

---

( १ ) आपणस्य नामद्वयम् । [ दुकान के २ नाम । ] ( २ ) पण्य-वीथिकाया नामद्वयम् । [ बाजार के २ नाम । ] ( ३ ) रथ्यायास्त्रीणि नामानि । [ गली के ३ नाम । ] ( ४ ) वप्रनिर्माणार्थमिष्टकादिचयस्य नामद्वयम् । [ चबूतरा के २ नाम । ] ( ५ ) प्राकारस्य नामत्रयम् । [ कोट, किला, दुर्ग के ३ नाम । ] ( ६ ) भित्तेर्नामद्वयम् । [ भित्ति, दीवाल के २ नाम । ] ( ७ ) अस्थ्यादि-मध्यनिहितभित्तेर्द्वे नामनी । [ हड्डी युक्त दीवाल के २ नाम । ] ( ८ ) गृहस्य षोडशनामानि । [ घर के १६ नाम । ] ( ९ ) सभागृहस्य चत्वारि नामानि । [ सभागृह के ४ नाम । ] ( १० ) चतुःशालस्य नामद्वयम् । [ चौशाल के २ नाम । ] ( ११ ) मुनिगृहस्य द्वे नामनी । [ पर्णशाला के २ नाम । ] ( १२ ) बौद्धानां स्तूपस्य द्वे नामनी । [ बौद्ध स्तूप के २ नाम । ] ( १३ ) वाजिशालायाः नामद्वयम् । [ घुड़शाल के २ नाम । ] ( १४ ) शिल्पिशालाया नामद्वयम् । [ कारखाना के २ नाम । ] ( १५ ) पानीयशालिकाया नामद्वयम् । [ पौसरा के २ नाम । ] ( १६ ) सन्यासि-विद्यार्थि-निवासस्यैकम् । [ मठ, छात्रावास । ] ( १७ ) मदिरागृहस्य नामद्वयम् । [ शराबखाना के २ नाम । ] ( १८ ) देवप्रति-मादिनिवासार्थगर्भगृहस्य नामद्वयम् । [ देवसभागृह के २ नाम । ] ( १९ ) सूतिकागृहस्य नामद्वयम् । केचन गर्भागारमारभ्य सूतिकागृहपर्यन्तं पर्यायत्वेन स्वीकुर्वन्ति । [ सौरी गृह के २ नाम । ]

[ [1]कुट्टिमोऽस्त्री निबद्धा भूः[2]चन्द्रशाला शिरोगृहम् । ]
[3]वातायनं गवाक्षोऽथ [4]मण्डपोऽस्त्री जनाश्रयः ।
[5]हर्म्यादि धनिनां वासः, [6]प्रासादो देव-भूभुजाम् ॥ ९ ॥
[7]सौधोऽस्त्री राजसदनं[8]मुपकार्योपकारिका ।
[9]स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ १० ॥
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ।
[10]स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥
[11]शुद्धान्तश्चाऽवरोधश्च, स्यादट्टः क्षौममस्त्रियाम् ।
[12]प्रघाण-प्रघणा-ऽलिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥
[13]गृहाऽवग्रहणी देहल्य[14]ङ्गनं चत्वराऽजिरे ।
[15]अधस्ताद्दारुणि शिला, [16]नासा दारूपरिस्थितम् ॥ १३ ॥
[17]प्रच्छन्नमन्तर्द्वारं [18]स्यात्पक्षद्वारं तु पक्षकम् ।

---

( १ ) कुट्टिमस्य नामद्वयम् । [ फर्श, पक्का आंगन के २ नाम । ] ( २ ) शिरोगृहस्य नामद्वयम् । [ छत के ऊपर क़ा कमरा के २ नाम । ] ( ३ ) वातायनस्य नामद्वयम् । [ खिड़की, झरोखा के २ नाम । ] ( ४ ) मण्डपस्य नामद्वयम् । [ मण्डप के २ नाम । ( ५ ) धनिकानां गृहस्यैकम् । [ हवेली । ] ( ६ ) देवभूभुजां भवनस्यैकं नाम, प्रासादः । [ देवता तथा राजाओं के घर का नाम । ] ( ७ ) राजगृहस्य नामद्वयम् । [ राजमहल के २ नाम ] ( ८ ) राजगृहसामान्यस्य नामद्वयम् । [ सामान्य राजगृह के २ नाम । ] ( ९ ) राजधनिकगृहाणामेकैकम् । [ राजा, धनिक आदि के घरों के नाम । ] ( १० ) राज्ञामन्तःपुरस्य चत्वारि नामानि । [ जनानखाना या रनिवास के ४ नाम । ] ( ११ ) गृहस्थितस्योपरिवर्तमानस्य प्रकोष्ठस्य नामद्वयम् । [ अटारी के २ नाम । ] ( १२ ) बहिर्द्वारप्रकोष्ठकस्य चतुष्कस्य नामत्रयम् । [ दरवाजे के बाहर के चौक के ३ नाम । ] ( १३ ) देहल्या द्वे नामनी । [ देहली के २ नाम । ] ( १४ ) चत्वरस्य नामत्रयम् । [ आंगन के ३ नाम । ] ( १५ ) द्वारस्तम्भस्याधोभागस्थितकाष्ठस्यैकं नाम । [ दरवाजा के नीचे स्थित काष्ठ का नाम । ] ( १६ ) द्वारस्तम्भस्योर्ध्वभागस्थितकाष्ठस्यैकं नाम । [ दरवाजा के ऊपर स्थित काष्ठ का नाम 'पटिया' । ] ( १७ ) प्रच्छन्नद्वारस्य नामद्वयम् । [ गुप्तमार्ग के २ नाम । ] ( १८ ) पक्षद्वारस्य नामद्वयम् । [ बगल के दरवाजा के २ नाम । ]

[1]वलीक-नीध्रे पटलप्रान्तेऽथ[2] पटलं छदिः ॥ १४ ॥
[3]गोपानसी तु वलभीछादने वक्रदारुणि ।
[4]कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम् ॥ १५ ॥
[5]स्त्री द्वार्द्वारं प्रतीहारः [6]स्याद् वितर्दिस्तु वेदिका ।
[7]तोरणोऽस्त्री बहिर्द्वारं, [8]पुरद्वारं तु गोपुरम् ॥ १६ ॥
[9]कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ।
[10]कपाटमररं तुल्ये, [11]तद्विष्कम्भोऽर्गलं न ना ॥ १७ ॥
[12]आरोहणं स्यात्सोपानं, [13]निश्रेणिस्त्वधिरोहणी ।
[14]संमार्जनी शोधनी [15]स्यात्सङ्करोऽवकरस्तथा ॥ १८ ॥
क्षिप्ते, [16]मुखं निःसरणं, [17]सन्निवेशो निकर्षणम् ।
समौ [18]संवसथ-ग्रामौ, [19]वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥

---

( १ ) गृहच्छादनपटलप्रान्तस्य नामत्रयम् । [ छान का प्रान्तभाग के ३ नाम । ] ( २ ) छदिषः पटलस्य नामद्वयम् । [ छान के २ नाम । ] ( ३ ) चन्द्रशालायाश्छादनस्य नाम । [ छज्जा ] । ( ४ ) कपोतपालिकाया नामद्वयम् । [ कपोतपालिका के २ नाम । ] ( ५ ) द्वारस्य त्रीणि नामानि । [ दरवाजा के ३ नाम । ] ( ६ ) वेदिकाया नामद्वयम् । [ वेदी, चबूतरा के २ नाम । ] ( ७ ) बहिर्द्वारस्य नामद्वयम् । [ दरवाजा के बाहर का छाया हुआ हिस्सा के २ नाम । ] ( ८ ) पुरद्वारस्य नामद्वयम् । [ गोपुर के २ नाम । ] ( ९ ) पुरद्वारेऽवतारणार्थं कृतस्य क्रमेण निम्नमृत्कूटस्यैकम् । [ किला या शहर का विशेषद्वार 'खुर्री' ] ( १० ) कपाटस्य नामद्वयम् । [ कपाट या किवाड़ के २ नाम । ] ( ११ ) कपाटरोधककाष्ठदण्डस्यैकम् । [ आगल या अर्गला । ] ( १२ ) आरोहणस्य नामद्वयम् । [ सोपान या सीढ़ी के २ नाम । ] ( १३ ) अधिरोहिण्या नामद्वयम् । [ काठ की सीढ़ी के २ नाम । ] ( १४ ) सम्मार्जन्या नामद्वयम् । [ झाड़ू के २ नाम । ] ( १५ ) सङ्करस्य नामद्वयम् । [ कूड़ा, कतवार के २ नाम । ] ( १६ ) गमनागमनमार्गस्य द्वे नामनी । [ आने जाने के मार्ग के २ नाम । ] ( १७ ) सन्निवेशस्य नामद्वयम् । [ बस्ती । ] ( १८ ) संवसथस्य नामद्वयम् । [ गाँव के २ नाम । ] ( १९ ) वेश्मभूमेर्नामद्वयम् । [ घर की भूमि के २ नाम । ]

[1]ग्रामान्त उपशल्यं स्यात्[2] सीमसीमे स्त्रियामुभे ।
[3]घोष आभीरपल्ली स्यात् पक्कणः शबरालयः ॥ २० ॥

इति पुरवर्गः ॥ २ ॥



## ३. अथ शैलवर्गः

[5]महीध्रे शिखरि-क्ष्माभृद-ऽहार्य-धर-पर्वताः ।
अद्रि-गोत्र-गिरि-ग्रावा-ऽचल-शैल-शिलोच्चयाः ॥ १ ॥
[6]लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ।
[8]अस्तस्तु चरमः क्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥
[10]हिमवान्निषधो विन्ध्यो माल्यवान् पारियात्रकः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
[11]पाषाण-प्रस्तर-ग्रावोपलाऽश्मानः शिला दृषत् ।
[12]कूटोऽस्त्री शिखरं शृङ्गं, [13]प्रपातस्त्वतटो भृगुः ॥ ४ ॥

---

( १ ) ग्रामसमीपभूमेश्चत्वारि नामानि । [ गाँव के समीप में स्थित भूमि के २ नाम । ] ( २ ) सीमायाः द्वे नामनी । [ सीमा के २ नाम । ] ( ३ ) आभीर-पल्या द्वे नामनी । [ अहीरों की बस्ती के २ नाम । ] ( ४ ) शबरालयस्य नाम-द्वयम् । [ भीलों का गाँव के ३ नाम ]

इति पुरवर्गः



( ५ ) पर्वतनामानि त्रयोदश पुंसि । [ पर्वतों के १३ नाम । ] ( ६ ) लोकालोकस्य नामद्वयम् । [ भूमण्डल के २ नाम । ] ( ७ ) लङ्कापर्वतस्थत्रिकूटस्य नामद्वयम् । [त्रिकूटपर्वत के २ नाम ।] ( ८ ) अस्ताचलस्य नामद्वयम् । [ अस्ता-चल के २ नाम । ] ( ९ ) पूर्वपर्वतस्य नामद्वयम् । [ उदयाचल के २ नाम । ] ( १० ) पर्वतविशेषाणामेकैकं नाम । [ हिमालय, निषध, विन्ध्याचल, माल्य-वान्, पारियात्रक, गन्धमादन, हेमकूट आदि । ] ( ११ ) पाषाणस्य सप्त नामानि । [ पत्थर के ७ नाम । ] ( १२ ) शिखरस्य त्रीणि नामानि । [ शिखर, चोटी के ३ नाम । ] ( १३ ) अतटप्रपातस्यैकं नाम । [ 'भृगु'=पहाड़की चोटी से सीधा गिरना । ]

[1]कटकोऽस्त्री नितम्बोऽद्रेः, [2]स्नुःप्रस्थः सानुरस्त्रियाम् ।
[3]उत्सः प्रस्रवणं, [4]वारिप्रवाहो निर्झरो झरः ॥ ५ ॥
[5]दरी तु कन्दरो वा स्त्री, [6]देवखातबिले गुहा ।
गह्वरं, [7]गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ ६ ॥
[ [8]दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ]
[9]खनिः स्त्रियामाकरः [10]स्यात्पादाः प्रत्यन्तपर्वताः ।
[11]उपत्यकाऽद्रेरासन्ना [12]भूमिरूर्ध्वमधित्यका ॥ ७ ॥
[13]धातुर्मनः शिलाद्यद्रेर्गैरिकन्तु[14] विशेषतः ।
[ सुवर्ण–रौप्य–ताम्राणि हरितालं मनःशिला ।
गैरिका-ऽञ्जन-कासीस-सीस-लोहाः सहिङ्गुलाः ॥
गन्धकोऽभ्रक इत्याद्या धातवो गिरिसम्भवाः । ]
[15]निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

इति शैलवर्गः ॥ ३ ॥

---

( १ ) पर्वतमध्यभागस्य । [ पहाड़ का मध्यभाग । ] ( २ ) पर्वतस्थसमभूप्रदेशस्य । [ पहाड़ का मैदानी हिस्सा । ] ( ३ ) जलनिर्गमनस्थानस्य नामद्वयम् । [ जल के निकास स्थान के २ नाम । ] ( ४ ) वारिप्रवाहस्य त्रीणिनामानि । केचित् उत्सादिनिर्झरपर्यन्तशब्दान् पर्यायत्वेन स्वीकुर्वन्ति । [ झरना के ३ नाम । ] ( ५ ) कन्दराया द्वे नामनी । [ गुफा के २ नाम । ] ( ६ ) अकृत्रिमगुहायाश्चत्वारि नामानि । [ प्राकृतिक गुफा के ४ नाम । ] ( ७ ) स्थूलोपलानामेकम् । [ पहाड़ से गिरी चट्टानों का नाम । ] ( ८ ) पर्वतमध्यनिर्गतशिलाकोणानामेकम् । [ पहाड़ के कोने । ] ( ९ ) खने र्नामद्वयम् । [ खान के २ नाम । ] ( १० ) प्रत्यन्तपर्वतानां द्वे नामनी । [ छोटे पहाड़ों के २ नाम । ] ( ११ ) अद्रेरासन्नायाः भूमेरेकम् । [ 'उपत्यका' पहाड़ के समीपस्थ निचली भूमि । ] ( १२ ) पर्वतस्योर्ध्वभूमेरधित्यका नाम । [ पहाड़ की ऊपरीभूमि का नाम 'अधित्यका' । ] ( १३ ) मनःशिलादिधातूनामेकैकम् । [ मैनशिल आदि-धातुओं का नाम । ] ( १४ ) विशेषतो गिरिसम्भवधातूनामेकैकम् । [ सोना, चांदी, ताँबा, हरिताल, मैनशिल, गेरू, अञ्जन, कसीस, सीसा, लोहा, हिंगुल, गन्धक, अभ्रक आदि पहाड़ों से पैदा होने वाले धातुओं के नाम हैं । ( १५ ) कुञ्जस्य नामद्वयम् । [ कुञ्ज के २ नाम । ]

इति शैलवर्गः

# ४. अथ वनौषधिवर्गः

[१]अटव्यरण्यं विपिनं गहनं काननं वनम् ।
[२]महारण्यमरण्यानी, [३]गृहारामास्तु निष्कुटाः ॥ १ ॥
[४]आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।
[५]अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥
[६]पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ।
[७]स्यादेतदेव प्रमदवनमन्तः पुरोचितम् ॥ ३ ॥
[८]वीथ्याऽऽलिरावलिः पङ्क्तिः श्रेणी, [९] लेखास्तु राजयः ।
[१०]वन्या वनसमूहे [११]स्यादङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥
[१२]वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।
अनोकहः कुटः सालः पलाशी द्रु-द्रुमा-ऽगमाः ॥ ५ ॥
[१३]वानस्पत्यः फलैः पुष्पात्तैर[१४]पुष्पाद् वनस्पतिः ।
[१५]ओषध्यः फलपाकान्ताः, [१६]स्यादवन्ध्यः फलेग्रहिः ॥ ६ ॥

---

( १ ) काननस्य षड् नामानि । [ वन के ६ नाम । ] ( २ ) महारण्यस्य नामद्वयम् । [ घने वन के २ नाम ] ( ३ ) गृहोद्यानस्य नामद्वयम् । [ घर के बगीचा के २ नाम । ] ( ४ ) उपवनस्य नामद्वयम् [ बगीचा के २ नाम ।] ( ५ ) अमात्यगणिकागृहसमीपस्थोपवनस्यकं नाम । [ मन्त्री तथा वेश्या के घर के पास के बगीचा का नाम 'वृक्षवाटिका' ] ( ६ ) नगरोद्यानस्य नामद्वयम् । [ नगर के मध्य में स्थित राजा के बगीचा के २ नाम । ] ( ७ ) अन्तःपुरोद्यानस्य नाम । [ अन्तःपुर का बगीचा 'प्रमदवन' । ] ( ८ ) पङ्क्तेः पञ्च नामानि । [ कतार या पंक्ति के ५ नाम । ] ( ९ ) 'लेखो लेख्ये दैवते च लेखा राज्यां लिपावपि । इति हैमः । 'राजी रेखायां पङ्क्तौ च' इति हैमः । [ लेखा, रेखा, पंक्ति के नाम । ] ( १० ) वनसमूहस्यैकं नाम । [ वनसमूह का नाम ] ( ११ ) अभिनवोत्पन्नस्य अङ्कुरस्यैकम् । [ अंकुर का नाम । ] ( १२ ) वृक्षस्य त्रयोदशनामानि । [ वृक्ष के १३ नाम । ] ( १३ ) पुष्पागमनानन्तरसमुत्पन्नफलयुक्तवृक्षस्यैकं नाम । [ फूल के बाद फलवाले वृक्षों का नाम । ] ( १४ ) पुष्पं विना फलयुक्त-वनस्पतेरेकं नाम । [ फूल के बिना फल वाले वृक्षों का नाम । ] ( १५ ) फल-पाकानन्तरं शुष्यतां गोधूमादीनामेकं नाम । [ फलपाक के बाद ही सूख जाने वाले गेहूँ आदि का नाम 'ओषधि' । ] ( १६ ) ऋतुकाले फलप्रदस्य वृक्षस्य नामद्वयम् । [ ऋतुकाल में फल देने वाले वृक्ष के २ नाम । ]

[1]वन्ध्योऽफलोऽवकेशी च, [2]फलवान् फलिनः फली ।
[3]प्रफुल्लो-त्फुल्ल-संफुल्ल-व्याकोश-विकच-स्फुटाः ॥ ७ ॥
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ।
[4]स्थाणुर्वा ना ध्रुवःशङ्कुर्[5]ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥
[6]अप्रकाण्डे स्तम्ब-गुल्मौ, [7]वल्ली तु व्रततिर्लता ।
[8]लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि ॥ ९ ॥
[9]नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।
अस्त्री [10]प्रकाण्डःस्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥ १० ॥
[11]समे शाखालते, [12]स्कन्धशाखा-शाले, [13]शिफा-जटे ।
[14]शाखा शिफाऽवरोहः स्यान्[15]मूलाच्चाग्रं गता लता ॥ ११ ॥
[16]शिरोऽग्रं शिखरं वा ना, [17]मूलं बुध्नोऽङ्घ्रिनामकः ।
[18]सारो मज्जा नरि, [19]त्वक्स्त्री वल्कं वल्कलमस्त्रियाम् ॥ १२ ॥

---

( १ ) सर्वदा विफलवृक्षाणां नामत्रयम् । [ बाँझ वृक्ष के ३ नाम । ] ( २ ) फलवतो वृक्षस्य नामत्रयम् । [ फलवाले वृक्ष के ३ नाम । ] ( ३ ) पुष्पवतो वृक्षस्य अष्टौ नामानि । [ फूलों वाले वृक्ष के ८ नाम । ] ( ४ ) शाखादिरहितस्य वृक्षस्य नामत्रयम् । [ ठूंठ के ३ नाम । ] ( ५ ) लघुशाखायुतस्य क्षुपस्य । [ पौधा । ] ( ६ ) शाखादिरहितवृक्षस्य । [ छोटा पौधा के २ नाम । ] ( ७ ) लतायास्त्रीणि नामानि । [ लता के ३ नाम । ] ( ८ ) प्रतानवत्या लतायास्त्रीणि नामानि । [ फैली हुई लता के ३ नाम । ] ( ९ ) वृक्षादीनामुच्छ्रायस्य त्रीणि नामानि । [ पेड़ की ऊँचाई के ३ नाम । ] ( १० ) प्रकाण्डस्य नामद्वयम् । [ पेड़ का तना के २ नाम । ] ( ११ ) शाखायाः नामद्वयम् । [ शाखा के २ नाम । ] ( १२ ) वृक्षस्कन्धसमुत्पन्नस्थूलशाखाया नामद्वयम् । [ मोटी शाखा के २ नाम । ] ( १३ ) वृक्षादीनां मूलस्य नामद्वयम् । [ पेड़ की जड़ के २ नाम । ] ( १४ ) वटादिशाखाशिफाया नामद्वयम् । [ बरगद की जटा के २ नाम । ] ( १५ ) मूलाग्रगामिन्या लताया एकं नाम । [ जड़ से आगे फैली हुई लता । ] ( १६ ) वृक्षाग्रभागस्य नामत्रयम् । [ पेड़ की चोटी के ३ नाम । ] ( १७ ) वृक्षमूलस्य नामत्रयम् । [ पेड़ की जड़ के ३ नाम । ] ( १८ ) वृक्षादेःस्थिरांशस्य नामद्वयम् । [ पेड़ के सारभाग के २ नाम । ] ( १९ ) त्वचस्त्रीणि नामानि । [ पेड़ की छाल के ३ नाम ।]

[1]काष्ठं दार्व्[2]इन्धनं त्वेध इध्ममेधः[3] समित्स्त्रियाम् ।
[4]निष्कुहः कोटरं वा ना, [5]वल्लरिर्मञ्जरिः स्त्रियौ ॥ १३ ॥
[6]पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।
[7]पल्लवोऽस्त्री किसलयं, [8]विस्तारो विटपोऽस्त्रियाम् ॥ १४ ॥
[9]वृक्षादीनां फलं सस्यं, [10]वृन्तं प्रसवबन्धनम् ।
[11]आमे फले शलाटुःस्याच्छुष्के[12] वानमुभे त्रिषु ॥ १५ ॥
[13]क्षारको जालकं क्लीबे, [14]कलिका कोरकः पुमान् ।
[15]स्याद्गुच्छकस्तु स्तबकः, [16]कुड्मलो मुकुलोऽस्त्रियाम् ॥ १६ ॥
[17]स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।
[18]मकरन्दः पुष्परसः, [19]परागः सुमनोरजः ॥ १७ ॥
[20]द्विहीनं प्रसवे सर्वं, [21]हरीतक्यादयः स्त्रियाम् ।

---

( १ ) काष्ठस्य नामद्वयम् । [ लकड़ी के २ नाम । ] ( २ ) अग्निसन्दीपनतृणकाष्ठादेस्त्रीणि । [आग सुलगाने की पतली लकड़ी फूस आदि के ३ नाम । ] ( ३ ) यज्ञीयकाष्ठस्य नामद्वयम् । [ समिधा के २ नाम । ] ( ४ ) वृक्षकोटरस्य नामद्वयम् । [ वृक्षकोटर ( खोडरा ) के २ नाम । ] ( ५ ) मञ्जर्या नामद्वयम् । [ मञ्जरी के २ नाम । ] ( ६ ) पत्राणां नामषट्कम् । [ पत्तों के ६ नाम । ] ( ७ ) पल्लवस्य नामद्वयम् । [ किसलय ( कोपल ) के २ नाम । ] ( ८ ) वृक्षविस्तारस्यैकम् । [पेड़ के फैलाव का १ नाम ।] ( ९ ) वृक्षादीनां फलस्यैकम् । [ सस्य । ] ( १० ) पुष्पबन्धनस्यैकम् । [फूल का वृन्त ।] ( ११ ) आमफलस्यैकं नाम । [ कच्चे फल का नाम 'शलाटु'। ] ( १२ ) शुष्कफलस्यैकम् । [ मेवा । ] ( १३ ) नवकलिकावृन्दस्य नामद्वयम् । [ नयी कली के २ नाम । ] ( १४ ) कलिकाया नामद्वयम् । [ कलिका ( कली ) के २ नाम । ] ( १५ ) गुच्छकस्य नामद्वयम् । [ फूल का गुच्छा के २ नाम । ] ( १६ ) कुड्मलस्य द्वे नामनी । [ अधखिली कली के २ नाम । ] ( १७ ) पुष्पस्य पञ्च नामानि । [ फूल के ५ नाम । ] ( १८ ) पुष्परसस्य नामद्वयम् । [ मधु के २ नाम । ] ( १९ ) सुमनो रजसो नामद्वयम् । [ पराग के २ नाम । ] ( २० ) अश्वत्थादेः प्रसवे फलपुष्पादौ, सर्व द्विहीनं स्त्रीपुंसाभ्यां रहितं ( नपुंसकं ) ज्ञेयम् । ( २१ ) किन्तु हरीतकी, कोषातकी, बदरी, कण्टकार्यादीनां फलं स्त्रियामेव भवति ।

[1]आश्वत्थ-वैणव-प्लाक्ष-नैयग्रोधैङ्गुदं फले ॥ १८ ॥
बार्हतञ्च, [2]फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।
[3]पुष्पे जातिप्रभृतयः स्वलिङ्गा, [4]व्रीहयः फले ॥ १९ ॥
[5]विदार्याद्यास्तु मूलेऽपि, [6]पुष्पे क्लीबेऽपि पाटला ।
[7]बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराऽशनः ॥ २० ॥
अश्वत्थेऽथ [8]कपित्थे स्युर्दधित्थ-ग्राहि-मन्मथाः ।
तस्मिन् दधिफलः पुष्पफल-दन्तशठावपि ॥ २१ ॥
[9]उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।
[10]कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥
[11]सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।
[12]आरग्वधे राजवृक्ष-शम्याक-चतुरङ्गुलाः ॥ २३ ॥
आरेवत-व्याधिघात-कृतमाल-सुवर्णकाः ।
[13]स्युर्जम्बीरे दन्तशठ-जम्भ-जम्भीर-जम्भलाः ॥ २४ ॥

---

( १ ) अश्वत्थादीनां फलस्यैकं नाम । यथा—अश्वत्थस्य = आश्वत्थं, वेण्याः = वैणवं, प्लक्षस्य = प्लाक्षं, न्यग्रोधस्य = नैयग्रोधं, बृहत्याः = बार्हतम् ( २ ) जम्बूफलस्य नाम त्रयम् । [ जामुन के ३ नाम । ] ( ३ ) जातिप्रभृतयः पुष्पे पुष्पविषये स्वलिङ्गा भवन्ति । यथा—जात्याः पुष्पं जातिः । मल्लिकायाः पुष्पं मल्लिका इत्यादि । ( ४ ) एवम्प्रकारेण व्रीह्यः फले वाच्ये सति स्वलिङ्गा भवन्ति । तद् यथा—यवानां फलानि यवाः । माषानां फलानि माषाः । मुद्गानां फलानि मुद्गाः । ( ५ ) विदार्याद्यास्तु मूले, पुष्पे, फलेऽपि च स्वलिङ्गा भवन्ति । यथा—विदार्याः पुष्पं, फलं, मूलं च विदारी । ( ६ ) पाटलाशब्दः पुष्पे नपुंसकलिङ्गे स्त्रीलिङ्गे च । क्वचित् पूर्वोक्तवत् पुंसि च दृश्यते । ( ७ ) पिप्पलवृक्षस्य पञ्च नामानि । [ पीपल के ५ नाम । ] ( ८ ) कपित्थवृक्षस्य सप्त नामानि । [ कैथ के ७ नाम । ] ( ९ ) उदुम्बरस्य चत्वारि नामानि । [ गूलर के ४ नाम । ] ( १० ) कोविदारस्य नामचतुष्टयम् । [ कचनार के ४ नाम । ] ( ११ ) सप्तपर्णस्य चत्वारि नामानि । [ छतिवन के ४ नाम । ] ( १२ ) आरग्वधस्य अष्टौ नामानि । [ अमलतास के ८ नाम । ] ( १३ ) जम्बीरवृक्षस्य पञ्च नामानि । [ जम्बीरीनीबूके ५ नाम । ]

[1]वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः ।
[2]पुंनागे पुरुषस्तुङ्गः केसरो देवल्लभः ॥ २५ ॥
[3]पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।
[4]तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥
वञ्जुलश्चित्रकृच्चाऽथ द्वौ [5]पीतन-कपीतनौ ।
आम्रातके, [6]मधूके तु गुडपुष्प-मधुद्रुमौ ॥ २७ ॥
वानप्रस्थ-मधुष्ठीलौ, [7]जलजेऽत्र मधूलकः ।
[8]पीलौ गुडफलः स्रंसी, [9]तस्मिंस्तु गिरिसम्भवे ॥ २८ ॥
अक्षोट-कन्दरालौ [10]द्वावङ्कोटे तु निकोचकः ।
[11]पलाशे किंशुकः पर्णो वातपोथोऽथ [12]वेतसे ॥ २९ ॥
रथा-ऽभ्रपुष्प-विदुल-शीत-वानीर-वञ्जुलाः ।
[13]द्वौ परिव्याध-विदुलौ नादेयी चाऽम्बुवेतसे ॥ ३० ॥
[14]शोभाञ्जने शिग्रु-तीक्ष्णगन्धका-ऽक्षीव-मोचकाः ।
[15]रक्तोऽसौ मधुशिग्रुः [16]स्यादरिष्टः फेनिलः समौ ॥ ३१ ॥
[17]बिल्वे शाण्डिल्य-शैलूषौ मालूर-श्रीफलावपि ।

---

( १ ) वरणवृक्षस्य पञ्च नामानि । [ वरना के ५ नाम । ] ( २ ) पुंनागस्य पञ्च नामानि । [ नागकेसर के ५ नाम । ] ( ३ ) महानिम्बस्य चत्वारि नामानि [ बकायन के ४ नाम । ] ( ४ ) तिनिशस्य सप्त नामानि । [ तिनिश या तिरिच्छ के ७ नाम । ( ५ ) आम्रातकस्य नामत्रयम् । [ आमड़ा के ३ नाम । ] ( ६ ) मधूकस्य पञ्च नामानि । [ महुआ के ५ नाम । ] ( ७ ) जलमधूकस्यैकं नाम । [ जल महुआ । ] ( ८ ) पीलुवृक्षस्य त्रीणि नामानि । [ पीलु वृक्ष के २ नाम । ] ( ९ ) पर्वतीयाक्षोटस्य नामद्वयम् । [ अखरोट के २ नाम । ] ( १० ) अङ्कोलस्य नामत्रयम् । [ अंकोल के ३ नाम । ] ( ११ ) पलाशवृक्षस्य चत्वारि नामानि । [ पालशवृक्ष के ४ नाम । ] ( १२ ) वेतसलतायाः सप्त नामानि । [ वेत के ७ नाम । ] ( १३ ) जलवेतसस्य चत्वानि नामानि । [ जलवेतस के ४ नाम । ] ( १४ ) शिग्रुवृक्षस्य पञ्च नामानि । [ सहजन के ५ नाम । ] ( १५ ) एकं नाम रक्तशोभाञ्जनस्य । [ लालसहजन । ] ( १६ ) फेनिलस्य नामद्वयम् । [रीठा के २ नाम । ] ( १७ ) बिल्ववृक्षस्य पञ्च नामानि । [ बेल के ५ नाम । ]

[1]प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो[2] बहुपाद् वटः ॥ ३२ ॥
[3]गालवः शाबरो लोध्रस्तिरीटस्तिल्व-मार्जनौ ।
[4]आम्रश्चूतो रसालोऽसौ, [5]सहकारोऽतिसौरभः ॥ ३३ ॥
[6]कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।
[7]शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥
[8]राजादनं प्रियालः स्यात् सन्नकद्रुर्धनुष्पटः ।
[9]गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ।
[10]कर्कन्धूर्बदरी कोली [11]कोलं कुवल-फेनिले ॥ ३६ ॥
सौवीरं बदरं घोण्टाऽप्यथ स्यात् [12]स्वादुकण्टकः ।
विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥
[13]ऐरावतो नागरङ्गो, [14]नादेयी भूमिजम्बुका ।
[15]तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥ ३८ ॥
[16]काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके ।
[17]गोलीढो झाटलो घण्टा पाटलिर्मोक्ष-मुष्ककौ ॥ ३९ ॥

---

( १ ) प्लक्षस्य नामत्रयम् । [ पाकर के ३ नाम । ] ( २ ) न्यग्रोधवृक्षस्य त्रीणि नामानि । [ बरगद के ३ नाम । ] ( ३ ) श्वेतलोध्रवृक्षस्य षड् नामानि । केचित् प्रथमौ द्वौ श्वेतस्य शेषा रक्तलोध्रस्य स्वीकुर्वन्ति । [सफेदलोध के ६ नाम ।] ( ४ ) आम्रवृक्षस्य त्रीणि नामानि । [आम्रवृक्ष के ३ नाम ।] ( ५ ) अतिसुगन्धितस्याम्रस्यैकं नाम । [ बनारसी लंगड़ा आम । ] ( ६ ) गुग्गुलुवृक्षस्य पञ्च नामानि । [ गूगल के ५ नाम । ] ( ७ ) श्लेष्मातकवृक्षस्य पञ्च नामानि । [ लिसोड़ा के ५ नाम । ] ( ८ ) प्रियालस्य चत्वारि नामानि । [ चिरौंजी के ४ नाम । ] ( ९ ) गम्भारीवृक्षस्य सप्त नामानि । [ गम्भार या गम्भारी वृक्ष के ७ नाम । ] ( १० ) बदर्यास्त्रीणि नामानि । [बेरी (झड़बेर) के ३ नाम ।] ( ११ ) लघुबदरीफलस्य षड् नामानि । [छोटे बेर के ६ नाम । ] ( १२ ) विकङ्कतवृक्षस्य पञ्च नामानि । [व्याघ्रपाद् के ५ नाम ।] ( १३ ) नागरङ्गस्य नामद्वयम् । [नारंगी के २ नाम । ] ( १४ ) भूमिजम्बुकायाः, नागरङ्गस्य इति केचित् । [ नारंगी के २ नाम । ] ( १५ ) तेन्दुकस्य चत्वारि नामानि । [ तेंदू के ४ नाम । ] ( १६ ) काकतिन्दुकस्य चत्वारि नामानि । [ कुचिला के ४ नाम । ] ( १७ ) मुष्ककस्य ( लोध्रभेदस्य ) पञ्च नामानि । [ मोखा के ५ नाम । ]

[1]तिलकः क्षुरकः श्रीमान्, [2]समौ पिचुल-झावुकौ ।
[3]श्रीपर्णिका कुमुदिका कुम्भी कैडर्य-कट्फलौ ॥ ४० ॥
[4]क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।
[5]तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥
तूलश्च, [6]नीप-प्रियक-कदम्बास्तु हरिप्रिये ।
[7]वीरवृक्षोऽरुष्करोऽग्निमुखो भल्लातकी त्रिषु ॥ ४२ ॥
[8]गर्दभाण्डे कन्दराल-कपीतन-सुपार्श्वकाः ।
प्लक्षश्च, [9]तिन्तिडी चिञ्चाऽम्लिकाऽथो [10]पीतसारके ॥ ४३ ॥
सर्जकाऽसन-बन्धूकपुष्प-प्रियक-जीवकाः ।
[11]साले तु सर्ज-कार्श्या-श्वकर्णकाः सस्यसंवरः ॥ ४४ ॥
[12]नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभो-ऽर्जुनः ।
[13]राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥ ४५ ॥
[14]इङ्गुदी तापसतरुर्भूर्जे [15] चर्मि-मृदुत्वचौ ।
[16]पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४६ ॥

---

( १ ) तिलकवृक्षस्य नामत्रयम् । [ तिलक के ३ नाम । ] ( २ ) पिचुल-वृक्षस्य नामद्वयम् । [ झावु वृक्ष के २ नाम । ] ( ३ ) कट्फलस्य पञ्च नामानि । [ कायफल ( काफल ) के ५ नाम । ] ( ४ ) पट्टिकाख्यवृक्षो रक्तलोध्रः तस्य चत्वारि नामानि । [ पठानी लोध के ४ नाम ।] ( ५ ) तूदवृक्षस्य षड् नामानि । [ शहतूत के ६ नाम । ] ( ६ ) कदम्बस्य नामचतुष्टयम् । [ कदम्ब के ४ नाम । ] ( ७ ) भल्लातकवृक्षस्य चत्वारि नामानि । [ भिलावा के ४ नाम । ] ( ८ ) कपीतनवृक्षस्य पञ्च नामानि । [ पिलखन के ४ नाम । ] ( ९ ) तिन्तिडी-वृक्षस्य नामत्रयम् । [ इमली के ३ नाम । ] ( १० ) पीतसारकवृक्षस्य षड् नामानि । [ विजयसार के ६ नाम । ] ( ११ ) सालवृक्षस्य पञ्च नामानि । [ सालवृक्ष के ५ नाम । ] ( १२ ) अर्जुनवृक्षस्य पञ्च नामानि । [ अर्जुन ( कोह, काहू ) वृक्ष के ५ नाम । ] ( १३ ) राजादनवृक्षस्य नामत्रयम् । [ राजादन ( खिरनी, चिरौंजी ) के ३ नाम । ] ( १४ ) इङ्गुदीवृक्षस्य द्वे नामनी । [ हिंगोट के २ नाम । ] ( १५ ) भूर्जपत्रस्य नामत्रयम् । [ भोजपत्र के ३ नाम । ] ( १६ ) शाल्मलिवृक्षस्य पञ्च नामानि । [ सेमर(ल)वृक्ष के ५ नाम । ]

[1]पिच्छा तु शाल्मलीवेष्टे, [2]रोचनः कूटशाल्मलिः ।
[3]चिरबिल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥
[4]प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ।
[5]करञ्जभेदाः षड्ग्रन्थो मर्कटचङ्गारवल्लरी ॥ ४८ ॥
[6]रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।
[7]गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥
[8]अरिमेदो विट्खदिरे, [9]कदरः खदिरे सिते ।
[10]सोमवल्कोऽप्यथ व्याघ्रपुच्छ-गन्धर्वहस्तकौ ॥ ५० ॥
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।
चञ्चुः पञ्चाङ्गुलो मण्ड-वर्धमान-व्यडम्बकाः ॥ ५१ ॥
[11]अल्पा शमी शमीरःस्याच्छमी[12] सक्तुफला शिवा ।
[13]पिण्डीतको मरुबकः श्वसनः करहाटकः ॥ ५२ ॥
शल्यश्च मदने, [14]शक्रपादपः पारिभद्रकः ।
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ।

---

( १ ) शाल्मलीवेष्टस्य नामद्वयम् । [ सेमल की गोंद के २ नाम । ] ( २ ) कूटशाल्मलेर्नामद्वयम् । [ कूटशाल्मलि के २ नाम । ] ( ३ ) करञ्जकस्य नामचतुष्टयम् । [ करञ्जुआ के ४ नाम । ] ( ४ ) पूतिकरञ्जस्य चत्वारि नामानि । [ काँटेदार करञ्ज के ४ नाम । ] ( ५ ) करञ्जभेदानामेकैकं नाम । [ करञ्ज के भेदों के नाम । ] ( ६ ) रोहितकवृक्षस्य चत्वारि नामानि । [ रोहिडावृक्ष के ४ नाम । ] ( ७ ) चत्वारि खादिरस्य नामानि । [ खैर के ४ नाम । ] **विशेष**—धन्वन्तरिनिघण्टु में **खादिर** का पर्याय **बालपत्र** दिया है। परन्तु **अमरसिंह** ने **बालपत्र** को **बालपुत्र** समझकर इसके लिये **बालतनय** शब्द का प्रयोग किया है। यह अमरसिंह की भूल है। ( ८ ) विट्खदिरस्य नामद्वयम् । [ विट्खदिर के २ नाम । ( ९ ) श्वेतखदिरस्य नामद्वयम् । [ सफेद खैर के २ नाम । ] ( १० ) एरण्डस्यैकादशनामानि । [ एरण्ड ( रेड़ी, रेड़ ) के ११ नाम । ] ( ११ ) अल्पशम्या नामैकम् । [ छोंकरा । ] ( १२ ) शम्यास्त्रीणि नामानि । [ शमी के ३ नाम । ] ( १३ ) मदनवृक्षस्य षड् नामानि [ मैनफल वृक्ष के ६ नाम । ] ( १४ ) देवदारुवृक्षस्य अष्टौ नामानि । [ देवदारुवृक्ष के ८ नाम । ]

[1]पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ॥ ५४ ॥
कृष्णवृन्ता कुबेराक्षी, [2]श्यामा तु महिलाह्वया ।
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ।
[3]मण्डूकपर्ण-पत्त्रोर्ण-नट-कट्वङ्ग-टुण्टुकाः ॥ ५६ ॥
स्योनाक-शुकनास-र्क्ष-दीर्घवृन्त-कुटन्नटाः ।
शोणकश्चाऽरलौ, [4]तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥
अमृता च वयस्था च, [5]त्रिलिङ्गस्तु विभीतकः ।
नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥
[6]अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ।
हरीतकी हैमवती चेतकी श्रेयसी शिवा ॥ ५९ ॥
[7]पीतद्रुः सरलः पूतिकाष्ठं चाऽथ [8]द्रुमोत्पलः ।
कर्णिकारः परिव्याधो [9]लकुचो लिकुचो डहुः ॥ ६० ॥
[10]पनसः कण्टकिफलो, [11]निचुलो हिज्जलोऽम्बुजः ।
[12]काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ॥ ६१ ॥
[13]अरिष्टः सर्वतोभद्र-हिङ्गु-निर्यास-मालकाः ।
पिचुमन्दश्च निम्बेऽथ [14]पिच्छिलाऽगुरुशिंशपा ॥ ६२ ॥

---

( १ ) पाटलिवृक्षस्य सप्त नामानि । [ कठ पाडरि, कुबेराक्षी के ७ नाम । ] ( २ ) प्रियङ्गुवृक्षस्य द्वादशनामानि । [ मालकांगुनी के १२ नाम । ] ( ३ ) स्योनाकस्य द्वादशनामानि । [ सोनापाठा के १२ नाम । ] ( ४ ) आमलकीवृक्षस्य चत्वारि नामानि । [ आँवला के वृक्ष के ४ नाम । ] ( ५ ) बिभीतकवृक्षस्य पञ्च नामानि । [ बहेड़ा के वृक्ष के ५ नाम । ] ( ६ ) हरीतक्या एकादशनामानि । [ हरीतकी के ११ नाम । ] ( ७ ) सरलवृक्षस्य नामत्रयम् । [ चीड़ वृक्ष के ३ नाम । ] ( ८ ) कर्णिकारवृक्षस्य नामत्रयम् । [ कठचम्पा के ३ नाम । ] ( ९ ) लकुचस्य नामद्वयम् । [ बड़हर के २ नाम । ] ( १० ) पनसवृक्षस्य नामद्वयम् । [ कटहर वृक्ष के २ नाम । ] ( ११ ) स्थलवेतसस्य नामत्रयम् । [ स्थलवेतसके ३ नाम । ] ( १२ ) काकोदुम्बरिकायाश्चत्वारि नामानि, [ कठूमर ( कठगूलर ) के ४ नाम । ] ( १३ ) निम्बवृक्षस्य षड् नामानि । [ नीम के ६ नाम । ] ( १४ ) शिंशिपावृक्षस्य नामत्रयम् । [ शीशम के ३ नाम । ]

[1]कपिला भस्मगर्भा सा, [2]शिरीषस्तु कपीतनः ।
भण्डिलोऽप्यथ [3]चम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥
एतस्य [4]कलिका गन्धफली स्यादथ [5]केसरे ।
बकुलो, [6]वञ्जुलोऽशोके, समौ [7]करक-दाडिमौ ॥ ६४ ॥
[8]चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।
[9]जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥
[10]श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ।
जयोऽथ [11]कुटजः शक्रो वासको गिरिमल्लिका ॥ ६६ ॥
एतस्यैव [12]कलिङ्गेन्द्रयव-भद्रयवं फले ।
[13]कृष्णपाकफला-ऽऽविग्न-सुषेणाः करमर्दके ॥ ६७ ॥
[14]कालस्कन्धस्तमालःस्यात्तापिच्छोऽप्यथ [15]सिन्दुके ।
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥ ६८ ॥
[16]वेणी खरा गरी देवताडो जीमूत इत्यपि ।
[17]श्रीहस्तिनी तु भूरुण्डी, [18]तृणशून्यं तु मल्लिका ॥ ६९ ॥
भूपदी शीतभीरुश्च, [19]सैवाऽऽस्फोता वनोद्भवा ।

---

( १ ) कपिलवर्णायाः शिंशिपाया एकं नाम । [ कपिलवर्णकी शीशम का नाम । ] ( २ ) शिरीषवृक्षस्य नामत्रयम् । [ शिरीषवृक्षके ३ नाम । ] ( ३ ) चम्पकस्य नामत्रयम् । [ चम्पा के ३ नाम । ] ( ४ ) चम्पकलिकाया एकं नाम । [ चम्पा की कली । ] ( ५ ) वकुलवृक्षस्य नामद्वयम् । [ मौलसिरी के २ नाम । ] ( ६ ) अशोकवृक्षस्य नामद्वयम् । [ अशोक के २ नाम । ] ( ७ ) दाडिमस्य नामद्वयम् । [ दाड़िम ( अनार ) के २ नाम । ] ( ८ ) चाम्पेयस्य नामचतुष्टयम् । [ नागचम्पा के ४ नाम । ] ( ९ ) वैजयन्तिकाया पञ्च नामानि । [ अरणी के ५ नाम । ] ( १० ) अग्निमन्थस्य पञ्च नामानि । [अगेथु के ५ नाम ।] ( ११ ) कुटजस्य चत्वारि नामानि । [ कुरैया के ४ नाम । ] (१२) कुटजबीजस्य नामत्रयम् । [ इन्द्रजौ के ३ नाम ] ( १३ ) कृष्यपाकफलाया: चत्वारि नामानि । [ करौंदा के ४ नाम । [ ( १४ ) तमालवृक्षस्य नामत्रयम् । [ तमालवृक्ष के ३ नाम । ] (१५) सिन्दुवारस्य पञ्च नामानि । [ मेवड़ी (सिंवाली) के ५ नाम । ] ( १६ ) देवतालस्य पञ्च नामामि । [देवताल के ५ नाम ।] ( १७ ) श्रीहस्तिन्या नामद्वयम् । [ भूरुण्डी के २ नाम । ] ( १८ ) मल्लिकायाश्चत्वारि नामानि । [ बेला के ४ नाम । ] ( १९ ) वनमल्लिकाया एकं नाम । [ जंगली बेला । ]

[1]शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ॥ ७० ॥
[2]सिताऽसौ श्वेतसुरसा भूतवेश्यथ [3]मागधी ।
गणिका यूथिकाऽम्बष्ठा, सा [4]पीता हेमपुष्पिका ॥ ७१ ॥
[5]अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ।
[6]सुमना मालती जातिः, [7]सप्तला नवमालिका ॥ ७२ ॥
[8]माध्यं कुन्दं, [9]रक्तकस्तु बन्धूको बन्धुजीवकः ।
[10]सहा कुमारी तरणि[11]रम्लानस्तु महासहा ॥ ७३ ॥
[12]तत्र शोणे कुरबकस्तत्र [13]पीते कुरण्टकः ।
नीली झिण्टी [14]द्वयोर्बाणा दासी चार्तगलश्च सा ॥ ७४ ॥
[15]सैरेयकस्तु झिण्टी स्यात्तस्मिन् [16]कुरबकोऽरुणे ।
[17]पीता कुरण्टका झिण्टी तस्मिन् सहचरी द्वयोः ॥ ७५ ॥
[18]ओण्ड्रपुष्पं जपापुष्पं, [19]वज्रपुष्पं तिलस्य यत् ।
[20]प्रतिहास-शतप्रास-चण्डात-हयमारकाः ॥ ७६ ॥

---

( १ ) शेफालिकायाश्चत्वारि नामानि । [ मेवड़ी के ४ नाम । ] ( २ ) श्वेतसुरसाया नामद्वयम् । [ सफेदमेवड़ी के २ नाम ।] ( ३ ) यूथिकायाश्चत्वारि नामानि । [ जूही के ४ नाम । ] ( ४ ) पीतयूथिकायाः चत्वारि नामानि । [ पीली जूही के ४ नाम । ] ( ५ ) वासन्तीलतायाः पञ्च नामानि । [ वासन्तीलता के ५ नाम । ] ( ६ ) जातीपुष्पस्य पञ्च नामानि । [ चमेली के ५ नाम । ] ( ७ ) नवमालिकाया नामद्वयम् । [ नवमालिका के २ नाम । ] ( ८ ) कुन्दकुसुमस्य नामद्वयम् । [ कुन्द के २ नाम । ] ( ९ ) बन्धूकपुष्पस्य नामत्रयम् । [ दुपहरिया के ३ नाम । ] ( १० ) घृतकुमार्यास्त्रीणि नामानि । [ घीकुआर ( घृतकुआर ) के ३ नाम । ] ( ११ ) महासहाया नामद्वयम् । [ कटसरैया के २ नाम । ] ( १२ ) रक्तकुरबकस्यैकं नाम । [ लालकटसरैया । ] ( १३ ) कुरण्टकस्यैकं नाम । [ पीलीकटसरैया । ] ( १४ ) नील्यास्त्रीणि नामानि । [ नीलीझिण्टी के ३ नाम । ] ( १५ ) सैरेयकस्य नामद्वयम् । [ सामान्य झिंटी के २ नाम । ] ( १६ ) अरुणकुरबकस्यैकं नाम । [ लालकुरण्टक । ] ( १७ ) पीतकुरण्टकस्य नामद्वयम् । [ पीलाकुरण्टक के २ नाम । ] ( १८ ) जपापुष्पस्य नामद्वयम् । [ ओडहुलया गुडहल के २ नाम । ] ( १९ ) तिलपुष्पस्यैकं नाम । [ तिलपुष्प का नाम । ] ( २० ) करवीरस्य पञ्च नामानि । [ कनेर ( कन्यूर ) के ५ नाम । ]

करवीरे, [1]करीरे तु क्रकर-ग्रन्थिलावुभौ ।
[2]उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥ ७७ ॥
मातुलो मदनश्चाऽस्य [3]फले मातुलपुत्रकः ।
[4]फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥ ७८ ॥
[5]समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ।
जम्बीरोऽप्यथ [6]पर्णासे कठिञ्जर-कुठेरकौ ॥ ७९ ॥
[7]सितेऽर्जकोऽत्र [8]पाठी तु चित्रको वह्निसञ्ज्ञकः ।
[9]अर्काह्व-वसुका-ऽऽस्फोत-गणरूप-विकीरणाः ॥ ८० ॥
मन्दारश्चाऽर्कपर्णोऽत्र [10]शुक्लेऽलर्क-प्रतापसौ ।
[11]शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥ ८१ ॥
[12]वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ।
[13]वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥ ८२ ॥
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ।
[14]मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।

---

( १ ) करीरस्य नामत्रयम् । [ करीर, करील, कैर के ३ नाम । ] ( २ ) धत्तूरस्य सप्त नामानि । [ धतूरा ( धत्तूर ) के ७ नाम । ] ( ३ ) धत्तूरफलस्यैकं नाम । [ धतूरे का फल । ] ( ४ ) मातुलुङ्गस्य चत्वारि नामानि । [बिजौरा नीबू के ४ नाम । ] अपरे प्रथमं नामद्वयं बीजपूरस्य शेषं नामद्वयं मातुलुङ्गस्येत्याहुः । इदमेव नो रोचते । कूर्माचलप्रदेशे निम्बूकस्य समुपलभ्यन्ते बहवोभेदाः, तेषु मातुलुङ्गकस्य नामसादृश्यं 'मतकाकड़ी'ति फलमिति ज्ञेयम् । ( ५ ) मरुबकस्य पञ्च नामामि । [ जम्बीरी नीबू ( मरुवा ) के ५ नाम । ] ( ६ ) पर्णासस्य नामत्रयम् । [पर्णास ।] ( ७ ) श्वेतपर्णासस्यैकं नाम । [सफ़ेद पर्णास ।] ( ८ ) चित्रकस्य नामत्रयम् । [ चीता के ३ नाम । ] ( ९ ) अर्कस्य सप्त नामानि । [ मदार के ७ नाम । ] ( १० ) शुक्लवर्णवतोऽर्कस्य नामद्वयम् । [ सफेद आक के २ नाम । ] ( ११ ) शिवमल्ल्याः पञ्च नामानि । [ गूमा के ५ नाम । ] ( १२ ) वृक्षादन्याश्चत्वारि नामानि । [वन्दा के ४ नाम ।] ( १३ ) गुडूच्या नव नामानि । [ गुरुच, गिलोय, गुर्ज के ९ नाम । ] ( १४ ) दश मूर्वाया नामानि । तत्र स्रवा, स्रुवेति च पाठभेदः । मूर्वाया विषये वैद्यानां नास्ति ऐकमत्यम् । [ मूर्वा के १० नाम । ]

[1]पाठाऽम्बष्ठा विद्धकर्णी स्थापना श्रेयसी रसा ॥ ८४ ॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।
[2]कटुः कटम्भराऽशोकरोहिणी कटुरोहिणी ॥ ८५ ॥
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।
[3]आत्मगुप्ता-ऽजडा-ऽव्यण्डा कण्डुरा प्रावृषायणी ॥ ८६ ॥
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।
[4]चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।
[5]अपामार्गः शैखरिको धामार्गव-मयूरकौ ॥ ८८ ॥
प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी ।
[6]हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥
अङ्गारवल्ली बालेय-शाक-वर्वर-वर्धकाः ।
[7]मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥ ९० ॥
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।
[8]यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ।
[9]पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ॥ ९२ ॥
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ।
[10]निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ॥ ९३ ॥
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।

---

( १ ) पाठाया दश नामानि । [पाठा के १० नाम ।] ( २ ) वनतिक्तिकाया अष्टो नामानि । [ कुटकी के ८ नाम । ] ( ३ ) आत्मगुप्ताया नव नामानि । [ किंवाच, कौंच के ९ नाम । ] ( ४ ) मूषकपर्ण्या दश नामानि । [ मूसापर्णी के १० नाम । ] ( ५ ) अपामार्गस्याष्टौ नामानि । [ अपामार्ग, औंगा, चिरचिटा, साजी के ८ नाम । ] ( ६ ) भार्ग्या नव नामानि । [ भारंगी के ९ नाम । ] ( ७ ) मञ्जिष्ठाया नव नामानि । [ मंजीठ के ९ नाम । ] ( ८ ) यवासस्य दश नामानि । [ जवासा के १० नाम । ] ( ९ ) पृश्निपर्ण्या नव नामानि । [ पिठवन के ९ नाम । ] ( १० ) कण्ठकारिकाया दश नामानि । [ भटकटैया, सत्यानाशी के १० नाम । ]

[1]नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ।
[2]अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ॥ ९५ ॥
कालमेषी कृष्णफला वाकुची पूतिफल्यपि ।
[3]कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥
उषणा पिप्पली शौण्डी कोलाऽथ [4]करिपिप्पली ।
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥
[5]चव्यं तु चविकं, [6]काकचिञ्चा-गुञ्जे तु कृष्णला ।
[7]पलङ्कषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ॥ ९८ ॥
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।
[8]विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ॥ ९९ ॥
शृङ्गी महौषधं चाथ [9]क्षीरावी दुग्धिका समे ।
[10]शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥ १०० ॥
ऋष्यप्रोक्ता-ऽभीरुपत्री-नारायण्यः शतावरी ।
अहेरुरथ [11]पीतद्रु-कालीयक-हरिद्रवः ॥ १०१ ॥
दार्वी पचम्पचा दारुहरिद्रा पर्जनीत्यपि ।
[12]वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ १०२ ॥
[13]शुक्ला हैमवती, [14]वैद्यमातृ-सिंह्यौ तु वाशिका ।
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥

---

( १ ) नील्या एकादशनामानि । [ नीली के ११ नाम । ] ( २ ) सोमराज्या अष्टौ नामानि । [ वाकुची के १६ नाम । ] ( ३ ) पिप्पल्या दश नामानि । [ पिप्पली, पीपल के १० नाम । ] ( ४ ) गजपिप्पल्याः पञ्च नामानि । [ गज-पीपल के ५ नाम । ] ( ५ ) चव्यस्य नामद्वयम् । [ चव्य के २ नाम । ] ( ६ ) गुञ्जाया नामत्रयम् । [ घुंघची, रत्ती, (रतङ्यव), के ३ नाम । ] ( ७ ) गोक्षुरकस्य सप्त नामानि । ] ( ८ ) अतिविषाया अष्टौ नामानि । [ अतीस के ८ नाम ।] ( ९ ) दुग्धिकायाः नामद्वयम् । [ दुद्धी के २ नाम । ] ( १० ) शतमूल्या दश नामानि । [ शतावरी के १० नाम । ] ( ११ ) दारुहरिद्रायाः सप्त नामानि । [ दारुहल्दी, ( किरमोड़ा ) के ७ नाम । ] ( १२ ) वचायाः पञ्च नामानि । [ बच, बँज के ५ नाम । ] ( १३ ) हैमवत्या एकं नाम । [ सफेद बच । ] ( १४ ) वासकस्याष्टौ नामानि । [ अडूसा, वासा, बैसिङ्गे के ८ नाम । ]

[1]आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ता-ऽपराजिता।
[2]इक्षुगन्धा तु काण्डेक्षु-कोकिलाक्षे-क्षुर-क्षुराः ॥ १०४ ॥
[3]शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः।
मिश्रेयोऽप्यथ [4]सीहुण्डो वज्रद्रुःस्नुक्स्नुही गुडा ॥ १०५ ॥
समन्तदुग्धाऽथो [5]वेल्लममोघा चित्रतण्डुला।
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुन्नपुंसकम् ॥ १०६ ॥
[6]बला वाट्यालको, [7]घण्टारवा तु शणपुष्पिका।
[8]मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥
[9]सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत्।
त्रिभण्डी रोचनी, [10]श्यामा-पालिन्द्यौ तु सुषेणिका॥ १०८ ॥
काला मसूरविदला-ऽर्धचन्द्रा कालमेषिका।
[11]मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥ १०९ ॥
[12]विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च या[ऽ]सिता।
[13]अन्या क्षीरविदारी स्यान्महाश्वेत-र्क्षगन्धिका ॥ ११० ॥
[14]लाङ्गली शारदी तोयपिप्पली शकुलादनी।

---

( १ ) अपराजितायाश्चत्वारि नामानि। [विष्णुक्रान्ता, कोयल के ४ नाम। ] ( २ ) कोकिलाक्षस्य पञ्च नामानि। [ तालमखाना, कमलगट्टा के ५ नाम। ] ( ३ ) मधुरिकायाः षड्नामानि। शिवश्छत्रायाः स्थाने सितच्छत्रेति पाठभेदः। [ सौंफ के ६ नाम। ] ( ४ ) स्नुह्याः षड्नामानि। तत्र सीहुण्डः-सेहुण्डश्च पाठ-भेदः। [ थूहर, सेहुण्ड, (स्यून) के ६ नाम। ] ( ५ ) विडङ्गस्य षड् नामानि। [ वायविडंग, के ६ नाम। ] ( ६ ) बलाया नामद्वयम्। [ बला, बरिआरा, खिरेंटी के २ नाम। ] ( ७ ) शणपुष्पिकाया नामद्वयम्। [ सनई, सन, शण के २ नाम। ] ( ८ ) द्राक्षायाः पञ्च नामानि। [ मुनक्का, दाख के ५ नाम। ] ( ९ ) त्रिवृतायाः सप्त नामानि। [ निसोथ के ७ नाम। ] ( १० ) सुषेणिकायाः सप्तनामानि। [कालीनिसोथ के ७ नाम।] ( ११ ) मधुयष्टिकायाश्चत्वारि नामानि। [ मुलेठी के ४ नाम ] ( १२ ) विदार्याश्चत्वारि नामानि। [ विदारीकन्द, बिलाईकन्द, (बिरौउआ) के ४ नाम। ] ( १३ ) कृष्णविदार्यास्त्रीणि नामानि। [ काला विदारीकन्द के ३ नाम। ] ( १४ ) तोयपिप्पल्याश्चत्वारि नामानि। [ जलपीपल के ४ नाम। ]

[1]खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ॥ १११ ॥
[2]गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।
[3]योग्यमृद्धिः सिद्धिलक्ष्म्यौ, [4]वृद्धेरप्याह्वया इमे ॥ ११२ ॥
[5]कदली वारणबुसा रम्भा मोचांऽशुमत्फला ।
काष्ठीला, [6]मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥
[7]वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ।
[8]नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ॥ ११४ ॥
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा ।
[9]विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५ ॥
[10]तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ।
[11]भारद्वाजी तु सा वन्या, [12]शृङ्गी तु ऋषभो वृषः ॥ ११६ ॥
[13]गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ।
[14]धामार्गवो घोषकः [15]स्यान्महाजाली स पीतकः ॥ ११७ ॥
[16]ज्यौत्स्नी पटोलिका जाली, [17]नादेयी भूमिजम्बुका ।
[18]स्याल्लाङ्गलिक्यग्निशिखा, [19]काकाङ्गी काकनासिका ॥ ११८ ॥

---

( १ ) मयूरशिखायाः पञ्च नामानि । [ मयूरशिखा के ५ नाम । ] ( २ ) शारिवायाः पञ्च नामानि । [ सारिवा, गौरीसर के ५ नाम । ] ( ३ ) ऋद्धेश्चत्वारि नामानि । [ ऋद्धि के ४ नाम । ] ( ४ ) इमे वृद्धेरप्याह्वया भवन्तीति कोषकर्तुराशयः । ( ५ ) कदल्याः षड् नामानि । [ केला के ६ नाम । ] ( ६ ) मुद्गपर्ण्यास्त्रीणि नामानि । [ मुगवन के ३ नाम । ] ( ७ ) वार्ताक्याः पञ्च नामानि । [ बैगन, भंटा, के ५ नाम । ] ( ८ ) रास्नायाः नव नामानि । [रासना के ९ नाम । ] ( ९ ) सालपर्ण्याः पञ्च नामानि । [ शालपर्णी के ५ नाम । ] ( १० ) कार्पास्याश्चत्वारि नामानि । [ कपास, रुई के ४ नाम । ] ( ११ ) वनकार्पास्या एकम् । [ जंगलीकपास । ] ( १२ ) शृङ्ग्यास्त्रीणि नामानि । [काकड़ासिंगी, (ककड़क्वस) के ३ नाम ।] ( १३ ) गाङ्गेरुक्याश्चत्वारि नामानि । [ गंगेरन, ककही के ४ नाम । ] ( १४ ) धामार्गवस्य नामद्वयम् । [ नेनुआ के २ नाम । ] ( १५ ) पीतधामार्गवस्यैकम् । [घिया तोरई ।] ( १६ ) वनपटोलिकाया नाम । [ जंगली कड़वी तोरई । ] ( १७ ) भूमिजम्बुकाया नामद्वयम् । [ भूमि जम्बुकी । ] ( १८ ) लाङ्गल्या नामद्वयम् । [ कलिहारी के २ नाम । ] यह उपविष है। ( १९ ) काकनासिकाया नामद्वयम् । [ कौआठोंठी के २ नाम । ]

[1]गोधापदी तु सुवहा, [2]मुसली तालमूलिका ।
[3]अजश्रृङ्गी विषाणी स्याद् [4]गोजिह्वादार्विके समे ॥ ११९ ॥
[5]ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ [6]द्विजा ।
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥
[7]एलवालुकमैलेयं सुगन्धि हरिबालुकम् ।
बालुकं चाथ [8]पालङ्क्यां मुकुन्दःकुन्दकुन्दुरू ॥ १२१ ॥
[9]वालं ह्रीबेरबर्हिष्ठोदीच्यं केशाऽम्बुनाम च ।
[10]कालानुसार्य-वृद्धा-ऽश्मपुष्प-शीतशिवानि तु ॥ १२२ ॥
शैलेयं, [11]तालपर्णी तु दैत्या गन्धकुटी मुरा ।
गन्धिनी, [12]गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥
महेरुणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।
[13]अग्निज्वाला-सुभिक्षे तु धातकी धातृपुष्पिका ॥ १२४ ॥
[14]पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुलाऽथ सा ।
[15]सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ॥ १२५ ॥
[16]व्याधिः कुष्ठं पारिभाव्यं व्याप्यं पाकलमुत्पलम् ।

---

( १ ) गोधापद्या नामद्वयम् । [ हंसपदी के २ नाम । ] ( २ ) मुसल्या नामद्वयम् । [ सेमल की मुसली के २ नाम । ] ( ३ ) अजश्रृङ्ग्या नामद्वयम् । [ मेषश्रृंगी के २ नाम । ] ( ४ ) गोजिह्वाया नामद्वयम् । [गोभी के २ नाम । ] ( ५ ) ताम्बूलवल्यास्त्रीणि नामानि । [पान के ३ नाम ।] ( ६ ) हरेणुकायाः षड् नामानि । [ संभालू के बीजों के ६ नाम । ] ( ७ ) एलवालुकस्य पञ्च नामानि । [ एलुआ के ५ नाम । ] ( ८ ) पालङ्क्याश्चत्वारि नामानि । केचन सल्लकी-निर्यासस्य नामानि स्वीकुर्वन्ति । [ रूमीमस्तंगी के ४ नाम । ] ( ९ ) ह्रीबेरस्य पञ्च नामानि । [ नेत्रबाला के ५ नाम । ] ( १० ) शैलेयस्य पञ्च नामानि । [ छरीला, पत्थर फूल के ५ नाम । ] ( ११ ) मुरायाः पञ्च नामानि । [ मुरा के ५ नाम । ] ( १२ ) सल्लक्या अष्टौ नामानि । [ सलई के ८ नाम । ] ( १३ ) धातक्याश्चत्वारि नामानि । [ धौल, धाय के ४ नाम । ] ( १४ ) एलायाः पञ्च नामानि । [ बड़ीइलायची के ५ नाम ।] ( १५ ) सूक्ष्मैलायाः पञ्च नामानि । [ छोटीइलायची के ५ नाम । ] ( १६ ) कुष्ठस्य षड् नामानि । [ कूठ के ६ नाम । ]

[1]शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ [2]वितुन्नकः ॥ १२६ ॥
झटाऽमलाऽज्झटा ताली शिवा तामलकीति च ।
[3]प्रपौण्डरीकं पुण्डर्यमथ [4]तुन्नः कुबेरकः ॥ १२७ ॥
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ [5]राक्षसी ।
चण्डा धनहरी क्षेम-दुष्पत्र-गणहासकाः ॥ १२८ ॥
[6]व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ।
[7]शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥ १२९ ॥
[8]धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ।
[9]शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी[10] ॥ १३० ॥
काक्षी मृत्स्ना तुवरिका मृत्तालक-सुराष्ट्रजे ।
[11]कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥
प्लव-गोपुर-गोनर्द-कैवर्ती-मुस्तकानि च ।
[12]ग्रन्थिपर्णं शुकं बर्हपुष्पं स्थौणेय-कुक्कुरे ॥ १३२ ॥
[13]मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३३ ॥
[14]तपस्विनी जटामांसी जटिला लोमशा मिसी ।
[15]त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥ १३४ ॥

---

( १ ) चोरपुष्प्यास्त्रीणि । [ शंखाहुली के ३ नाम । ] ( २ ) भूम्यामलक्याः सप्त नामानि । [ भुंई आँवला के ७ नाम । ] ( ३ ) प्रपौण्डरीकस्य नामद्वयम् । [ पुण्डरिया के २ नाम । ] ( ४ ) नन्दीवृक्षस्य षड् नामानि । [ तूणीवृक्ष के ६ नाम । ] ( ५ ) धनहर्याः षड् नामानि । [ चोरक वृक्ष के ६ नाम । ] ( ६ ) व्याघ्रनखस्य नामचतुष्टयम् । [ बघनखा के ४ नाम । ] ( ७ ) शुषिरायाः पञ्च नामानि । [ छिद्रयुक्तनलिका के ५ नाम । ] ( ८ ) अञ्जनकेश्याश्चत्वारि नामानि । [ अञ्जनकेशी के ४ नाम । ] ( ९ ) नखद्रव्यस्य पञ्च नामानि । [ नखी के ५ नाम । ] ( १० ) आढक्याः षड् नामानि । [ अरहर की दाल के ६ नाम । ] ( ११ ) मुस्तकस्य अष्टौ नामानि । [ मोथा के ८ नाम । ] ( १२ ) ग्रन्थिपर्णस्य पञ्च नामानि । [ गठिवन, कुकरौंदा के ५ नाम । ] ( १३ ) स्पृक्काया दश नामानि । [ असवर, कपूरीसाग के १० नाम । ] ( १४ ) जटामास्याः षड्-नामानि । [ जटामांसी के ६ नाम । ] ( १५ ) त्वक्पत्रस्य नामषट्कम् । [ तज, दालचीनी के ६ नाम । ]

[1]कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ।
[2]ओषध्यो जातिमात्रे [3]स्युरजातौ सर्वमौषधम् ॥ १३५ ॥
[4]शाकाख्यं पत्रपुष्पादि, [5]तण्डुलीयोऽल्पमारिषः ।
विशल्याऽ[6]ग्निशिखानन्ताऽफलिनी शक्रपुष्पिका ॥ १३६ ॥
[7]स्याद्दृक्षगन्धा छगलाऽन्त्र्यावेगी वृद्धदारकः ।
जुङ्गो, [8]ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥ १३७ ॥
[9]पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ।
[10]हयपुच्छी तु काम्बोजी माषपर्णी महासहा ॥ १३८ ॥
[11]तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।
[12]बर्बरा कवरी तुङ्गी खरपुष्पाऽजगन्धिका ॥ १३९ ॥
[13]एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ।
[14]चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ॥ १४० ॥
[15]सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।
[16]नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ॥ १४१ ॥

---

( १ ) कर्चूरस्य चत्वारि नामानि । [ कचूर के ४ नाम । ] ( २ ) जातिमात्रे 'ओषध्यः' ( ३ ) अजातौ तद्भिन्नेषु स्थलेपु सर्वम् 'औषधम्' इति प्रयुज्यते । ( ४ ) पत्रपुष्पादि शाकनाम्नोपयुज्यते । तद्यथा—

'मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ।
त्वक्पुष्पकवचश्चैव शाकं दशविधं स्मृतम्' ॥ इति

( ५ ) तण्डुलीयस्य नामद्वयम् [ चोलाई ( मरसा ) शाक के २ नाम । ] ( ६ ) शक्रपुष्पिकायाः पञ्च नामानि । [ इन्द्रपुष्पी के ५ नाम । ] ( ७ ) वृद्धदारकस्य पञ्च नामानि । [ विधारा के ५ नाभ । ] (८) ब्राह्म्याश्चत्वारि नामानि । [ ब्राह्मी के ४ नाम । ] ( ९ ) स्वर्णक्षीर्याश्चत्वारि नामानि । [ स्वर्णक्षीरी-सन्यानाशी के ४ नाम । ] ( १० ) माषपर्ण्या नाम चतुष्टयम् । [ माषपर्णी के ४ नाम । ] ( ११ ) तुण्डिकेर्याश्चत्वारि नामानि । [ तुण्डिकेरी के ४ नाम । ] ( १२ ) खरपुष्पायाः पञ्च नामानि । [अजगन्धा से ५ नाम ।] ( १३ ) एलापर्ण्याश्चत्वारि नामानि । [ एलापर्णी के ४ नाम । ] ( १४ ) अम्ललोणिकायाः पञ्च नामानि । [ चांगेरी के ५ नाम । ] ( १५ ) अम्लवेतसः पञ्च नामानि । [ चूक, अमलवेत के ५ नाम । ] ( १६ ) नमस्कार्याश्चत्वारि नामानि । [ हथ्था जोड़ी के ४ नाम । ]

[1]जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ।
[2]कूर्चशीर्षो मधुरकः श्रृङ्ग-ह्रस्वाङ्ग-जीवकाः ॥ १४२ ॥
[3]किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽर्थ[4] सप्तला ।
विमला सातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥
[5]वायसोली स्वादुरसा वयस्थाऽथ[6] मकूलकः ।
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥ १४४ ॥
[7]अजमोदा [8]तूग्रगन्धा ब्रह्मदर्भा यवानिका ।
[9]मूले पुष्कर-काश्मीर-पद्मपत्राणि पौष्करे ॥ १४५ ॥
[10]अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ।
[11]काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥ १४६ ॥
[12]प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ।
पद्माट उरणाख्यश्च, [13]पलाण्डुस्तु सुकन्दकः ॥ १४७ ॥

---

( १ ) जीवन्त्याः षड् नामानि । [ जीवन्ती के ६ नाम । ] ( २ ) जीवकस्य पञ्च नामानि । [ जीवक के ५ नाम । ] ( ३ ) किराततिक्तस्य नामत्रयम् । [ चिरायता के ३ नाम । ] ( ४ ) सप्तलायाः पञ्च नामानि । [ सातला, सेहुण्ड भेद के ५ नाम । ] ( ५ ) वयस्थायास्त्रीणि नामानि । [ ककोड़ी के ३ नाम । ] ( ६ ) दन्तिकायाः पञ्च नामानि । [ वज्रदन्ती के ५ नाम । ] ( ७ ) अजमोदाया नामैकम् । [ अजमोदा । ] ( ८ ) यवानिकायास्त्रीणि नामानि । [ अजवाइन के ३ नाम । ] ( ९ ) पुष्करमूलस्य नामत्रयम् । [ पोहकरमूल के ३ नाम । ]

वक्तव्य––पुष्करमूल के पर्यायों में अमरसिंह ने 'पद्मपत्र' को भी स्थान दिया है, जिसका 'क्षीरस्वामी' ने विरोध किया है। वे धन्वन्तरि निघण्टु के अनुसार वहां पर 'पद्मवर्ण' शब्द का होना उचित सिद्ध कर रहे हैं। जब कि भावप्रकाश निघण्टु तथा अभिनव निघण्टु जिनके पाठ इस द्रव्य के सम्बन्ध में समान हैं, वे 'पद्मपत्र' शब्द का ही उल्लेख करते हैं। यथा––

'उक्तं पुष्करमूलन्तु पौष्करं पुष्करञ्च तत् ।
पद्मपत्रञ्च, काश्मीरं कुष्ठभेदमिमं जगुः' ॥ इति ।

( १० ) पद्मायाः पञ्च नामानि । [पद्मा के ५ नाम । ] ( ११ ) काम्पिल्यस्य पञ्च नामानि । [कबीला के ५ नाम । ] ( १२ ) प्रपुन्नाडस्य षड् नामानि । [ चकवड़, पुवांड, (बनाड़) के ६ नाम । ] ( १३ ) पलाण्डोर्नामद्वयम् । [प्याज के २ नाम ।]

[1]लतार्क-दुर्द्रुमौ तत्र हरितेऽथ [2]महौषधम् ।
लशुनं गृञ्जना-ऽरिष्ट-महाकन्द-रसोनकाः ॥ १४८ ॥
[3]पुनर्नवा तु शोथघ्नी, [4]वितुन्नं सुनिषण्णकम् ।
[5]स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥ १४९ ॥
[6]पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।
[7]वार्षिकं त्रायमाणा स्यात् त्रायन्ती बलभद्रिका ॥ १५० ॥
[8]विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ।
[9]मार्कवो भृङ्गराजः स्यात् [10]काकमाची तु वायसी ॥ १५१ ॥
[11]शतपुष्पा सितच्छत्त्राऽतिच्छत्त्रा मधुरा मिसिः ।
अवाक्पुष्पी कारवी च, [12]सरणा तु प्रसारिणी ॥ १५२ ॥
तस्यां कटम्भरा राजबला भद्रबलेत्यपि ।
[13]जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥
संस्पर्शाऽथ [14]शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।
कर्चूरोऽपि पलाशोऽथ[15] कारवेल्लः कठिल्लकः ॥ १५४ ॥
सुषवी चाऽथ [16]कुलकं पटोलस्तिक्तकः पटुः ।

---

( १ ) हरितवर्णस्य पलाण्डोर्नामद्वयम् । [ हरा रंग वाले प्याज के २ नाम । ] ( २ ) रसोनकस्य षड् नामानि । [ लहसुन के ६ नाम । ] ( ३ ) पुनर्नवाया नामद्वयम् । [ पुनर्नवा, गदहपुर्ना के २ नाम । ] ( ४ ) सुनिषण्णकस्य नामद्वयम् । [ विसखपरा के २ नाम । ] ( ५ ) शणपर्ण्याश्चत्वारि नामानि । [ पटशण के ४ नाम । ] ( ६ ) ज्योतिष्मतीलतायाः पञ्च नामानि । [ मालकांगनी के ५ नाम । ] ( ७ ) त्रायमाणायाश्चत्वारि नामानि । [ त्रायमाणा के ५ नाम । ] ( ८ ) गृष्टेश्चत्वारि नामानि । [ गेठी ( वाराही कन्द ) के ४ नाम । ] इसका कन्द और फल दोनों खाया जाता है । ( ९ ) भृङ्गराजस्य नामद्वयम् । [ भांगरा के २ नाम । ] ( १० ) काकमाच्या द्वे नामनी । ( कालीमकोय, (गिवैं) के २ नाम । ] ( ११ ) शतपुष्पायाः सप्त नामानि । [ सौंफ के ७ नाम । ] ( १२ ) प्रसारिण्याः पञ्च नामानि । [ पसरन के ५ नाम । ] ( १३ ) चक्रवर्तिन्याः षड् नामानि । [ चकवड़ ( बनाड़ ) के ६ नाम । ] ( १४ ) गन्धमूल्याः पञ्च नामानि । [ कचूर के ५ नाम । ] ( १५ ) कारवेल्लस्य नामत्रयम् । [ करेला के ३ नाम । ] ( १६ ) पटोलस्य चत्वारि नामानि । [ परबल के ४ नाम । ]

[1]कूष्माण्डकस्तु कर्कारुर्[2]उर्वारुः कर्कटी स्त्रियौ ॥ १५५ ॥
[3]इक्ष्वाकुः कटुतुम्बी स्यात् [4]तुम्ब्यलाबूरुभे समे ।
[5]चित्रा गवाक्षी गोडुम्बा, [6]विशाला त्विन्द्रवारुणी ॥ १५६ ॥
[7]अर्शोघ्नः सूरणः कन्दो, [8]गण्डीरस्तु समष्ठिला ।
[9]कलम्ब्युपोदिका[10]ऽस्त्री तु [11]मूलकं [12]हिलमोचिका ॥ १५७ ॥
[13]वास्तूकं शाकभेदाः स्युर्दूर्वा[14] तु शतपर्विका ।
सहस्रवीर्याभार्गव्यौ रुहाऽनन्ताऽथ [15]सा सिता ॥ १५८ ॥
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ।
[16]कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥ १५९ ॥
[17]स्याद्भद्रमुस्तको गुन्द्रा, [18]चूडाला चक्रलोच्चटा ।
[19]वंशे त्वक्सार-कर्मार-त्वचिसार-तृणध्वजाः ॥ १६० ॥
शतपर्वा यवफलो वेणु-मस्कर-तेजनाः ।
[20]वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥ १६१ ॥

---

( १ ) कूष्माण्डस्य नामद्वयम् । [ पेठा, ( भुँज ) के २ नाम । ] ( २ ) कर्कट्या नामद्वयम् । [ ककड़ी के २ नाम । ] ( ३ ) कटुतुम्ब्या नामद्वयम् । [ गोल कडवी तुम्वी के २ नाम । ] ( ४ ) अलाब्वा नामद्वयम् । [ लौकी के २ नाम । ] ( ५ ) गवाक्ष्यास्त्रीणि नामानि । [ बड़ी ककड़ी के ३ नाम । ] ( ६ ) इन्द्रवारुण्या नामद्वयम् । [ इन्द्रायण, ( इन्द्रैणि ) के २ नाम । ] ( ७ ) सूरणस्य नामत्रयम् । [ जिमीकन्द, सूरण के ३ नाम । ] ( ८ ) गण्डीरस्य नामद्वयम् । [ गाँडर दूब के २ नाम । ] ( ९ ) कलम्ब्या नामद्वयम् । [ करेमू के २ नाम । ] ( १० ) उपोदिकाया नामैकम् । [ पोई । ] ( ११ ) मूलिकाया नामैकम् । [मूली ।] ( १२ ) हिलमोचिकाया एकम् । [ हिलमोचिका । ] ( १३ ) वास्तूकस्यैकं नाम । [ बथुआ । ] ( १४ ) दूर्वायाः षड् नामानि । [ दूब के ६ नाम । ] ( १५ ) शुक्लदूर्वायाश्चत्वारि नामानि । [ सफेद दूब के ४ नाम । ] ( १६ ) मुस्तकस्य नामद्वयम् । [ मोथा के २ नाम । ] ( १७ ) मुस्तकभेदस्य नामद्वयम् । [ नागरमोथा के २ नाम । ] ( १८ ) मुस्ताविशेषस्य नामत्रयम् । [ मुस्ताभेद । ] ( १९ ) वंशस्य दश नामानि । [ बाँस के १० नाम । ] ( २० ) कीचकाख्यवेणुविशेषस्यैकम् । [ कीचक नामक बाँस जो हवा चलने पर स्वयं बजते हैं के नाम । ]

[1]ग्रन्थिर्ना पर्वपरुषी, [2]गुन्द्रस्तेजनकः शरः ।
[3]नडस्तु धमनः पोटगलोऽथो[4] काशमस्त्रियाम् ॥ १६२ ॥
इक्षुगन्धा पोटगलः, [5]पुंसि भूम्नि तु बल्वजाः ।
[6]रसाल इक्षुस्तद्भेदाः [7]पुण्ड्र-कान्तारकादयः ॥ १६३ ॥
[8]स्याद्वीरणं वीरतरं, [9]मूलेऽस्योशीरमस्त्रियाम् ।
अभयं नलदं सेव्यममृणालं जलाशयम् ॥ १६४ ॥
लामज्जकं लघुलयमवदाहेष्टकापथे ।
[10]नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥
[11]अस्त्री कुशं कुथो दर्भः पवित्रमथ [12]कत्तृणम् ।
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥
[13]छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ।
[14]शष्पं बालतृणं, [15]घासो यवसं, [16]तृणमर्जुनम् ॥ १६७ ॥
[17]तृणानां संहतिस्तृण्या, [18]नड्या तु नडसंहतिः ।
[19]तृणराजाह्वयस्तालो, [20]नालिकेरस्तु लाङ्गली ॥ १६८ ॥

---

( १ ) वंशग्रन्थेस्त्रीणि नामानि । तत्र परुः षान्तं क्लीबे । [ बांस की गांठ के ३ नाम । ] ( २ ) शरस्य नामत्रयम् । [ सरहरी के ३ नाम । ] ( ३ ) नडस्य नामत्रयम् । [ नड के ३ नाम । ] ( ४ ) काशस्य नामत्रयम् । [ कुश-भेद काश के ३ नाम । ] ( ५ ) नित्यबहुबचनान्तस्य बल्वजस्यैकं नाम । [ बगई । ] ( ६ ) इक्षोर्नामद्वयम् । [ईख के २ नाम ।] ( ७ ) पुण्ड्रकस्यैकं नाम । [ पौडा ईख । ] ( ८ ) वीरणस्य नामद्वयम् । [ गाँडर के २ नाम । ] ( ९ ) वीरणमूलस्य दश नामानि । [ खस के १० नाम । ] ( १० ) नीवारादीनां नाम । [ साँवा आदितृणजाति का नाम । ] ( ११ ) दर्भस्य चत्वारि नामानि । [ कुश के ४ नाम । ] ( १२ ) कत्तृणस्य षड् नामानि । [ रौहिसतृण के ६ नाम । ] ( १३ ) छत्रादिपञ्च नामानि जलतृणविशेषस्य । केचित्तु अन्त्यं नामद्वयं सामान्य-तृणस्य मन्यन्ते । [ जलतृण के ५ नाम । ] ( १४ ) बालतृणस्य नामद्वयम् । [ नई घास के २ नाम । ] ( १५ ) घासस्य नामद्वयम् । [ घास के २ नाम । ] ( १६ ) तृणमात्रस्य नामद्वयम् । [ तृणमात्र । ] ( १७ ) तृणसमूहस्यैकम् । [ तृण समूह । ] ( १८ ) नडसंहतेरेकं नाम । [ नड ( डंठल ) समूह । ] ( १९ ) तृणराजस्य नामद्वयम् । [ ताल के २ नाम । ] ( २० ) नारिकेलस्य नामद्वयम् । तत्र रलयोः साम्यात् 'नालिकेरः' अपि । [ नारियल के २ नाम । ]

[1]घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु।
[2]फलमुद्वेगमेते च [3]हिन्तालसहितास्त्रयः॥ १६९॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः।

इति वनौषधिवर्गः।



## ५. अथ सिंहादिवर्गः

[4]सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।
[ कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः।
पुण्डरीकः पञ्चनखश्चित्रकायमृगद्विषः॥ ]
[5]शार्दूलद्वीपिनौ व्याघ्रे, [6]तरक्षुस्तु मृगादनः॥ १॥
[7]वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः।
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि॥ २॥
[8]कपि-प्लवङ्ग-प्लवग-शाखामृग-बलीमुखाः।
मर्कटो वानरः कीशो वनौका, अथ [9]भल्लुके॥ ३॥
ऋक्षाच्छभल्लभल्लूका, [10]गण्डके खड्गखड्गिनौ।
[11]लुलायो महिषो वाहद्विषत्कासरसैरिभाः॥ ४॥

---

( १ ) पूगस्य पञ्च नामानि। [ सुपारी के पेड़ के ५ नाम।] ( २ ) पूगफलस्यैकम्। [ सुपारी। ] ( ३ ) हिन्तालमारभ्य नारिकेलखर्जूरादयः सर्वेऽपि तृणजातय इति कथ्यन्ते। [ हिन्ताल, नारियल, ताड़ और खजूर ये सभी तृणजाति में गिने जाते हैं। ]

इति वनौषधिवर्गः॥



( ४ ) सिंहस्य षड् नामानि, अष्टौ नामानि क्षेपकोक्तानि। [ सिंह के १४ नाम ] ( ५ ) व्याघ्रस्य नामत्रयम्। [ बाघ के ३ नाम। ] ( ६ ) मृगादनस्य नामद्वयम्। [ तेंदुआ के २ नाम। ] ( ७ ) शूकरस्य द्वादश नामानि। [ सूअर के १२ नाम। ] ( ८ ) वानरस्य नव नामानि। [ वानर के ९ नाम। ] ( ९ ) भल्लूकस्य नामचतुष्टयम्। [ भालू के ४ नाम। ] ( १० ) गण्डकस्य नामत्रयम्। [ गैंडा के ३ नाम। ] ( ११ ) महिषस्य पञ्च नामानि। [ भैंसा के ५ नाम। ]

[1]स्त्रियां शिवा भूरिमाय-गोमायु-मृगधूर्तकाः ।
शृगाल-वञ्चक-क्रोष्टु-फेरु-फेरव-जम्बुकाः ॥ ५ ॥
[2]ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ।
[3]त्रयो गौधार-गौधेर-गौधेया गोधिकात्मजे ॥ ६ ॥
[4]श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।
[6]वातप्रमीर्वातमृगः, [7]कोक इहामृगो वृकः ॥ ७ ॥
[8]मृगे कुरङ्गवातायुहरिणाऽजिनयोनयः ।
[9]ऐणेयमेण्याश्चर्माद्यमेण[10]स्यैणमुभे त्रिषु ॥ ८ ॥
[11]कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
[12]कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥
[13]गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
इत्यादयो मृगेन्द्राद्या गवाद्या पशुजातयः ॥ ११ ॥
[ [14]अधोगन्ता तु खनको वृषः पुंध्वज उन्दुरः ]
उन्दुरुर्मूषकोऽप्याखु[15]र्गिरिका बालमूषिका ।

---

( १ ) शृगालस्य दश नामानि । [ सियार के १० नाम । ] ( २ ) बिडालस्य पञ्च नामानि । [ विडाल ( बिलार ) के ५ नाम । ] ( ३ ) गौधेयस्य नामत्रयम् । [ गोधेय के ३ नाम । ] ( ४ ) शल्यस्य नामद्वयम् । [ साही के २ नाम । ] ( ५ ) शललीरोम्णस्त्रीणि नामानि । [ साही का कांटा के ३ नाम । ] ( ६ ) वातप्रमीमृगस्य द्वे नामनी । [ वायु के समान तेज दौड़नेवाला मृग के २ नाम । ] ( ७ ) वृकस्य त्रीणि नामानि । [ भेड़िया के ३ नाम । ] ( ८ ) मृगस्य पञ्च नामानि ] ( ९ ) एण्याश्चर्मादेरेकं नाम । [ मृगचर्म । ] ( १० ) हरिणचर्ममांसादेरेकं नाम । ऐणेयम्; ऐणम्-उभे त्रिषु । [ हरिण के मांस-चर्म आदि का नाम । ] ( ११ ) अजिनयोनिमृगाणामेकैकं नाम । [ जिन मृगों का चर्म लिया जाता है उनके एक एक नाम । ] ( १२ ) मृगविशेषाणामेकैकं नाम । [ मृग विशेषों के नाम—१. कृष्णसार, २. रुरु, ३. न्यङ्कु, ४. अङ्कु, ५. शम्बर, ६. रौहिष, ७. गोकर्ण, ८. पृषत, ९. ऐण, १०. ऋष्य, ११. रोहित और १२ चमर । ] ( १३ ) सिंहमृग-गवादयः पशवः कथ्यन्ते । गन्धर्वशरभादयो मृगाः कथ्यन्ते । ( १४ ) मूषकस्याष्टौ नामानि । [ चूहा के ८ नाम । ] ( १५ ) बालमूषिकाया द्वे नामनी । [ चुहिया के २ नाम । ]

[1]सरटः कृकलासः स्यान्[2]मुसली गृहगोधिका ॥ १२ ॥
[3]लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।
[4]नीलङ्गुस्तु कृमिः, [5]कर्णजलौकाः शतपद्युभे ॥ १३ ॥
[6]वृश्चिकः शूककीटः स्या[7]दलिद्रोणौ तु वृश्चिके ।
[8]पारावतः कलरवः कपोतोऽथ [9]शशादनः ॥ १४ ॥
पत्त्री श्येन, [10]उलूके तु वायसारातिपेचकौ ।
[ दिवान्धः काशिको घूको दिवाभीतो निशाटनः ]
[11]व्याघ्राटः स्याद्भरद्वाजः, [12]खञ्जरीटस्तु खञ्जनः ॥ १५ ॥
[13]लोहपृष्ठस्तु कङ्कः स्यादथ [14]चाषः किकीदिविः ।
[15]कलिङ्गभृङ्गधूम्याटा, अथ [16]स्याच्छतपत्रकः ॥ १६ ॥
दार्वाघाटोऽथ [17]सारङ्गः स्तोककश्चातकः समाः ।
[18]कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥
[19]चटकः कलविङ्कः स्यात्तस्य [20]स्त्री चटका, तयोः ।

---

( १ ) सरटस्य नामद्वयम् । [ गिरगिट के २ नाम । ] ( २ ) गृहगोधिकाया नामद्वयम् । [ छिपकली के २ नाम । ] ( ३ ) तन्तुवायस्य चत्वारि नामानि । [ मकड़ी के ४ नाम । ] ( ४ ) नीलङ्गोर्नामद्वयम् । [ सोनकीडा के २ नाम । ] ( ५ ) शतपद्या नामद्वयम् । [ कनखजूर के २ नाम । ] ( ६ ) शूककीटस्य नामद्वयम् । [ ऊन को खाने वाला कृमि के २ नाम । ] ( ७ ) वृश्चिकस्य नामत्रयम् । तत्र द्रोणः, द्रुणः अपि । [ विच्छू के ३ नाम । ] ( ८ ) पारावतस्य त्रीणि नामानि । [ कबूतर के ३ नाम । ] ( ९ ) श्येनस्य नामत्रयम् । [ बाज के ३ नाम । ] ( १० ) उलूकस्याष्टौ नामानि । [ उल्लू के ८ नाम । ] ( ११ ) व्याघ्राटस्य नामद्वयम् । [ भरदुआ के २ नाम । ] ( १२ ) खञ्जनस्य नामद्वयम् । [ खञ्जन पक्षी के २ नाम । ] ( १३ ) कङ्कस्य नामद्वयम् । [ कंकपक्षी के २ नाम । ] ( १४ ) चाषस्य नामद्वयम् । [ चाष के २ नाम । ] ( १५ ) कलिङ्गस्य नामद्वयम् । [ कलिङ्ग के २ नाम । ] ( १६ ) काष्ठकुट्टस्य नामद्वयम् । [ कठफोड़वा के २ नाम । ] ( १७ ) चातकस्य नामत्रयम् । [ पपीहा के ३ नाम । ] ( १८ ) कुक्कुटस्य नामचतुष्टयम् । [ मुर्गा के ४ नाम । ] ( १९ ) चटकस्य नामद्वयम् । [ गौरेया के २ नाम । ] ( २० ) चटकाया एकं नाम । [ चिड़ी ( गौरेया की स्त्री ) । ]

[1]पुमपत्यं चाटकैरः, [2]स्त्र्यपत्ये चटकैव हि ॥ १८ ॥
[3]कर्करेटुः करेटुः स्यात् [4]कृकणक्रकरौ समौ ।
[5]वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ १९ ॥
[6]काके तु करटाऽरिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥
[ स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः । ]
[7]द्रोणकाकस्तु काकोलो, [8]दात्यूहः कालकण्टकः ।
[9]आतायिचिल्लो, [10]दाक्षाय्यगृध्रौ, [11]कीरशुकौ समौ ॥ २१ ॥
[12]क्रुङ्क्रौञ्चोऽथ [13]बकः कह्वः, [14]पुष्कराह्वस्तु सारसः ।
[15]कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥
[16]कादम्बः कलहंसः स्यादुत्क्रोश[17]कुररौ समौ ।
[18]हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥
[19]राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।
[20]मलिनैर्मल्लिकाक्षास्ते, [21]धार्तराष्ट्राः सितेतरैः ॥ २४ ॥

( १ ) चटकस्य अपत्यं पुमान् चाटकैरस्तस्यैकम् । [ गौरेया का बच्चा । ] ( २ ) स्त्रीचटकाया एकं नाम । [ गौरेया की बच्ची । ] ( ३ ) कर्करेटोर्नामद्वयम् । [ कोचरी चिड़िया के २ नाम । ] ( ४ ) कृकणस्य नामद्वयम् । [ कृकण के २ नाम । ] ( ५ ) कोकिलस्य चत्वारि नामानि । [ कोयल के ४ नाम ।] ( ६ ) काकस्य दश नामानि । [ कौआ के १० नाम । ] ( ७ ) द्रोणकाकस्य नामद्वयम् । [ द्रोण कौआ के २ नाम । ] ( ८ ) दात्यूहस्य नामद्वयम् । [ काकातुआ के २ नाम । ] ( ९ ) चिल्लस्य नामद्वयम् । [ चील के २ नाम । ] ( १० ) गृध्रस्य द्वे नामनी । [ गीध के २ नाम । ] ( ११ ) शुकस्य नामद्वयम् । [ सुग्गा, तोता के २ नाम । ] ( १२ ) क्रौञ्चपक्षिणो नामद्वयम् । [ क्रौञ्चपक्षी के २ नाम । ] ( १३ ) बकस्य नामद्वयम् । [ बगुलाके २ नाम । ] ( १४ ) सारसपक्षिणोर्नामद्वयम् । [ सारस के २ नाम । ] ( १५ ) चक्रवाकस्य द्वे नामनी । [ चकवा के २ नाम । ] ( १६ ) कादम्बस्य द्वे नामनी । [ बत्तख के २ नाम । ] ( १७ ) कुररस्य नामद्वयम् । [ कुररपक्षी के २ नाम । ] ( १८ ) हंसस्य चत्वारि नामानि । [ हंस के ४ नाम । ] ( १९ ) राजहंसस्यैकम् । [ राजहंस । ] ( २० ) हंसभेदस्यैकं नाम । [ हंस भेद । ] ( २१ ) कृष्णचञ्चुपादस्य हंसस्य । [ काली चोंच, पैर वाला हंस विशेष । ]

[1]शरारिराटिराडिश्च, [2]बलाका बिसकण्ठिका।
[3]हंसस्य योषिद् वरटा, [4]सारस्य तु लक्ष्मणा॥ २५॥
[5]जतुकाऽजिनपत्त्रा [6]स्यात्परोष्णी तैलपायिका।
[7]वर्वणा मक्षिका नीला, [8]सरघा मधुमक्षिका॥ २६॥
[9]पतङ्गिका पुत्तिका [10]स्याद्दंशस्तु वनमक्षिका।
[11]दंशी तज्जातिरल्पा स्याद् [12]गन्धोली वरटा द्वयोः॥ २७॥
[13]भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः।
[14]समौ पतङ्गशलभौ, [15]खद्योतो ज्योतिरिङ्गणः॥ २८॥
[16]मधुव्रतो मधुकरो मधुलिण्मधुपाऽलिनः।
द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमराऽलयः॥ २९॥
[17]मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्।
शिखावलः शिखी केकी मेघनादानुलास्यपि॥ ३०॥
[18]केका वाणी मयूरस्य, [19]समौ चन्द्रकमेचकौ।

---

( १ ) पञ्चशरार्याः। [ आडी के ५ नाम। ] ( २ ) बलाकाया नामद्वयम्। [ बकभेद के २ नाम। ] ( ३ ) हंसयोषित एकं नाम। [ हंस की स्त्री का १ नाम 'वरटा'। ] ( ४ ) सारसस्य योषित एकं नाम। [ सारस की स्त्री का नाम 'लक्ष्मणा' ] ( ५ ) जतुकाया नामद्वयम्। [ चमगादड़ के २ नाम। ] ( ६ ) परोष्ण्या नामद्वयम्। [ बागुलिका के २ नाम। ] ( ७ ) नीलवर्णमाक्षिकाया एकं नाम। [ नीली मक्खी। ] ( ८ ) मधुमक्षिकाया नामद्वयम्। [ मधु-मक्खी, (मौन) के २ नाम। ] ( ९ ) पतङ्गिकाया नामद्वयम्। [ तितली, पतिंगा के २ नाम। ] ( १० ) वनमक्षिकाया नामद्वयम्। [ वनमक्षिका, डाँस के २ नाम। ] ( ११ ) अल्पजातिजदंश्या नामैकम्। [ छोटी मक्खी। ] ( १२ ) वरटायाः। [ बर्रे का २ नाम। ] ( १३ ) झिल्लिकायाश्चत्वारि नामानि। [ झींगुर के ४ नाम। ] ( १४ ) पतङ्गस्य नामद्वयम्। [ पतिंगों ( दीपक में जल जाने वालों ) के २ नाम। ] ( १५ ) खद्योतस्य नामद्वयम्। [ जुगनू, पटवीजना के २ नाम। ] ( १६ ) भ्रमरस्यैकादश नामानि। [ भ्रमर, भौरा के ११ नाम। ] ( १७ ) मयूरस्य नव नामानि। [ मोर के ९ नाम। ] ( १८ ) मयूरध्वनेरेकं नाम। [ केका ( मयूर की वाणी )। ] ( १९ ) पिच्छस्थचन्द्राऽऽकृतेर्नामद्वयम्। [ मोर के चँदवा के २ नाम। ]

[1]शिखा चूडा, [2]शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३१ ॥
[3]खगे विहङ्ग-विहग-विहङ्गम-विहायसः ।
शकुन्ति-पक्षि-शकुनि-शकुन्त-शकुन-द्विजाः ॥ ३२ ॥
पतत्रि-पत्रि-पतग-पतत्पत्त्ररथाऽण्डजाः ।
नगाकोवाजिविकिरविविष्किरपतत्त्रयः ॥ ३३ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः ।
[4]तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥
तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरकः ।
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥
[5]गरुत्पक्षच्छदाः पत्रं पतत्रञ्च तनूरुहम् ।
[6]स्त्री पक्षतिः पक्षमूलं[7] चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥
[8]प्रडीनोड्डीनसण्डीनान्येताः खगगतिक्रियाः ।
[9]पेशी कोषो द्विहीनेऽण्डं, [10]कुलायो, नीडमस्त्रियाम् ॥ ३७ ॥
[11]पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।
[12]स्त्रीपुंसौ मिथुनं द्वन्द्वं, युग्मं तु युगलं युगम् ॥ ३८ ॥
[13]समूह-निवह-व्यूह-सन्दोह-विसर-व्रजाः ।
स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः ॥ ३९ ॥
समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ ४० ॥

---

( १ ) मयूरशिखाया नामद्वयम् । [ मयूरशिखा के २ नाम । ( २ ) वर्हिणः पिच्छस्य नामद्वयम् । [ मोरपंख के २ नाम । ] ( ३ ) खगानां सप्तविंशति नामानि । [पक्षियों के २७ नाम ।] ( ४ ) तत्र पक्षिविशेषाणां त्रयोदश नामानि । [ पक्षिविशेषों के १३ नाम । ] ( ५ ) पक्षिरक्षाणां षड् नामानि । [ पक्षियों के पंखों के ६ नाम । ] ( ६ ) पक्षमूलस्य नामद्वयम् । [ पंखों की जड़ के २ नाम । ] ( ७ ) पक्षिचञ्च्वोर्नामद्वयम् । [ पक्षियों के चोंच के २ नाम । ] ( ८ ) पक्षीणां गतिविशेषस्येकैकं नाम । [ पक्षियों के उड़ने के प्रकार का नाम । ] ( ९ ) अण्डनामानि त्रीणि । [ अण्डों के ३ नाम । ] ( १० ) कुलायस्य नामद्वयम् । [ घोंसला के २ नाम । ] ( ११ ) शावकस्य सप्त नामानि । [ बालक के ७ नाम । ] ( १२ ) स्त्रीपुरुषयुगलस्य पञ्च नामानि । [ स्त्री-पुरुष के जोड़ा के ५ नाम । ] ( १३ ) समूहस्य द्वाविंशति नामानि । [समूह, भीड़ के २२ नाम । ]

[1]वृन्दभेदाः समैर्वर्गः [2]सङ्घसार्थौ तु जन्तुभिः ।
सजातीयैः कुलं, यूथं तिरश्चां पुंनपुंसकम् ॥ ४१ ॥
पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ।
स्यान्निकायः [2]पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४२ ॥
[3]कापोत-शौक-मायूर-तैत्तिरादीनि तद्गणे ।
[4]गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४३ ॥

इति सिंहादिवर्गः ।



## ६. अथ मनुष्यवर्गः

[5]मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
[6]स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
[7]स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
[8]विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥

---

( १ ) वृन्दभेदानां नामानि क्रमेण—समानां वृन्दं-वर्गः । जन्तूनां वृन्दं सङ्घः, सार्थः च । सजातीयानां समूहः कुलम् । पक्षिप्रभृतीनां समूहः—यूथः । पशूनां समूहः—समजः । मानवानां समूहः—समाजः । सधर्मिणां समूहः—निकायः । ( २ ) धान्यादीनां राशेश्चत्वारि नामानि । [ अनाज की राशि के ४ नाम । ] ( ३ ) कपोतादिगणस्यैकैकम् । [ कपोतानां समूहः—कापोतम् । शुकानां—शौकम् । मयूराणां—मायूरम् । तित्तिरीणां—तैत्तिरम् । ( ४ ) गृहासक्तपक्षिणां नामद्वयम् । [ पालतू ( सुग्गा-मैना ) पक्षियों के २ नाम । ]

इति सिंहादिवर्गः ।



( ५ ) मनुष्यजातेः षड् नामानि । [ मनुष्य जाति के ६ नाम । ] ( ६ ) पुरुषस्य पञ्च पर्यायाः । [ पुरुषशब्द के ५ पर्याय । ] ( ७ ) स्त्रीजातेरेकादश पर्यायाः । [ स्त्री जाति के ११ नाम । ] ( ८ ) स्त्रीविशेषाणां द्वादशभेदाः । [ स्त्री विशेषों के १२ नाम । ]

सुन्दरी रमणी रामा, [1]कोपना सैव भामिनी।
[2]वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी॥ ४॥
[3]कृताभिषेका महिषी, [4]भोगिन्योऽन्या नृपस्त्रियः।
[5]पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी॥ ५॥
भार्या जायाथ पुं भूम्नि दाराः स्यात्तु [6]कुटुम्बिनी।
पुरन्ध्री [7]सुचरित्रा तु सती साध्वी पतिव्रता॥ ६॥
[8]कृतसापत्निकाऽध्यूढाऽधिविन्नाथ [9]स्वयंवरा।
पतिंवरा च वर्या च [10]कुलस्त्री कुलपालिका॥ ७॥
[11]कन्या कुमारी, [12]गौरी तु नग्निकाऽनागतार्तवा।
[13]स्यान्मध्यमा दृष्टरजास्[14]तरुणी युवतिः समे॥ ८॥
[15]समाःस्नुषाजनीवध्वश्चिरिण्टी[16] तु सुवासिनी।
[17]इच्छावती कामुका स्याद् [18]वृषस्यन्ती तु कामुकी॥ ९॥

---

( १ ) कोपनायाः स्त्रियो द्वे नामनी। [क्रोधयुक्त स्त्री के २ नाम।] ( २ ) उत्तमायाः स्त्रियश्चत्वारि नामानि। [ उत्तम स्त्री के ४ नाम। ] ( ३ ) महिष्या द्वे नामनी। [ पटरानी के २ नाम। ] ( ४ ) राज्ञः सामान्यस्त्रीणाम्। [ राजा की सामान्य स्त्रियों के नाम। ] ( ५ ) पाणिगृहीताया सह नामानि। [ विवाहित स्त्री के ७ नाम।] ( ६ ) कुटुम्बिन्या द्वे नामानि। [पति पुत्रवती स्त्री (सुहागिन) के २ नाम। ] ( ७ ) पतिव्रतायाश्चत्वारि नामानि। [ पतिव्रता के ४ नाम। ] ( ८ ) अनेकभार्यस्य नामत्रयम्। [ पहली विवाहित स्त्री के ५ नाम। ] ( ९ ) स्वेच्छाकृतपतिवरणायाः स्त्रियस्त्रीणि नामानि। [ जिस स्त्री ने अपनी इच्छा से पति का वरण किया हो, उसके २ नाम। ] ( १० ) कुलपालिकाया नामद्वयम्। [ सती, सच्चरित्रा के २ नाम। ] ( ११ ) कुमार्या नामद्वयम्। [ कुमारी के २ नाम। ] ( १२ ) अनागतार्तवायास्त्रीणि नामानि। [ जो अभी रजस्वला न हुई हो, उस कन्या के ३ नाम। ] ( १३ ) दृष्टरजस्काया नामद्वयम्। [ प्रथम-रजोदर्शन वाली के २ नाम। ] ( १४ ) युवत्या नामद्वयम्। [ युवती के २ नाम। ] ( १५ ) पुत्रबध्वास्त्रीणि नामानि। पुत्रवधू के ३ नाम। ] ( १६ ) सुवासिन्या नामद्वयम्। [ पिता के घर में स्थित युवती स्त्री के २ नाम। ] ( १७ ) वस्त्राभूषणादीच्छावत्याः ( इच्छावती स्त्री के २ नाम। ] ( १८ ) मैथुनेच्छावत्या नामद्वयम्। [ मैथुन की इच्छावाली स्त्री के २ नाम। ]

[1]कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका ।
[2]पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांसुला च स्या[3]दशिश्वी शिशुना विना ।
[4]अवीरा निष्पतिसुता, [5]विश्वस्ताविधवे समे ॥ ११ ॥
[6]आलिः सखी वयस्याऽथ [7]पतिवत्नी स भर्तृका ।
[8]वृद्धा पलिक्नी, [9]प्राज्ञी तु प्रज्ञा, [10]प्राज्ञा तु धीमती ॥ १२ ॥
[11]शूद्री शूद्रस्य भार्या स्याच्छूद्रा[12] तज्जातिरेव च ।
[13]आभारी तु महाशूद्री जातीपुंयोगयोः समा ॥ १३ ॥
[14]अर्याणी स्वयमर्या स्यात् [15]क्षत्रिया क्षत्रियाण्यपि ।
[16]उपाध्यायाप्युपाध्यायी [17]स्यादाचार्यापि च स्वतः ॥ १४ ॥
[18]आचार्यानी तु पुंयोगे [19]स्यादर्यी [20]क्षत्रियी तथा ।
[21]उपाध्यायान्युपाध्यायी, [22]पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

---

( १ ) अभिसारिकाया एकं नाम । ( २ ) कुलटाया अष्टौ नामानि । [ कुलटा, ( हरजाई ) स्त्री के ४ नाम । ] ( ३ ) अपत्यरहिताया एकं नाम । [ सन्तानरहित स्त्री का नाम 'बाँझ' । ] ( ४ ) पतिपुत्ररहिताया एकम् । [ अभागिन । ] ( ५ ) विधवाया नामद्वयम् । [ विधवा के २ नाम । ] ( ६ ) सख्यास्त्रीणि नामानि । [ सखी के ३ नाम । ] ( ७ ) सभर्तृकाया नामद्वयम् । [ जीवित पतिवाली स्त्री के २ नाम । ] ( ८ ) वृद्धाया नामद्वयम् । [ पके केशों वाली स्त्री के २ नाम । ] ( ९ ) प्रज्ञायुक्तायाः स्त्रियो द्वे नामनी । [ पण्डित स्त्री के २ नाम । ] (१०) धीमत्या नामद्वयम् । [ बुद्धिमती स्त्री के २ नाम । ( ११ ) विजातीयायाः शूद्रस्य पत्न्या एकम् । [ दूसरे जाति की किन्तु शूद्र स्त्री । ] ( १२ ) शूद्रजातेः शूद्राः । [ शूद्र की स्त्री । ] ( १३ ) आभीर्या द्वे नामनी । [ अहीरिन के २ नाम ।] ( १४ ) वैश्यजातिकायाः स्त्रियो नामद्वयम् । [ वैश्य स्त्री के २ नाम । ] ( १५ ) क्षत्रियजातीयाया नामद्वयम् । [ क्षत्राणी के २ नाम । ] ( १६ ) उपाध्याय्या नामद्वयम् । [ उपाध्याय की स्त्री के २ नाम । ] ( १७ ) मन्त्रव्याख्यात्र्या एकम् । [ आचार्या । ] ( १८ ) आचार्यस्य स्त्रियो नाम । [ आचार्य की स्त्री । ] ( १९ ) वैश्यपत्न्या अन्यजातीयाया अपि एकं नाम [ अर्यी ।] ( २० ) अन्यजातीया अपि क्षत्रियपत्न्या एकं नाम [क्षत्रिणी ।] ( २१ ) विद्योपदेष्टृस्त्रियो नामद्वयम् । [ उपाध्याय की स्त्री के २ नाम । ] ( २२ ) स्त्रीपुंसलक्षणायाः स्त्रिय एकं नाम 'पोटा' । [ जिस स्त्री में स्त्री, पुरुष दोनों के लक्षण हों उसे 'पोटा' कहते हैं । ]

[1]वीरपत्नी वीरभार्या, [2]वीरमाता तु वीरसूः ।
[3]जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
[4]स्त्री नग्निका कोटवी स्याद् [5]दूती सञ्चारिके समे ।
[6]कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ॥ १७ ॥
[7]सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
[8]असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी ॥ १८ ॥
[9]वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः ।
[10]सत्कृता वारमुख्या स्यात् [11]कुट्टनी शम्भली समे ॥ १९ ॥
[12]विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ [13]रजस्वला ।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि [14]स्याद्रजः पुष्पमार्तवम् ।
[15]श्रद्धालुर्दोहदवती, निष्कला विगतार्तवा ॥ २१ ॥

---

( १ ) वीरस्य भार्याया नामद्वयम् । [ वीर पुरुष की स्त्री के २ नाम । ] ( २ ) वीरस्य मातुर्नामद्वयम् । [ वीर की माता के २ नाम । ] ( ३ ) प्रसूतायाश्चत्वारि नामानि । [ प्रसूता स्त्री के ४ नाम । ] ( ४ ) नग्नाया नामद्वयम् । [ नंगी स्त्री के २ नाम । ] ( ५ ) दूत्या नामद्वयम् । [दूती के २ नाम ।] ( ६ ) कषायवस्त्रधारिण्या अर्थवृद्धाया विधवाया नाम कात्यायनी । ( ७ ) सैरन्ध्र्या नाम । 'कात्यः' सैरन्ध्र्या विवरणमित्थमुपपादयति—

'चतुःषष्टि कलाऽभिज्ञा रूपशीलादिशालिनी ।
प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता' ॥ इति ।

[ सैरन्ध्री, अदासी । ] ( ८ ) अन्तःपुरचारिण्या एकं नाम 'असिक्नी' । [ अन्तःपुर में जाने वाली युवती दूती का नाम 'असिक्नी' है । ] ( ९ ) वेश्यायाश्चत्वारि नामानि । [ वेश्या के ४ नाम । ] ( १० ) आदृताया वेश्या एकं नाम । [ समाज द्वारा सम्मानित वेश्या का नाम 'वारमुख्या' । ] ( ११ ) कुट्टिन्या नामद्वयम् । [ कुट्टिनी के २ नाम । ] ( १२ ) दैवज्ञायास्त्रीणि नामानि । [ ज्योतिषज्ञ स्त्री के ३ नाम । ] ( १३ ) रजस्वलाया अष्टौ नामानि । [ रजस्वला स्त्री के ८ नाम । ] ( १४ ) आर्तवस्य नामत्रयम् । [ रजस् के २ नाम । ] ( १५ ) दोहदवत्या नामद्वयम् । [ गर्भ के कारण कुछ इच्छा वाली स्त्री के २ नाम । ] ( १६ ) विगतार्तवाया नामद्वयम् । [ मासिक धर्म से रहित स्त्री के २ नाम । ]

[१]आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।
[२]गणिकोदस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
[३]पुनर्भूर्दिधिषूरूढा द्विस्तस्या [४]दिधिषुः पतिः ।
[५]स तु द्विजोऽग्रेदिधिषुः सैव यस्य कुटुम्बिनी ॥ २३ ॥
[६]कानीनः कन्यकाजातः [७]सुतोऽथ सुभगासुतः ।
सौभागिनेयः स्यात् [८]पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
[९]पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो, [१०]मातृष्वसुश्चैवं, [११]वैमात्रेयो विमातृजः ॥ २५ ॥
[१२]अथ बान्धकिनेयः स्याद्बन्धुलश्चाऽसतीसुतः ।
कौलटेरः कौलटेयो, [१३]भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ।
[१४]आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥

---

( १ ) गर्भिणीस्त्रियो नामचतुष्टयम् । [ गर्भिणी स्त्री के ४ नाम । ] ( २ ) इमे शब्दा गणे प्रयुज्यन्ते—गणिकानां समूहः **गाणिक्यम्** । गर्भिणीनां समूहः—**गार्भिणम्** । युवतीनां समूहः—**यौवतम्** । ( ३ ) वारद्वयं कृतसंस्काराया नामद्वयम् । **तद्यथा**—'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' । इति । [ जिसका दो बार विवाह संस्कार हुआ हो उस स्त्री के २ नाम । ] ( ४ ) तस्याः पत्युर्नामैकम् । [ पुनर्भू स्त्री के पति का नाम । ] ( ५ ) पुनर्भूप्रधानभार्यस्यैकं नाम । [ जिसके घर में पुनर्भूभार्या प्रधान हो उस पुरुष का नाम । ] ( ६ ) कन्यकापुत्रस्य नामद्वयम् । [ कन्या के पुत्र के २ नाम । ] ( ७ ) सुभगासुतस्य नामद्वयम् । [ सौभाग्यवती के पुत्र के २ नाम । ] ( ८ ) अन्यस्य भार्यायामुत्पादितस्य पुत्रस्यैकम् । [ परायी स्त्री में पैदा किये पुत्र का नाम जारज । ] ( ९ ) पितृष्वसुः पुत्रस्य नामद्वयम् । [ पिता की बहन ( बुआ ) का पुत्र के २ नाम । ] ( १० ) मातृस्वसुः पुत्रस्य । [ मौसी का बेटा । ] ( ११ ) विमातृजस्य नामद्वयम् । [ सौतेली माँ के पुत्र के २ नाम । ] ( १२ ) कुलटापुत्रस्य पञ्च नामानि । [ कुलटा के पुत्र के ५ नाम । ] ( १३ ) भिक्षुकीपुत्रस्य नामद्वयम् । [ भिखारिन के पुत्र के २ नाम । ] ( १४ ) पुत्रस्य पञ्च नामानि । [ पुत्र के ५ नाम । ]

[1]आहुर्दुहितरं सर्वे[2]ऽपत्यं तोकं तयोः समे ।
[3]स्वजाते त्वौरसोरस्यौ, [4]तातस्तु जनकः पिता ॥ २८ ॥
[5]जनयित्री प्रसूर्माता जननी [6]भगिनी, स्वसा ।
[7]ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
[9]भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
[10]प्रजावती भ्रातृजाया, [11]मातुलानी तु मातुली ॥ ३० ॥
[12]पतिपत्न्योःप्रसूः श्वश्रूः, श्वशुरस्तु पिता तयोः ।
[13]पितुर्भ्राता पितृव्यः स्यान्-[14]मातुर्भ्राता तु मातुलः ॥ ३१ ॥
[15]श्यालाः स्युर्भ्रातरः पत्न्याः, [16]स्वामिनो देवृदेवरौ ।
[17]स्वस्रीयो भागिनेयः,[18]स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥
[19]पितामहः पितृपिता, [20]तत्पिता प्रपितामहः ।

---

( १ ) एते सर्वे पुत्रवाचकाः शब्दाः स्त्रियां प्रयुक्ताः कन्यका वाचका भवन्ति । यथा—आत्मजा, तनया प्रभृतयः । [ पुत्र वाचक शब्दों के स्त्रीलिंग रूप कन्या वाचक होते हैं । जैसे—आत्मजा, तनया, पुत्री, सुता । ] ( २ ) तयोस्तनयदुहित्रोः समानलिङ्गे, तोकम्, अपत्यमिति नाम 'अपत्यं, तोकम्' । [ बालक-बालिका के २ नाम । ] ( ३ ) औरसपुत्रस्य नामद्वयम् । [ सगा पुत्र के २ नाम । ] ( ४ ) पितुर्नामत्रयम् । [ पिता के ३ नाम । ] ( ५ ) मातुश्चत्वारि नामानि । [ माता के ४ नाम । ] ( ६ ) भगिन्या नामद्वयम् । [ बहन के २ नाम । ] ( ७ ) पत्युः स्वसुर्नामैकम् । [ ननद । ] ( ८ ) सुतकन्ययोरपत्यस्य नामत्रयम् । [ नतिनी के ३ नाम । ] ( ९ ) भ्रातृवर्गस्य भार्याः परस्परं यातरो भवन्ति । [ देवरानी जेठानी । ] ( १० ) भ्रातुः पत्न्या नामद्वयम् । [ भौजाई-भाभी । ] ( ११ ) मातुलस्य पत्न्या नामद्वयम् । [ मामी के २ नाम । ] ( १२ ) पत्युर्माता, पत्न्याश्च माता श्वश्रूः एवं तयोः ( पत्युः, मातुः च ) पिता श्वशुरः । [ पति-पत्नी की माता 'सास' और पति-पत्नी के पिता 'श्वशुर' कहे जाते है । ] ( १३ ) पितुर्भ्राता पितृव्यो भवति । [ चाचा । ] ( १४ ) मातुर्भ्राता मातुलः । [ मामा । ] ( १५ ) पत्न्या भ्रातरः 'श्यालाः' कथ्यन्ते । [ साला । ] ( १६ ) पत्युर्भ्रातुर्नामद्वयम् । [ देवर के २ नाम । ] ( १७ ) भगिनीसुतस्य नामद्वयम् । [ भानजा के २ नाम । ] ( १८ ) दुहितुः पत्युर्नाम । [जामाता, जवाँई, दामाद ।] ( १९ ) पितुः पिता पितामहः । [दादा ।] ( २० ) तत् पिता प्रपितामहः । [ परदादा । ]

[1]मातुर्मातामहाद्येवं, [2]सपिण्डास्तु सनाभयः ॥ ३३ ॥
[3]समानोदर्य-सोदर्य-सगर्भ्य-सहजाः समाः ।
[4]सगोत्र-बान्धव-ज्ञाति-बन्धु-स्व-स्वजनाः समाः ॥ ३४ ॥
[5]ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।
[6]धवः प्रियः पतिर्भर्ता, [7]जारस्तूपपतिः समौ ॥ ३५ ॥
[8]अमृते जारजः कुण्डो, [9]मृते भर्तरि गोलकः ।
[10]भ्रात्रीयो भ्रातृजो, [11]भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥
[12]मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
[13]श्वश्रूश्वशुरौ श्वशुरौ, [14]पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
[15]दम्पती जम्पती जायापती भार्यापती च तौ ।
[16]गर्भाशयो जरायुः स्यादुल्बं च [17]कललोऽस्त्रियाम् ॥ ३८ ॥
[18]सूतिमासो वैजननो, [19]गर्भो भ्रूण इमौ समौ ।

---

( १ ) एवं पितामह प्रपितामहवत्, मातुः पिता मातामहः । [ नाना । ] मातामहस्य पिता प्रमातामहः । [ परनाना । ] ( २ ) सपिण्डानामेकम् । [ विरादर । ] ( ३ ) सहोदराणां षड् नामानि । [ सहोदर भाइयों के ६ नाम । ] ( ४ ) सगोत्राणां षड् नामानि । [ गोतिया के ६ नाम । ] ( ५ ) बन्धुसमूहस्यैकं नाम । [ बन्धुता । ] ( ६ ) पत्युश्चत्वारि नामानि । [ पति के ४ नाम । ] ( ७ ) उपपत्युर्नामद्वयम् । [ जार, यार के २ नाम । ] ( ८ ) भर्तरि जीवति जारजपुत्रस्यैकं नाम । [ जारज पुत्र 'कुण्ड' ] । ( ९ ) भर्तरि मृते जातस्य जारजपुत्रस्यैकं नाम । [जारज पुत्र 'गोलक' । ] ( १० ) भ्रातृजस्य नामद्वयम् । [ भतीजा के २ नाम । ] ( ११ ) भ्रातृभगिन्योर्नामद्वयम् । [ भाई-बहिन के २ नाम । ] ( १२ ) मातापित्रोर्नामचतुष्टयम् । [ माता पिता के ४ नाम । ] ( १३ ) श्वश्रूश्वशुरयोर्नामद्वयम् । [सास-ससुर के २ नाम । ] ( १४ ) पुत्रकन्ययोर्नामद्वयम् । [ पुत्र-कन्या के २ नाम । ] ( १५ ) पतिपत्न्योश्चत्वारि नामानि । [ पति-पत्नी के ४ नाम । ] ( १६ ) गर्भाशयस्य नामद्वयम् । [ गर्भाशय के २ नाम । ] ( १७ ) शुक्रशोणितसम्पातस्य चत्वारि । केचिद् गर्भवेष्टनस्येति । [ कलल के ४ नाम । ] ( १८ ) सूतिमासस्य । [ प्रसव का (१० वाँ) महीना । ] ( १९ ) कुक्षिस्थगर्भस्य नामद्वयम् । [ गर्भ के २ नाम । ]

[1]तृतीया प्रकृतिः शण्ढः क्लीबः षण्डो नपुंसके ॥ ३९ ॥
[2]शिशुत्वं शैशवं बाल्यं, [3]तारुण्यं, यौवनं समे ।
[4]स्यात्स्थाविरं तु वृद्धत्वं, [5]वृद्धसङ्घेऽपि वार्धकम् ॥ ४० ॥
[6]पलितं जरसा शौक्ल्यं केशादौ, [7]विस्रसा जरा ।
[8]स्यादुत्तानशया डिम्भा स्तनपा च स्तनन्धयी ॥ ४१ ॥
[9]बालस्तु स्यान्माणवको, [10]वयस्थस्तरुणो युवा ।
[11]प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥
[12]वर्षीयान्दशमी ज्यायान्, [13]पूर्वजस्त्वग्रियोऽग्रजः ।
[14]जघन्यजे स्युः कनिष्ठ-यवीयोऽवरजानुजाः ॥ ४३ ॥
[15]अमांसो दुर्बलश्छातो [16]बलवान्मांसलोंऽसलः ।
[17]तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥ ४४ ॥
[18]अवटीटोऽवनाटश्चाऽवभ्रटो नतनासिके ।
[19]केशवः केशिकः केशी, [20]बलिनो बलिभः समौ ॥ ४५ ॥

---

( १ ) नपुंसकस्य पञ्च नामानि । [ नपुंसक के ५ नाम । ] ( २ ) बाल्यावस्थायास्त्रीणि नामानि । [ बचपन के ३ नाम । ] ( ३ ) यौवनावस्थाया नामद्वयम् । [ जवानी के २ नाम । ] ( ४ ) वृद्धावस्थाया नामद्वयम् । [ बुढ़ापा के २ नाम । ] ( ५ ) वृद्धसङ्घस्यैकं नाम । [ वृद्धों का समूह । ] ( ६ ) पलितस्यैकं नाम । [ बालों का सफेद होना । ] ( ७ ) जराया नामद्वयम् । [ बुढ़ापा के २ नाम । ] ( ८ ) स्तनपायाश्चत्वारि नामानि । [ दुधमुँही लड़की के चार नाम । ] ( ९ ) बालकस्य द्वे नामनी । [ बालक के २ नाम । ] ( १० ) यूनस्त्रीणि नामानि । [ जवान के ३ नाम । ] ( ११ ) वृद्धस्य षड् नामानि । [ वृद्ध के ६ नाम । ] ( १२ ) अतिवृद्धस्य त्रीणि नामानि । [ अत्यन्त वृद्ध के ३ नाम । ] ( १३ ) अग्रजस्य त्रीणि नामानि । [ बड़े भाई के ३ नाम । ] ( १४ ) कनिष्ठस्य पञ्च नामानि । [ छोटे भाई के ५ नाम । ] ( १५ ) दुर्बलस्य नामत्रयम् । [ कमजोर के २ नाम । ] ( १६ ) बलवतस्त्रीणि नामानि । [ बलवान् के २ नाम । ] ( १७ ) स्थूलस्य पञ्च नामानि । [मोटा के ५ नाम । ] ( १८ ) चिपिटनासावतस्त्रीणि नामानि । [ चिपटी नाक वाले के ३ नाम । ] ( १९ ) घनकेशवतस्त्रीणि । [ घने बालों वाले के ३ नाम । ] ( २० ) श्लथचर्मवतो द्वे नामनी । [ झुर्रियों वाले के २ नाम । ]

[1]विकलाङ्गस्त्वपोगण्डः, [2]खर्वो ह्रस्वश्च वामनः ।
[3]खरणाः स्यात्खरणसो, [4]विग्रस्तु गतनासिकः ॥ ४६ ॥
[5]खुरणाः स्यात्खुरणसः, [6]प्रज्ञुः प्रगतजानुकः ।
[7]ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात् [8]संज्ञुः संहतजानुकः ॥ ४७ ॥
[9]स्यादेडे बधिरः, [10]कुब्जे गडुलः [11]कुकरे कुणिः ।
[12]पृश्निरल्पतनौ, [13]श्रोणः पङ्गौ, [14]मुण्डस्तु मुण्डिते ॥ ४८ ॥
[15]बलिरः केकरे, खोडे [16]खञ्जस्त्रिषु जराऽवराः ।
[17]जडुलः कालकः पिप्लुस्[18]तिलकस्तिलकालकः ॥ ४९ ॥
[19]अनामयं स्यादारोग्यं, [20]चिकित्सा रुक्प्रतिक्रिया ।
[21]भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
[22]स्त्री रुग्रुजा चोपताप-रोग-व्याधि-गदामयाः ।
[23]क्षयः शोषश्च यक्ष्मा च, [24]प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

---

( १ ) न्यूनाधिकाङ्गवतो नामद्वयम् । [ कम ज्यादा अंग वाले के २ नाम । ] ( २ ) वामनस्य नामत्रयम् । [ बौना के ३ नाम । ] ( ३ ) दीर्घनासिकस्य नामद्वयम् । [ लम्बी नाक वाले के २ नाम । ] ( ४ ) विगतनासिकस्य नामद्वयम् । [ नकटा के २ नाम । ] ( ५ ) खुरसदृशनासिकस्य नामद्वयम् । [ चौड़ी नाकवाले के २ नाम । ] ( ६ ) वातादिरोगेण विकृतजानुकस्य नामद्वयम् । [ वात व्याधि से टेढ़ी टांग वाले के २ नाम । ] ( ७ ) ऊर्ध्वजानुकस्य नामद्वयम् । ( ८ ) संयुतजानुकस्य नामद्वयम् । ( ९ ) वधिरस्य नामद्वयम् । [बहरा के २ नाम ।] ( १० ) कुब्जस्य नामद्वयम् । [ कुबड़ा के २ नाम । ] ( ११ ) रोगदूषितहस्तस्य । [ टूंटा के २ नाम । ] ( १२ ) अल्पशरीरवतो द्वे नामनी । [ कृशकाय के २ नाम । ] ( १३ ) पङ्गोर्नामद्वयम् । [ पंगु, लूला के २ नाम ।] ( १४ ) मुण्डितशिरशो द्वेनामनी । [मुण्डित शिरवाला के २ नाम । ] ( १५ ) बलिरनेत्रवतो द्वे नामनी । [ एंचाताना के २ नाम । ] ( १६ ) गतिविकलस्य नामद्वयम् । [ चलने में असमर्थ के २ नाम । ] जराशब्दादारभ्य उत्तानशयाद्याः शब्दास्त्रिलिङ्गा भवन्ति । ( १७ ) देहस्थलक्षणविशेषस्य नामत्रयम् । [ लहसुन के ३ नाम । ] ( १८ ) तिलकस्य नामद्वयम् । [ तिल के २ नाम । ] ( १९ ) नीरुजो नामद्वयम् । [ स्वस्थ के २ नाम । ] ( २० ) चिकित्सायाा नामत्रयम् । [ चिकित्सा के ३ नाम । ] ( २१ ) औषधस्य पञ्च नामानि । [ औषध के ५ नाम । ] ( २२ ) रोगस्य सप्त नामानि । [रोग के ७ नाम ।] ( २३ ) राजयक्ष्मारोगस्य नामत्रयम् । [ क्षय के ३ नाम । ] ( २४ ) पीनसस्य नामद्वयम् । [सर्दी-जुकाम के २ नाम । ]

[1]स्त्री क्षुत्क्षुतं क्षवः पुंसि, [2]कासस्तु क्षवथुः पुमान् ।
[3]शोफस्तु श्वयथुः शोथः, [4]पादस्फोटो विपादिका ।। ५२ ।।
[5]किलाससिध्मे, [6]कच्छ्वां तु पाम पामा विचर्चिका ।
[7]कण्डूः खर्जूश्च कण्डूया, [8]विस्फोटः पिटकस्त्रिषु ।। ५३ ।।
[9]व्रणोऽस्त्रियामीर्ममरुः क्लीबे, [10]नाडीव्रणः पुमान् ।
[11]कोठो मण्डलकं, [12]कुष्ठश्वित्रे, [13]दुर्नामकार्शसी ।। ५४ ।।
[14]आनाहस्तु विबन्धः स्याद् [15]ग्रहणी रुक्प्रवाहिका ।
[16]प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ।। ५५ ।।
[17]व्याधिभेदाः विद्रधिः स्त्री ज्वरमेहभगन्दराः ।
[ [18]श्लीपदं पादवल्मीकं, [19]केशघ्नस्त्विन्द्रलुप्तकः ]
[20]अश्मरी मूत्रकृच्छ्रं स्यात् [21]पूर्वे शुक्रावधेस्त्रिषु ।। ५६ ।।

---

( १ ) छिक्कायास्त्रीणि नामानि । [ छींक के ३ नाम । ] ( २ ) कासस्य नामद्वयम् । [ खांसी के २ नाम । ] ( ३ ) शोथस्य स्त्रीणि नामानि । [ सूजन के ३ नाम । ] ( ४ ) विपादिकाया नामद्वयम् । [ विवाई के २ नाम । ] ( ५ ) किलासरोगस्य नामद्वयम् । [ सेहुंआ रोग के २ नाम । ] ( ६ ) पामारोगस्य चत्वारि नामानि । [ पामा, काँछ (एक्जिमा) के ४ नाम । ] ( ७ ) कण्डूरोगस्य नामत्रयम् । [ खुजली के ३ नाम । [ ( ८ ) विस्फोटस्य नामद्वयम् । [ फोड़ा-फुन्सी के २ नाम । ] ( ९ ) व्रणस्य नामत्रयम् । [ घाव के ३ नाम । ] ( १० ) नाडीव्रणस्यैकम् । [ नासूर । ] ( ११ ) मण्डलककुष्ठस्य नामद्वयम् । [ मण्डल नामक कोढ़ के २ नाम । ] ( १२ ) श्वेतकुष्ठस्य नामद्वयम् [ सफेद कोढ़ के २ नाम । ] ( १३ ) अर्शसो नामद्वयम् । [ बवासीर के २ नाम । ] ( १४ ) आनाहस्य द्वे नामनी । [ पेट फूलना के २ नाम । ] ( १५ ) ग्रहणीरोगभेदस्यैकं नाम । [ प्रवाहिका ग्रहणी भेद । ] ( १६ ) वमेस्त्रीणि नामानि । [ वमन, उल्टी के ३ नाम । ] ( १७ ) व्याधिभेदानामेकैकम् । [ विद्रधि = बड़ा फोड़ा, ज्वर, प्रमेह, भगन्दर । ] ( १८ ) श्लीपदस्य नामद्वयम् । [ श्लीपद, हाथीपाँव के २ नाम । ] ( १९ ) इन्द्रलुप्तस्य नामद्वयम् । [ गञ्जापन के २ नाम । ] ( २० ) अश्मर्या नामैकं, मूत्रकृच्छ्रस्यैकम् । [ अश्मरी = पथरी और मूत्रकृच्छ्र । ] ( २१ ) इतः परं शुक्रपर्यन्तं शब्दास्त्रिषु प्रयुज्यन्ते ।

[१] रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके ।
[२] वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥
[३] ग्लानग्लास्नू, [४] आमयावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तः, समौ [५] पामनकच्छुरौ ॥ ५८ ॥
[६] दद्रुणो दद्रुरोगी [७] स्यादर्शोरोगयुतोऽर्शसः ।
[८] वातकी वातरोगी स्यात् [९] सातिसारोऽतिसारकी ॥ ५९ ॥
[१०] स्युःक्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षिण चाप्यमी ।
[११] उन्मत्त उन्मादवति, [१२] श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥
[१३] न्युब्जो भुग्ने रुजा, [१४] वृद्धनाभौ तुन्दिल-तुन्दिभौ ।
[१५] किलासी सिध्मलो[१६] ऽन्धोऽदृङ् [१७] मूर्च्छाले मूर्तमूर्च्छितौ ॥ ६१ ॥
[१८] शुक्रं तेजो रेतसी च बीजवीर्येन्द्रियाणि च ।
[१९] मायुःपित्तं, [२०] कफःश्लेष्मा, स्त्रियान्तु [२१] त्वगसृग्धरा ॥ ६२ ॥

---

( १ ) वैद्यस्य नामपञ्चकम् । [ वैद्य, चिकित्सक के ५ नाम । ] ( २ ) निरामयस्य नामचतुष्टयम् । [ रोगमुक्त के ४ नाम । ] ( ३ ) ग्लानस्य द्वे नामनी । [ उदास के २ नाम । ] ( ४ ) व्याधितस्य सप्त नामानि । [ रोगी के ७ नाम । ] ( ५ ) पादगतकच्छुरोगयुक्तस्य नामद्वयम् । [ पाँव में एक्जिमा रोग वाले का १ नाम । ] ( ६ ) दद्रुरोगिणो नामद्वयम् । ( ७ ) अर्शोरोगवतो नामद्वयम् । [ बवासीर रोगी के २ नाम । ] ( ८ ) रोगिणो नामद्वयम् । [ वात-रोगी के २ नाम । ] ( ९ ) अतिसारिणो द्वे नामनी । [ अतिसार रोगी के २ नाम । ] ( १० ) क्लिन्ननेत्रस्य । क्लिन्ननेत्रवतोश्च नामत्रयम् । [ चिपचिपी आँख के तथा ऐसी आँख वाले के ३ नाम । ] ( ११ ) उन्मादवतो नामद्वयम् । [ पागल के २ नाम । ] ( १२ ) कफरोगवतस्त्रीणि । [ कफ रोगी के २ नाम । ] ( १३ ) रुजाभुग्नस्य त्रीणि नामानि । [ रोग के कारण जिसकी पीठ झुक गयी हो उसके ३ नाम । ] ( १४ ) तुन्दिलस्य नामत्रयम् । [ बढ़ी नाभि अथवा तोंद वाले पुरुष के ३ नाम । ] ( १५ ) सिध्मरोगवतो द्वे नामनी । [ सेहुँआ रोग वाले के २ नाम । ] ( १६ ) दृष्टिहीनस्य नामद्वयम् । [ अन्धा के २ नाम । ] ( १७ ) मूर्च्छितस्य नामद्वयम् । [ मूर्च्छित के ३ नाम । ] ( १८ ) वीर्यस्य षड् नामानि । [ वीर्य, शुक्र के ६ नाम । ] ( १९ ) पित्तस्य नामद्वयम् । [ पित्त के २ नाम । ] ( २० ) कफस्य नामद्वयम् । [ कफ के २ नाम । ] ( २१ ) चर्मणो नामद्वयम् । [ चर्म के २ नाम । ]

[1]पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।
[2]उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥
[3]रुधिराऽसृग्लोहिताऽस्त्ररक्तक्षतजशोणितम् ।
[4]बुक्काऽग्रमांसं, [5]हृदयं हृद् [6]मेदस्तु वपा वसा ॥ ६४ ॥
[7]पश्चाद् ग्रीवाशिरा मन्या, [8]नाडी तु धमनिः शिरा ।
[9]तिलकं क्लोम, [10]मस्तिष्कं गोर्द, [11]किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥
[12]अन्त्रं पुरीतत्, [13]गुल्मस्तु प्लीहा पुंस्यथ [14]वस्नसा ।
स्नायुः स्त्रियां, [15]कालखण्डयकृती तु समे इमे ॥ ६६ ॥
[16]सृणिका स्यन्दिनी लाला, [17]दूषिका नेत्रयोर्मलम् ।
[ [18]नासामलं तु सिङ्घाणं, [19]पिञ्जूषः कर्णयोर्मलम् । ]
[20]मूत्रं प्रस्राव, [21]उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूढवर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ ।
[22]स्यात्कर्परः कपालोऽस्त्री, [23]कीकसं कुल्यमस्थि च ॥ ६८ ॥

---

( १ ) मांसस्य नामषट्कम् । [ मांस के ६ नाम । ] ( २ ) शुष्कमांसस्य नामत्रयम् । [ सूखे मांस के ३ नाम । ] ( ३ ) रक्तस्य सप्त नामानि । [ रक्त के ७ नाम । ] ( ४ ) हृदयान्तर्गतमांसविशेषस्य नामद्वयम् । ( ५ ) हृदयस्य नामद्वयम् । ( हृदय के २ नाम । ] ( ६ ) वसायास्त्रीणि नामानि । [ वसा, चर्बी के ३ नाम । ] ( ७ ) ग्रीवायाः पश्चाद्भागस्थिता शिरा मन्या कथ्यते । [ मन्या शिरा । ] ( ८ ) नाड्यास्त्रीणि नामानि । [ नाड़ी के ३ नाम । ] ( ९ ) क्लोमस्य नामद्वयम् । [ क्लोम के २ नाम । ] ( १० ) मस्तिष्कस्य नामद्वयम् । [ मस्तिष्क के २ नाम । ] ( ११ ) मलस्य नामद्वयम् । [ मल-पुरीष के २ नाम । ] ( १२ ) अन्त्रस्य नामद्वयम् । [ आँत के २ नाम । ] ( १३ ) गुल्मस्य नामद्वयम् । [ तिल्ली के २ नाम । ] ( १४ ) स्नायोर्नामद्वयम् । ( १५ ) यकृतोनामद्वयम् । [ यकृत से २ नाम । ] ( १६ ) लालायास्त्रीणि । [ लार के ३ नाम । ] ( १७ ) नेत्रमलस्यैकं नाम । [आंख की मैल, गीड़ गिधाड़ा ।] ( १८ ) नासामलस्य नामद्वयम् । [ नाक की मैल, सिंघाण, ( सिङाण ) के २ नाम । ] ( १९ ) कर्णमलस्य द्वे नामनी । [कर्णगूथ, कनगू ।] ( २० ) मूत्रस्य द्वे नामनी । [ मूत्र, पेशाब के २ नाम । ] ( २१ ) विष्ठाया नव नामानि । [ मल, गू, के ९ नाम । ] ( २२ ) कपालस्य द्वे नामनी । [ खोपड़ी के २ नाम । ] ( २३ ) अस्थ्नस्त्रीणि नामानि । [ हड्डी के ३ नाम । ]

[1]स्याच्छरीरास्थ्नि कङ्कालः, [2]पृष्ठास्थ्नि तु कशेरुका ।
[3]शिरोऽस्थनि करोटिःस्त्री, [4]पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥
[5]अङ्गं प्रतीकोऽवयवोऽपघनोऽथ [6]कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
[7]पादाग्रं प्रपदं, [8]पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥
[9]तद् ग्रन्थी घुटिके गुल्फौ, [10]पुमान्पार्ष्णिस्तयोरधः ।
[11]जङ्घा तु प्रसृता [12]जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥
[13]सक्थि क्लीबे [14]पुमानूरुस्तत्सन्धिः पुंसि वङ्क्षणः ।
[15]गुदं त्वपानं पायुर्ना, [16]बस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
[17]कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।
[18]पश्चान्नितम्बः स्त्रीकट्याः, [19]क्लीबे तु जघनं पुरः ॥ ७४ ॥
[20]कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।

---

( १ ) कङ्कालस्यैकं नाम । [ अस्थिकंकाल । ] ( २ ) पृष्ठास्थ्न एकं नाम । [ पीठ की हड्डी कशेरुका । ] ( ३ ) शिरोऽस्थ्नो नामद्वयम् । [ शिर की हड्डी के २ नाम । ] ( ४ ) पार्श्वाऽस्थ्नो नामद्वयम् । [ पसली की हड्डी के २ नाम । ] ( ५ ) शरीरावयवस्य चत्वारि नामानि । [ शरीर अवयव के ४ नाम । ] ( ६ ) शरीरस्यैकादश नामानि । [ शरीर के ११ नाम । ] ( ७ ) पादाग्रस्य नामद्वयम् [ पैर के पंजा के ३ नाम । ] ( ८ ) चरणस्य चत्वारि नामानि । [ पैर के ४ नाम । ] ( ९ ) चरणग्रन्थ्योर्नामद्वयम् । [ घुटना के २ नाम । ] ( १० ) पार्ष्णिभागस्यैकम् । [ एड़ी । ] ( ११ ) जङ्घायाः नामद्वयम् । [ जांघ के २ नाम । ] ( १२ ) जानूरुसन्धेस्त्रीणि नामानि । [ जानु तथा ऊरु सन्धि के २ नाम । ] ( १३ ) जानूपरिभागस्य नामद्वयम् । [ जानु के ऊपरी भाग के २ नाम । ] ( १४ ) ऊरुसन्धेरेकम् । [ ऊरुसन्धि । ] ( १५ ) गुदस्य नामत्रयम् । [ गुद के ३ नाम । ] ( १६ ) नाभ्यधोभागस्यैकं नाम । [ बस्ति । ] ( १७ ) कटिभागस्य त्रीणि । [ कमर के ३ नाम । ] ( १८ ) स्त्रीकट्याः पश्चाद्भागस्यैकं नाम 'नितम्बः' । [ नितम्ब, चूतड़ । ] ( १९ ) स्त्रीकट्याः पुरोभागस्यैकं नाम 'जघनम्' । [ जघन । ] ( २० ) पृष्ठवंशादधोगर्तयोरेकं नाम । [ पीठ का निचला भाग । ]



[1]स्त्रियां स्फिचौ कटिप्रोथावु[2]पस्थो वक्ष्यमाणयोः ॥ ७५ ॥
[3]भगं योनिर्द्वयोः, [4]शिश्नो मेढ्रो मेहनशेफसी ।
[5]मुष्कोऽण्डकोशो वृषणः, [6]पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
[7]पिचण्डकुक्षी जठरोदरं तुन्दं, [8]स्तनौ कुचौ ।
[9]चूचुकन्तु कुचाग्रं स्यान्न ना [10]क्रोडं भुजान्तरम् ॥ ७७ ॥
[11]उरो वत्सं च वक्षश्च, [12]पृष्ठन्तु चरमं तनोः ।
[13]स्कन्धो भुजशिरोंऽसोऽस्त्री, [14]सन्धी तस्यैव जत्रुणी ॥ ७८ ॥
[15]बाहुमूले उभौ कक्षौ, [16]पार्श्वमस्त्री, तयोरधः ।
[17]मध्यमञ्चावलग्नञ्च मध्योऽस्त्री, द्वौ परौ द्वयोः ॥ ७९ ॥
[18]भुजबाहू प्रवेष्टो दोः, [19]स्यात्कफोणिस्तु कूर्परः ।
[20]अस्योपरि प्रगण्डः स्यात् [21]प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥
[22]मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।

---

( १ ) कटिस्थमांसपिण्डयोर्द्वे नामनी । [ फींच । ] ( २ ) स्त्रीपुंसयोश्चिह्नविशेषयोर्नामैकम् । ['उपस्थ' ।] ( ३ ) स्त्रीयोनेर्नामद्वयम् । [ भग के २ नाम । ] ( ४ ) पुरुषलिङ्गस्य नामचतुष्टयम् । [ पुरुषलिंग के ४ नाम । ] ( ५ ) अण्डकोशस्य त्रीणि नामानि । [ अण्डकोश के ३ नाम । ] ( ६ ) पृष्ठवंशस्याधोभागस्यैकम् । [ त्रिक । ] ( ७ ) उदरस्य पञ्च नामानि । [ पेट के ५ नाम । ] ( ८ ) स्तनयोर्नामद्वयम् । [ स्तनों के २ नाम । ] ( ९ ) स्तनाग्रभागस्य नामद्वयम् । [ चूचुक के २ नाम । ] ( १० ) क्रोडस्य द्वे नामनी । [ गोद के २ नाम । ] ( ११ ) उरसो नामद्वयम् । [छाती के ३ नाम । ] ( १२ ) पृष्ठस्यैकम् । [पीठ] ( १३ ) स्कन्धस्य नामत्रयम् । [ कन्धा के ३ नाम । ] ( १४ ) स्कन्धस्य सन्धिर्जत्रु कथ्यते । [जत्रु, हँसुली । ] ( १५ ) कक्षस्य नामद्वयम् । [ बगल, काँख के २ नाम । ] ( १६ ) कक्षयोरधः प्रदेशस्यैकम् । [ पसली । ] ( १७ ) शरीरमध्यभागस्य त्रीणि नामानि । शरीर के मध्यभाग के ३ नाम । ( १८ ) भुजस्य चत्वारि नामानि । [ बाँह के ४ नाम । ] ( १९ ) कूर्परस्य नामद्वयम् । [ कुहनी के २ नाम । ] ( २० ) कूर्परोपरिभागस्यैकम् । [ कुहनी का ऊपरी भाग । ] ( २१ ) कफोणेरधो मणिबन्धपर्यन्तभागस्यैकम् । [ कफोणि से लेकर मणिबन्ध तक का भाग । ] ( २२ ) मणिबन्धादारभ्यकनिष्ठिकापर्यन्तहस्तबहिर्भागस्य । [ मणिबन्ध से लेकर कनिष्ठिका अंगुली पर्यन्त हाथ का बाहरी भाग । ]

[1]पञ्चशाखः शयः पाणि[2]स्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥
[3]अङ्गुल्यः करशाखाः स्युः, [4]पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥
[5]पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
[6]प्रादेश-ताल-गोकर्णा-स्तर्जन्यादियुते तते ॥ ८३ ॥
[7]अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।
[8]पाणौ चपेट-प्रतल-प्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
[9]द्वौ संहतौ संहतल-प्रतलौ वामदक्षिणौ ।
[10]पाणिर्निकुब्जः प्रसृतिस्तौ [11]युतावञ्जलिःपुमान् ॥ ८५ ॥
[12]प्रकोष्ठे विस्तृतकरे हस्तो, [13]मुष्ट्या तु बद्धया ।
स रत्निः स्याद[14]रत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥
[15]व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
[16]ऊर्ध्वविस्तृतदोःपाणिर्नृमाने पौरुषं त्रिषु ॥ ८७ ॥

---

( १ ) हस्तस्य नामत्रयम् । [ हाथ के ३ नाम । ] ( २ ) तर्जन्या नामद्वयम् । [ तर्जनी अंगुली के २ नाम । ] ( ३ ) अङ्गुलेर्नामद्वयम् । [ अंगुली के २ नाम । ] ( ४ ) अङ्गुष्ठ, मध्यमा, अनामिका, कनिष्ठिकानामेकैकं नाम । [ अंगुष्ठ, मध्यमा, अनामिका, कनिष्ठिका । ] ( ५ ) नखस्य चत्वारि नामानि । [ नख के ४ नाम । ] ( ६ ) अङ्गुष्ठतर्जनीततो विस्तृतोदेश. । [ प्रादेशः । ] अङ्गुष्ठमध्यमा परिचितः । [ तालः । ] अङ्गुष्ठानामिकासमः । [ गोकर्णः । ] ( ७ ) सकनिष्ठेऽङ्गुले द्वादशाङ्गुलपरिमितो वितस्तिः । [ बित्ता, बिलस्त । ] ( ८ ) विस्तृताङ्गुलियुक्तस्य करस्य नामत्रयम् । सिंहतलोऽपि पाठभेदः । [ थप्पड़ के ३ नाम । ] ( ९ ) विस्तृताङ्गुलिसहितस्य करयुगलस्य नामद्वयम् । [ फैलायी हुई अंगुलियों सहित दोनों हाथों की लम्बाई के २ नाम । ] ( १० ) प्रसृतेरेकं नाम । [ पौस । ] ( ११ ) अञ्जलेर्नाम । [ अञ्जलि । ] ( १२ ) विस्तृतकरे प्रकोष्ठे करः । [ एक हाथ, २४ अंगुल लम्बा । ] ( १३ ) बद्धमुष्टेर्हस्तस्यैकम् । [ मुट्ठी । ] ( १४ ) अरत्निहस्तस्यैकं नाम । [ कनिष्ठिका अंगुली से रहित मुष्टि से युक्त हाथ का नाम । ] ( १५ ) दक्षिणपार्श्वे प्रसारितभुजस्य तथा वामपार्श्वे प्रसारितभुजस्य च नामैकम् । [ व्यामः । ] ( १६ ) पुरुषप्रमाणस्यैकं नाम । [ एक पुरसा । ]

[1]कण्ठो गलोऽथ [2]ग्रीवायां शिरोधिः कन्धरेत्यपि ।
[3]कम्बुग्रीवा त्रिरेखा साऽ[4]वटुर्घाटा कृकाटिका ॥ ८८ ॥
[5]वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
[6]क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥
[7]ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
[8]अधस्ताच्चिबुकं, [9]गण्डौ कपोलौ, [10]तत्परा हनुः ॥ ९० ॥
[11]रदना दशना दन्ता रदा-[12]स्तालु तु काकुदम् ।
[13]रसज्ञा रसना जिह्वा, [14]प्रान्तावोष्ठस्य सृक्कणी ॥ ९१ ॥
[15]ललाटमलिकं गोधि[16]रूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।
[17]कूर्चमस्त्री भ्रुवोर्मध्यं, [18]तारकाऽक्ष्णः कनीनिका ॥ ९२ ॥
[19]लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी, [20]चास्रु नेत्राम्बु रोदनञ्चास्रमश्रु च ॥ ९३ ॥
[21]अपाङ्गौ नेत्रयोरन्तौ, [22]कटाक्षोऽपाङ्गदर्शने ।

---

( १ ) कण्ठस्य नामद्वयम् । [गला के २ नाम ।] ( २ ) ग्रीवाया नामत्रयम् । [ गर्दन के ३ नाम । ] ( ३ ) शङ्खाऽऽकृति ग्रीवाया एकम् । [ शंख के आकार का गला । ] ( ४ ) कृकाटिकाया नामत्रयम् । [घंटी के ३ नाम ।] ( ५ ) मुखस्य सप्त नामानि । [ मुख के ७ नाम । ] ( ६ ) नासायाः पञ्च नामानि । [ नाक के ५ नाम । ] ( ७ ) ओष्ठस्य चत्वारि नामानि । [ होंठ के ४ नाम । ] ( ८ ) चिबुकस्यैकं नाम । [ ठोडा । ] ( ९ ) कपोलस्य नामद्वयम् ' [गाल के २ नाम ।] ( १० ) कपोलस्यापरभागस्य । [ जवड़ा । ] ( ११ ) दशनस्य नामचतुष्टयम् । [ दाँत के ४ नाम । ] ( १२ ) तालुनो द्वे नामनी । [ तालु के २ नाम । ] ( १३ ) रसनायास्त्रीणि नामानि । [ जीभ के ३ नाम । ] ( १४ ) ओष्ठयोः प्रान्तभागस्यैकं नाम । [ ओठों का कोना । ]। ( १५ ) ललाटस्य नामत्रयम् । [ माथा के ३ नाम । ( १६ ) भ्रुवोरेकं नाम । [ भौह । ] ( १७ ) भ्रुवोर्मध्यस्थ-भागस्यैकं नाम । [ कूर्च । ] ( १८ ) कनीनिकाया नामद्वयम् । [ आँख का तारा के २ नाम । ] ( १९ ) नेत्रस्य अष्टौ नामानि । [ आँख के ८ नाम । ] ( २० ) अस्रुणः पञ्च नामानि । [ आँसू के ५ नाम । ] ( २१ ) नेत्रप्रान्तभागस्यैकं नाम । [ आँख का कोना । ] ( २२ ) कटाक्षस्य नामद्वयम् । [ कटाक्ष के २ नाम । ]

[1]कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥
[2]उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
[3]चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः ॥ ९५ ॥
[4]तद् वृन्दे कैशिकं [5]कैश्यमलकाश्चूर्णकुन्तलाः ।
[6]ते ललाटे भ्रमरकाः, [7]काकपक्षः शिखण्डकः ॥ ९६ ॥
[8]कबरी केशवेशोऽथ [9]धम्मिल्लाः संयताः कचाः ।
[10]शिखा चूडा केशपाशी, [11]व्रतिनस्तु जटा सटा ॥ ९७ ॥
[12]वेणिः प्रवेणी, [13]शीर्षण्यशिरस्यौ विशदे कचे ।
[14]पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
[15]तनूरुहं रोम लोम, [16]तद् वृद्धौ श्मश्रु पुम्मुखे ।
[17]आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते [18]त्रिष्वलङ्कर्ताऽलङ्करिष्णुश्च, [19]मण्डितः ।
प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥
विभ्राड् भ्राजिष्णुरोचिष्णू, [20]भूषा तु स्यादलङ्क्रिया ।

---

( १ ) कर्णस्य षड् नामानि । [ कान के ६ नाम । ] ( २ ) शिरसः पञ्च नामानि । [ शिर के ५ नाम । ] ( ३ ) केशस्य षड् नामानि । [ बालों के ६ नाम । ] ( ४ ) केशवृन्दस्य नामद्वयम् । [ केश-समूह के २ नाम । ] ( ५ ) अलकानां द्वे नामनी । [ घुंघुराले बालों के २ नाम । ] ( ६ ) ललाटगतकेश-समूहस्यैकम् । [ काँकुर । ] ( ७ ) काकपक्षस्य नामद्वयम् । [ काकपक्ष, जुल्फों के २ नाम । ] ( ८ ) केशवेशस्य नामद्वयम् । [ मांग । ] ( ९ ) धम्मिलस्यैकम् । [ जूड़ा । ] ( १० ) शिखायास्त्रीणि नामानि । [ चोटी, चुटिया, शिखा के ३ नाम । ] ( ११ ) तपस्विनां जटाया नामद्वयम् । [ जटा । ] ( १२ ) वेण्या नामद्वयम् । [ चोटी के २ नाम । ] ( १३ ) विशदकेशानां नामद्वयम् । [ धुले हुए केशों के २ नाम । ] ( १४ ) केशपाशस्य । [ बालों की लट । ] ( १५ ) रोम्णस्त्रीणि नामानि । [ रोम, रोआँ के ३ नाम । ] ( १६ ) पुरुषमुख-केशस्य । [ दाढ़ी-मोंछ । ] ( १७ ) नेपथ्यरचनायास्त्रीणि । रोचिष्णुपर्यन्ता एते दश शब्दा त्रिषु लिङ्गेषु प्रयुज्यन्ते । [ वेषबनाना, सजना, सिंगारकरना के ३ नाम । ] ( १८ ) अलङ्करणशीलस्य नामद्वयम् । [ शौकीन के २ नाम । ] ( १९ ) भूषितस्य पञ्च नामानि । [ आभूषणों से भूषित के ५ नाम । ] ( २० ) शोभायुक्तस्य त्रीणि नामानि । [ सुशोभित के ३ नाम । ]

[1]अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥
मण्डनं चाऽथ [2]मुकुटं किरीटं पुन्नपुंसकम् ।
[3]चूडामणिः शिरोरत्नं, [4]तरलो हारमध्यगः ॥ १०२ ॥
[5]बालपाश्या पारितथ्या, [6]पत्त्रपाश्या ललाटिका ।
[7]कर्णिका तालपत्त्रं स्यात्कुण्डलं[8] कर्णवेष्टनम् ॥ १०३ ॥
[9]ग्रैवेयकं कण्ठभूषा, [10]लम्बनं स्याल्ललन्तिका ।
[11]स्वर्णैः प्रालम्बिकाऽथोरःसूत्रिका[12] मौक्तिकैः कृता ॥ १०४ ॥
[13]हारो मुक्तावली,[14]देवच्छन्दोऽसौ शतयष्टिकः ।
[15]हारभेदा यष्टिभेदाद् गुत्सगुत्सार्धगोस्तनाः ॥ १०५ ॥
[16]अर्धहारो माणवक, एकावल्येकयष्टिका ।
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
[17]आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।
[18]केयूरमङ्गदं तुल्ये, [19]अङ्गुलीयकमूर्मिका ॥ १०७ ॥

---

( १ ) अलङ्कारस्य पञ्च नामानि । [आभूषण के ५ नाम । ] ( २ ) मुकुटस्य नामद्वयम् । [ मुकुट के २ नाम । ] ( ३ ) चूडामणेर्नामद्वयम् । [ चूड़ामणि के २ नाम । ] ( ४ ) हारमध्यवर्तिमणेर्नाम [ तरल । ] ( ५ ) बालपाश्या नाम । [ मांगटीका । ] ( ६ ) ललाटालङ्कारस्य नामद्वयम् । [ माथे की बिन्दी के २ नाम । ] ( ७ ) कर्णाभरणस्य नामद्वयम् । [ कनफूल के २ नाम । ] ( ८ ) कुण्डलस्य नामद्वयम् । [ कुंडल के २ नाम । ] ( ९ ) ग्रैवेयकस्य द्वे नामनी । [ कण्ठा के २ नाम । ] ( १० ) ललन्तिकाया नामद्वयम् । [ कण्ठी के २ नाम । ] ( ११ ) स्वर्णकण्ठिकायाः । [ सोने की कण्ठी सिकड़ी । ] ( १२ ) उरःसूत्रिकाया एकम् । [ मोती की माला । ] ( १३ ) मुक्तावल्या नामद्वयम् । [ मोती की माला के २ नाम । ] ( १४ ) शतयष्टिकहारस्य नामद्वयम् । [ सौ लड़ा हार के २ नाम । ] ( १५ ) यष्टिभेदाद् हारभेदाः, यथा—द्वात्रिंशल्लतिको ( ३२ लड़वाला ) गुच्छ ( गुत्स ) तत्त्व ( २४ ) सङ्ख्यकः । गुच्छार्ध । चतुस्त्रिंशल्लतिको हारः । चतुर्यष्टिः ( ४ लड़ का ) **गोस्तन** । एकयष्टिकः ( एकलड़ का ) **एकावली** । ( १६ ) विंशतिलतिको हारः ( २० लड़ का ) **माणवक** । सप्तविंशतिमौक्तिकैः **नक्षत्रमाला** । ( १७ ) कटकस्य चत्वारि नामानि । [ पहुँची । ] ( १८ ) केयूरस्य नामद्वयम् । [ बाजूबन्द के २ नाम । ] ( १९ ) अङ्गुलीयकस्य नामद्वयम् । [ अंगूठी के २ नाम । ]

[1]साक्षराऽङ्गुलिमुद्रा स्यात् [2]कङ्कणं करभूषणम् ।
[3]स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ॥ १०८ ॥
क्लीबे सारसनं चाऽथ [4]पुंस्कट्यां शृङ्खलं त्रिषु ।
[5]पादाङ्गदं तुलाकोटिर्मञ्जीरौ नूपुरोऽस्त्रियाम् ॥ १०९ ॥
[6]हंसकः पादकटकः, [7]किङ्किणी क्षुद्रघण्टिका ।
[8]त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश[9] त्रिषु ॥ ११० ॥
[10]वाल्कं क्षौमादि, [11]फालं तु कार्पासं बादरं च तत् ।
[12]कौशेयं कृमिकोशोत्थं, [13]राङ्कवं मृगरोमजम् ॥ १११ ॥
[14]अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।
[15]तत् स्यादुद्गमनीयं यद् धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
[16]पत्त्रोर्णं धौतकौशेयं, [17]बहुमूल्यं महाधनम् ।

---

( १ ) साक्षराङ्गुलिमुद्राया एकम् । [नामलिखी अंगूठी ।] ( २ ) कङ्कणस्य द्वे नामनी । [कंगन के २ नाम ।] ( ३ ) मेखलायाः पञ्च नामानि । **तत्रायं विशेषः—**

'एकयष्टिर्भवेत् काञ्ची मेखलात्वष्टयष्टिका ।
रसना स्यात् षोडशभिः कलापः पञ्चविंशकः' ॥ इति ।

रसना दन्त्यमध्या, तालव्यमध्याऽपि । [ कर्धनी के ५ नाम । ] ( ४ ) सा मेखला पुंस्कट्यां शृङ्खलमिति कथ्यते । [ पुरुषों की कर्धनी, तागड़ी । ] ( ५ ) नूपुरस्य चत्वारि नामानि । [ पायल, पैंजनी के ४ नाम । ] ( ६ ) पादकटकस्य नामद्वयम् । [ पैर का कड़ा के २ नाम । ] ( ७ ) क्षुद्रघण्टिकाया नामद्वयम् । [ पैर के घुंघरू के २ नाम । ] ( ८ ) वस्त्रयोनीनां नाम । [ त्वचा, फल, कृमि, रोम ये वस्त्रों की योनियाँ हैं । ] ( ९ ) वक्षमाणा दश शब्दा विशेष्यनिघ्नत्वात् त्रिषु प्रयुज्यन्ते । यथा—वाल्क-क्षौम-फाल-कार्पास-बादर-कौशेय-राङ्कव-अनाहत-निष्प्रवाणि तन्त्रकाणीति । ( १० ) क्षौमादिवाल्कं कथ्यते । [ अण्डी । ] ( ११ ) कार्पासस्य नामत्रयम् । [ सूती वस्त्र के ३ नाम । ] ( १२ ) कौशेयवस्त्रस्यैकम् । [ रेशमीवस्त्र । ] ( १३ ) राङ्कवस्यैकम् । [ भेड़ के बालों से बने हुए कम्बल आदि । ] ( १४ ) अनाहतवस्त्रस्य चत्वारि नामानि । [ कोरा या नया वस्त्र के ४ नाम । ] ( १५ ) प्रक्षालितवस्त्रयुगलस्यकं नाम । [ धुली हुई धोती-दुपट्टा । ] ( १६ ) धौतकौशेयस्य नामद्वयम् । [ धुले रेशमी वस्त्र के २ नाम । ] ( १७ ) बहुमूल्यवस्त्रस्य नामद्वयम् । [ कीमती वस्त्र के २ नाम । ]

[1]क्षौमं दुकूलं स्याद्द्वे [2]तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥
[3]स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ।
[4]दैर्घ्यमायाम आनाहः, [5]परिणाहो विशालता ॥ ११४ ॥
[6]पटच्चरं जीर्णवस्त्रं [7]समौ नक्तक-कर्पटौ ।
[8]वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥ ११५ ॥
[9]सुचेलकः पटोऽस्त्री, ना [10]वराशिः स्थूलशाटकः ।
[11]निचोलः प्रच्छदपटः, [12]समौ रल्लक-कम्बलौ ॥ ११६ ॥
[13]अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ।
[14]द्वौ प्रावारोत्तरासङ्गौ . समौ बृहतिका तथा ॥ ११७ ॥
संव्यानमुत्तरीयञ्च, [15]चोलः कूर्पासकोऽस्त्रियाम् ।
[16]नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥
[17]अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ।

---

( १ ) क्षौमवस्त्रस्य नामद्वयम् । [ रेशमी दुपट्टा के २ नाम । ] ( २ ) प्रावृतवस्त्रस्य नामद्वयम् । [ ओढा हुआ वस्त्र के २ नाम । ] ( ३ ) वस्त्रान्तावयवानां नामद्वयम् । [ कपड़े के भीतर पहने जाने वाले जांघिया, गंजी, चोली, साया आदि वस्त्रों के २ नाम । ] ( ४ ) वस्त्रादेरायामस्य द्वे नामनी । [ कपड़े की लम्बाई के २ नाम । ] ( ५ ) वस्त्रादे—परिणाहस्य नामद्वयम् । [ कपड़ा का पनहा, अर्ज के २ नाम । ] ( ६ ) जीर्णवस्त्रस्य नामद्वयम् । [ पुराना वस्त्र के २ नाम । ] ( ७ ) स्वेदप्रोञ्छनार्थधृतवस्त्रस्त्र नामद्वयम् । केचित् तु चूर्ण दुग्धादिगालनवस्त्रस्येत्यामनन्ति । [ रुमाल, छन्नी के २ नाम । ] ( ८ ) वस्त्रस्य षड् नामनि । [ वस्त्र, कपड़ा के ६ नाम । ] ( ९ ) सुन्दरवस्त्रस्य द्वे नामनी । [ पतले वस्त्र के २ नाम । ] ( १० ) स्थूलतन्तुनिर्मितवस्त्रस्य द्वे नामनी । [ मोटा कपड़ा के २ नाम । ] ( ११ ) प्रच्छदपटस्य नामद्वयम् । [ चादर, बुरका, परदा आदि के २ नाम । ] ( १२ ) कम्बलस्य नामद्वयम् । [ कम्बल के २ नाम । ] ( १३ ) अधोंऽशुकस्य नामचतुष्टयम् । [ धोती, साड़ी के ४ नाम । ] ( १४ ) उत्तरीय—वस्त्रस्य नामपञ्चकम् । [ ओढ़नी, दुपट्टा, खेश के ५ नाम । ] ( १५ ) चोलस्य नामद्वयम् । [ चोला, चोगा, के २ नाम । ] ( १६ ) हिमानिलनिवारणक्षमस्य प्रावरणस्यैकं नाम । [ रजाई, खातड़ी, सौड़ । ] ( १७ ) चण्डातकस्यैकं नाम । [ लहँगा, घाघरा, घागरा । ]

[1]स्यात् त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥ ११९ ॥
[2]अस्त्री वितानमुल्लोचो, [3]दूष्याद्यं वस्त्रवेश्मनि ।
[4]प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥ १२० ॥
[5]परिकर्माऽङ्गसंस्कारः, [6]स्यान्मार्ष्टिर्मार्जना मृजा ।
[7]उद्वर्तनोत्सादने द्वे समे, [8]आप्लाव आप्लवः ॥ १२१ ॥
स्नानं, [9]चर्चा तु चार्चिक्यं स्थासकोऽथ [10]प्रबोधनम् ।
अनुबोधः, [11]पत्त्रलेखा पत्त्राङ्गुलिरिमे समे ॥ १२२ ॥
[12]तमालपत्त्र-तिलक-चित्रकाणि विशेषकम् ।
[13]द्वितीयञ्च तुरीयं च न स्त्रियामथ [14]कुङ्कुमम् ॥ १२३ ॥
काश्मीरजन्माऽग्निशिखं वरं बाल्हीकपीतने ।
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥ १२४ ॥
[15]लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।
[16]लवङ्गं देवकुसुमं श्रीसंज्ञमथ [17]जायकम् ॥ १२५ ॥

---

( १ ) आप्रपदीनस्य वस्त्रस्यैकं नाम । [ पैरों तक लम्बा वस्त्र । ] ( २ ) वितानस्य नामद्वयम् । [ चँदवा, चाँदनी के २ नाम । ] ( ३ ) वस्त्रनिर्मितगृहस्य नामद्वयम् । [ तम्बू के २ नाम । ] ( ४ ) जवनिकायास्त्रीणि नामानि । [ पर्दा, कनात के ३ नाम । ] ( ५ ) अङ्गसंस्कारस्य नामद्वयम् । [ शरीर को सजाने के २ नाम । ] ( ६ ) मृजायास्त्रीणि नामानि । [ साफ-सफाई के ३ नाम । ] ( ७ ) उद्वर्तनस्य नामद्वयम् । [ उबटन के २ नाम । ] ( ८ ) स्नानस्य नामत्रयम् । [ स्नान के ३ नाम । ] ( ९ ) चन्दनचर्चायास्त्रीणि नामानि । [ चन्दन लगाने के ३ नाम । ] ( १० ) निर्गतसुगन्धवतः पुनः सुगन्धीकरणस्य नामद्वयम् । [ जिसकी गन्ध उड़ गयी हो उसको पुनः सुगन्धित करने के २ नाम । ] ( ११ ) तिलकादिरचनाया नामद्वयम् । [ स्तन कपोल आदि में पत्र रचना आदि के २ नाम । ] ( १२ ) तिलकविशेषस्य नामचतुष्टयम् । [ चन्दन, रोरी, रोली, पिठ्या लगाना के ४ नाम । ] ( १३ ) तत्र चतुर्णां तिलकपर्यायाणाम्मध्ये तिलकविशेषकौ पुंनपुंसकयोः । ( १४ ) केसरस्य एकादश नामानि । [ केसर, कुंकुम के ११ नाम । ] ( १५ ) लाक्षारसस्य षड् नामानि । [ लाख, महावर, आलता के ६ नाम । ] ( १६ ) लवङ्गस्य नामत्रयम् । [ लौंग के ३ नाम । ] ( १७ ) सुगन्धद्रव्यभेदस्य नामत्रयम् । [ जायक । ]

कालीयकञ्च कालानुसार्यं चाथ [1]समार्थकम् ।
वंशिकागुरुराजार्हलोहं कृमिजजोङ्गकम् ॥ १२६ ॥
[2]कालागुर्वगुरु स्यात्तन्मङ्गल्या [3] मल्लिगन्धि यत् ।
[4]यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥
[5]बहुरूपोऽप्यथ वृषधूप-कृत्रिमधूपकौ ।
[6]तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ [7]पायसः ॥ १२८ ॥
श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ।
[8]मृगनाभिर्मृगमदः कस्तूरी चाथ [9]कोलकम् ॥ १२९ ॥
कक्कोलकं कोशफलमथ [10]कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
[11]गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
[12]तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥
[13]तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ [14]जातीकोशजातीफले समे ॥ १३२ ॥
[15]कर्पूराऽगुरु-कस्तूरी-कक्कोलैर्यक्षकर्दमः ।

---

'कालीयकञ्च कालेयं वर्णकं कान्तिदायकम्' । इति व्याडिः ।

'कालानुसार्यं शैलेये कालीये शिंशिपाद्रुमे' । इति विश्वे मेदिन्याञ्च ।

( १ ) अगुरुणः षड् नामानि । [ अगर के ६ नाम । ] ( २ ) कालागुरुणो नामद्वयम् । [ काला अगर के २ नाम । ] ( ३ ) मङ्गल्याया नामद्वयम् । [ रोचना के २ नाम । ] ( ४ ) सर्जरसस्य पञ्च नामानि । [ राल के ५ नाम । ] ( ५ ) विविधसुगन्धिकृतदशाङ्गादिधूपस्य नामद्वयम् । [ सुगन्धित अगरबत्ती आदि धूप के २ नाम । ] ( ६ ) यावनस्य चत्वारि नामानि । [लोहबान के ४ नाम ।] ( ७ ) सरलनिर्यासस्य पञ्च नामानि । [ गन्धाविरोजा, लीसा के ५ नाम । ] ( ८ ) कस्तूर्यास्त्रीणि नामानि । [ कस्तूरी के ३ नाम । ] ( ९ ) कक्कोलस्य नामत्रयम् । [कक्कोल के ३ नाम । ] ( १० ) कर्पूरस्य पञ्च नामानि । [ कपूर के ५ नाम । ] ( ११ ) चन्दनस्य नामचतुष्टयम् । [ चन्दन के ४ नाम । ] ( १२ ) चन्दनविशेषाणामेकैकं नाम । [ तैलपर्णिक, गोशीर्ष, हरिचन्दन । ] ( १३ ) रक्तचन्दनस्य पञ्च नामानि । [ लालचन्दन के ५ नाम । ] ( १४ ) जातीफलस्य द्वे नामनी । [ जायफल के २ नाम । ] ( १५ ) यक्षकर्दमस्यैकं नाम । [ सुगन्धित लेपन । ] तद् यथा—

[1]गात्रानुलेपनी वर्तिर्वर्णकं स्याद् विलेपनम् ॥ १३३ ॥
[2]चूर्णानि वासयोगाः स्युर्[3]भावितं वासितं त्रिषु ।
[4]संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ १३४ ॥
[5]माल्यं माला-स्रजौ मूर्ध्नि, [6]केशमध्ये तु गर्भकः ।
[7]प्रभ्रष्टकं शिखालम्बि, [8]पुरोन्यस्तं ललामकम् ॥ १३५ ॥
[9]प्रालम्बमृजुलम्बि स्यात् [10]कण्ठाद् वैकक्षकं तु तत् ।
यत्तिर्यक् क्षिप्तमुरसि, [11]शिखास्वापीडशेखरौ ॥ १३६ ॥
[12]रचना स्यात्परिस्पन्द, [13]आभोगः परिपूर्णता ।
[14]उपधानन्तूपबर्हः, [15]शय्यायां शयनीयवत् ॥ १३७ ॥
[16]शयनं मञ्च-पर्यङ्क-पल्यङ्काः खट्वया समाः ।
[17]गेन्दुकः कन्दुको, [18]दीपः प्रदीपः, [19]पीठमासनम् ॥ १३८ ॥

---

'कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनन्तथा । महासुगन्धमित्युक्त नामतो यक्षकर्दमः' ॥ इति ।

( १ ) विलेपनस्य चत्वारि नामानि । [ विलेपन के ४ नाम । ] ( २ ) सुगन्धितचूर्णस्य नामद्वयम् । [ सुगन्धित चूर्ण, के २ नाम । ] ( ३ ) सुगन्धिद्रव्यभावितस्य नामद्वयम् । [ सुगन्धित द्रव्य से युक्त पदार्थ के २ नाम । ] ( ४ ) गन्धमाल्याद्यैः संस्कृतस्यैकम् । [ सुगन्धित माला आदि से सुशोभित । ] ( ५ ) शिरःस्थितमाल्यादेस्त्रीणि नामानि । [ माथा में रखी हुई माला के ३ नाम । ] ( ६ ) केशमध्यस्थित पुष्पकस्यैकम् । [ गर्भक । ] ( ७ ) शिखालम्बितस्य पुष्पस्यैकम् । [ शिखा में लटकने वाला फूल । ] ( ८ ) पुरोन्यस्तपुष्पस्य नाम ललामकम् । [ ललामक । ] ( ९ ) कण्ठलम्बितपुष्पस्य नाम । [ गला में लटके हुए फूल का नाम । ] ( १० ) यज्ञोपवीतवत् स्थापितमालादेर्नाम । [ जनेऊ की भांति धारण की हुई माला का नाम । ] ( ११ ) शेखरस्य नामद्वयम् । [ शिखा में धारण की हुई माला के २ नाम । ] ( १२ ) पुष्पादिरचनाया नामद्वयम् । [ फूल गूँथना के २ नाम । ] ( १३ ) परिपूर्णताया नामद्वयम् । [ परिपूर्णता । ] ( १४ ) उपधानस्य नामद्वयम् । [ तकिया के २ नाम । ] ( १५ ) शय्यायास्त्रीणि नामानि । [ शय्या, बिस्तर के ३ नाम । ] ( १६ ) पर्यङ्कस्य चत्वारि नामानि । [ पलंग के ४ नाम । ] ( १७ ) कन्दुकस्य नामद्वयम् । [ गेंद, बाल के २ नाम । ] केचित् कन्दुकशब्देन लघूपधानं स्वीकुर्वन्ति । [ छोटा तकिया । ] ( १८ ) दीपस्य नामद्वयम् । [ दीपक के २ नाम । ] ( १९ ) आसनस्य नामद्वयम् । [ कुर्सी, आसन, पीठ, पीढ़ा के २ नाम । ]

[1]समुद्गकः सम्पुटकः, [2]प्रतिग्राहः पतद्ग्रहः ।
[3]प्रसाधनी कङ्कतिका, [4]पिष्टातः पटवासकः ॥ १३९ ॥
[5]दर्पणे मुकुरादर्शौ, [6]व्यजनं तालवृन्तकम् ।

इति मनुष्यवर्गः ।



## ७. अथ ब्रह्मवर्गः

[7]सन्ततिर्गोत्र-जनन-कुलान्यभिजनाऽन्वयौ ।
वंशोऽन्ववायः सन्तानो [8]वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥
[9]विप्र-क्षत्रिय-विट्-शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
[10]राजबीजी राजवंश्यो [11]बीज्यस्तु कुलसम्भवः ॥ २ ॥
[12]महाकुल-कुलीनाऽऽर्य-सभ्य-सज्जन-साधवः ।
[13]ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री, [14]द्विजात्यग्रजन्मभूदेववाडवाः ।

---

( १ ) सम्पुटकस्य नामद्वयम् । [ डिब्बा, पिटारी आदि के २ नाम । ] ( २ ) पतद्ग्रहस्य द्वे नामनी । [ पीकदान के २ नाम । ] ( ३ ) कङ्कतिकाया नामद्वयम् । [ कंघी के २ नाम । ] ( ४ ) पटवासकस्य नामद्वयम् । [ अबीर, गुलाल के २ नाम । ] ( ५ ) दर्पणस्य नामत्रयम् । [ दर्पण के ३ नाम । ] ( ६ ) व्यजनस्य नामद्वयम् । [ पंखा, विजना, बैना के २ नाम । ]

इति मनुष्यवर्गः ।



( ७ ) वंशस्य नव नामानि । [ वंश, कुल के ९ नाम । ] ( ८ ) ब्राह्मणादिवर्णानामेकम् । [ ब्राह्मण आदि वर्णों का नाम । ] ( ९ ) चातुर्वर्ण्यस्यैकम् । [ ब्राह्मण, क्षत्रिय, वैश्य, शूद्र इन चारों को चातुर्वर्ण्य कहते हैं । ] ( १० ) राजवंश्यस्य नामद्वयम् । [ राजवंश के २ नाम । ] ( ११ ) उत्तमकुलोत्पन्नस्य द्वे नामनी । [ उत्तमकुल में जन्म लेने वाले के २ नाम । ] ( १२ ) कुलीनस्य षड्नामानि । [ कुलीन के ६ नाम । ] ( १३ ) ब्रह्मचर्यादीनामेकैकम् । [ ब्रह्मचारी, गृहस्थी, वानप्रस्थी, भिक्षु ( सन्यासी ) ये आश्रमों के नाम हैं । ] ( १४ ) ब्राह्मणस्य षड् नामानि । [ ब्राह्मण के ६ नाम । ]

विप्रश्च ब्राह्मणोऽसौ, [1]षट्कर्मा यागादिभिर्युतः ॥ ४ ॥
[2]विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः ।
धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः ॥ ५ ॥
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
दूरदर्शी दीर्घदर्शी, [3]श्रोत्रियच्छान्दसौ समौ ॥ ६ ॥
[ मीमांसको जैमिनीये, वेदान्ती ब्रह्मवादिनि ।
वैशेषिके स्यादौलूक्यः, सौगतः शून्यवादिनि ॥
नैयायिकस्त्वाक्षपादः, स्यात् स्याद्वादिक आर्हतः ।
चार्वाकलौकायतिकाः, सत्कार्ये साङ्ख्यकापिलौ ]
[4]उपाध्यायोऽध्यापकोऽथ स [5]निषेकादिकृद् गुरुः ।
[6]मन्त्रव्याख्याकृदाचार्य, [7]आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च, स [8]सोमवति दीक्षितः ।

---

( १ ) यागादिषट्कर्मकुशलस्य ब्राह्मणस्य नाम । [ षट्कर्मा ब्राह्मण । ] तद्यथा—

'इज्याध्ययनदानानि याजनाऽध्यापने तथा ।
प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते' ॥ इति ।

( २ ) पण्डितस्य द्वाविंशति नामानि । [ पण्डित के २२ नाम । ] ( ३ ) सकलशाखाऽध्यायिनो नामद्वयम् । [ वेदकी सभी शाखाओं के अध्ययन करने वाले के २ नाम । ] जैमिनीये मीमांसकः । [मीमांसक ।] ब्रह्मवादिनि वेदान्ती । [वेदान्ती । वैशेषिके औलूक्यः । [ वैशेषिक । ] शून्यवादिनि सौगतः । [ बौद्ध । ] आक्षपादो नैयायिकः । [नैयायिक ।] स्याद्वादिक आर्हतः । [जैन ।] लौकायतिकः चार्वाकः । [चार्वाक ।] कापिलः । [साङ्ख्य ।] ( ४ ) उपाध्यायस्य नामद्वयम् । तत्र मनुराह—

'एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः' ।
योऽध्यापयति वृत्यर्थमुपाध्यायः स उच्यते' ॥ इति ।

[ उपाध्याय के २ नाम । ] ( ५ ) संस्कारादिकर्तुर्गुरोर्नाम । [ गुरु । ] ( ६ ) आचार्यस्य नामद्वयम् । [ आचार्य के २ नाम । ] यथाह मनुः—

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
साङ्गं वा सरहस्य वा तमाचार्यं प्रचक्षते' ॥ इति ।

( ७ ) यज्ञकर्तुस्त्रीणि नामानि । [ यजमान के ३ नाम । ] ( ८ ) सोमवति यज्ञे दीक्षितस्यैकं नाम । [ सोमयाजी । ]

[1]इज्याशीलो यायजूको, [2]यज्वा तु विधिनेष्टवान् ॥ ८ ॥
[3]स गीर्पतीष्टचा स्थपतिः, [4]सोमपीती तु सोमपः ।
[5]सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
[6]अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।
[7]लब्धानुज्ञः समावृत्तः, [8]सुत्वा त्वभिषवे कृते ॥ १० ॥
[9]छात्रान्तेवासिनौ शिष्ये, [10]शैक्षाः प्राथमकल्पिकाः ।
[11]एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
[12]सतीर्थ्यास्त्वेकगुरवश्, [13]चितवानग्निमग्निचित् ।
[14]पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
[15]उपज्ञा ज्ञानमाद्यं स्याज् [16]ज्ञात्वारम्भ उपक्रमः ।
[17]यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
[18]पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥

---

( १ ) यज्ञकरणशीलस्य नामद्वयम् । [ यज्ञ करने वाले के २ नाम । ] ( २ ) यथाविधि यज्ञकृतवत एकम् । [ विधिपूर्वक यज्ञकरने वाला । ] ( ३ ) बृहस्पतिसवनकर्तुर्नामैकम् । [ बृहस्पति याग करने वाला । ] ( ४ ) सोमयाजिनो नामद्वयम् । [ सोमयाग करने वाले के २ नाम । ] ( ५ ) विश्वजिदादियज्ञस्यैकम् । [ विश्वजित् यज्ञ । ] ( ६ ) साङ्गवेदाध्येतुरेकम् । [ साङ्गवेदों के अध्ययनकर्ता का नाम । ] ( ७ ) गुरुकुलवासात् परावृत्तस्यैकम् । [ गुरुकुल से लौटा हुआ । ] ( ८ ) स्नातकस्यैकम् । [ स्नातक । ] ( ९ ) छात्रस्य नामत्रयम् । [ छात्र के ३ नाम । ] ( १० ) प्रथमारब्धवेदानामेकम् । [ पहले वेदारम्भ करने वाले का नाम । ] ( ११ ) समानशाखाऽध्येतॄणाम् एकम् । [ समान शाखा का अध्ययन करने वाले का नाम । ] ( १२ ) सहपाठिनां नामद्वयम् । [ सहपाठियों के २ नाम । ] ( १३ ) अग्नेरुपासकस्यैकम् । [ अग्निहोत्री । ] ( १४ ) परम्परोपदेशस्य नामद्वयम् । [ परम्परा के उपदेश के २ नाम । ] ( १५ ) प्राथमिकज्ञानस्यैकम् । [ आरम्भिक ज्ञान । ] ( १६ ) विज्ञाय प्रथमारम्भस्यैकम् । [ उपक्रम । ] ( १७ ) यज्ञस्य सप्त नामानि । [ यज्ञ के ७ नाम । ] ( १८ ) पञ्च महायज्ञा ब्रह्मयज्ञनाम्ना सुप्रसिद्धास्तेषामेकैकं नाम । [ पाँच महायज्ञ ] तद्यथा—

'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ इति ।

[1]समज्या परिषद् गोष्ठी सभासमितिसंसदः ।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥
[2]प्राग्वंशः प्राग्घविर्गेहात् [3]सदस्या विधिदर्शिनः ।
[4]सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ॥ १६ ॥
[5]अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।
[6]आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥
[7]वेदिः परिष्कृता भूमिः, [8]समे स्थण्डिलचत्वरे ।
[9]चषालो यूपकटकः, [10]कुम्बा सुगहना वृतिः ॥ १८ ॥
[11]यूपाग्रं तर्म, [12]निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।
[13]दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
[14]अग्नित्रयमिदं त्रेता, [15]प्रणीतः संस्कृतोऽनलः ।
[16]समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥
[17]यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नानाय्यो[18]ऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥

---

( १ ) सभाया नव नामानि । [ सभा के ९ नाम । ] ( २ ) हविर्गेहात् प्राग् यजमानादिनिवासाय रचितगृहस्यैकं नाम 'प्राग्वंशः' । [प्राग्वंश ।] ( ३ ) सदस्यस्य नामद्वयम् । [ सदस्य के २ नाम । ] ( ४ ) सभासदसो नामचतुष्टम् । [ सभासद के ४ नाम । ] ( ५ ) यजुर्वेदविद् [ अध्वर्युः । ] सामविद् [ उद्गाता ] ऋत्विग् [ होता ] भवति । ( ६ ) ऋत्विजां नामद्वयम् । [ ऋत्विग् के २ नाम । ] ( ७ ) यज्ञवेद्या नामैकम् । [ यज्ञ की वेदी । ] ( ८ ) यागार्थं परिष्कृतभूमेर्नामद्वयम् । [यज्ञ-भूमि के २ नाम ।] ( ९ ) यूपकटकस्य नामद्वयम् । [ यूपकटक के २ नाम । ] ( १० ) सुगहनाया वृतेर्नामैकम् । [घनी बाड़ ।] ( ११ ) यूपाग्रभागस्य नामद्वयम् । [ स्तम्भ का अगला भाग के २ नाम । ] ( १२ ) अरणेरेकं नाम । [ अरणि । ] ( १३ ) अग्निविशेषस्यैकैकं नाम । [ दक्षिणाग्नि, गार्हपत्य, आहवनीय । ] ( १४ ) अग्नित्रयस्य नाम 'त्रेता' । [ उपर्युक्त तीन अग्नियों का नाम 'त्रेता' । ] ( १५ ) संस्कृतोऽनलः प्रणीताऽभिधः । [ संस्कारयुक्त अग्नि । ] ( १६ ) अग्नेस्त्रीणि नामानि । [ समूह्य, परिचाय्य, उपचाय्य, ये तीन अग्नि के नाम हैं । ] अग्नौ प्रयोगिण इत्यस्याशयोऽग्निनामानीति । ( १७ ) गार्ह्यपत्याद् आनाय्य संस्कृतस्य दक्षिणाग्नेः 'आनाय्य' इत्येकं नाम । [ आनाय्य । ] ( १८ ) अग्नेस्त्रियः स्त्रीणि नामानि । [ अग्नि की स्त्री के ३ नाम । ]

[1]ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।
[2]गायत्रीप्रमुखं छन्दो, [3]हव्यपाके चरुः पुमान् ॥ २२ ॥
[4]आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
[5]धवित्रं व्यजनं तद् यद् रचितं मृगचर्मणा ॥ २३ ॥
[6]पृषदाज्यं सदध्याज्ये, [7]परमान्नं तु पायसम् ।
[8]हव्यकव्ये दैवपैत्रे अन्ने, [9]पात्रं स्रुवादिकम् ॥ २४ ॥
[10]ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।
[11]उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥
[12]परम्पराकं शमनं प्रोक्षणं च यथार्थकम् ।
[13]वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता हते ॥ २६ ॥
[14]सान्नाय्यं हविरग्नौ [15]तु हुते त्रिषु वषट्कृतम् ।
[16]दीक्षान्तोऽवभृथो यज्ञस् [17]तत्कर्मार्हन्तु यज्ञियम् ॥ २७ ॥

---

( १ ) समित्प्रेक्षणे वह्निसमिन्धने प्रयुज्यमानाया ऋचो नामद्वयम् । [ समिधा डालकर आग को जलाने में प्रमुख मन्त्र के २ नाम । ] ( २ ) गायत्रीछन्दस एकं नाम । [ गायत्रीछन्द । ] ( ३ ) चरोरेकम् । [ चरु । ] ( ४ ) शृतोष्णे क्षीरे दधिमिश्रणजनितद्रव्यस्य नाम । [ आमिक्षा । ] ( ५ ) मृगचर्मविरचितव्यजनस्य नाम **धवित्रम्** । [ धवित्र, मृगचर्म का पंखा । ] ( ६ ) दध्याज्यमिश्रितस्य नाम । [ 'पृषदाज्य' ] । ( ७ ) पायसस्य नामद्वयम् । [ खीर के २ नाम । ] ( ८ ) देवान्नं हव्यम्, पित्रन्नं कव्यम् । [ हव्य, कव्य । ] ( ९ ) स्रुवादिपात्राणां नाम । तत्र पात्रं विविनक्ति मेदिनीकारः—

'पात्रं तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे' । इति ।

[ स्रुव, चमस, उलूखल, मुसल, स्फ्य आदि । ] ( १० ) स्रुवभेदानामेकैकं नाम । [ ध्रुवा, उपभृत्, जुहूः । ] ( ११ ) अभिमन्त्र्य क्रतौ हतस्य पशोर्नाम । [ 'उपाकृतः' । ] ( १२ ) यज्ञार्थ पशुवधस्य नामत्रयम् । [ यज्ञार्थ पशु-बध के ३ नाम । ] ( १३ ) यज्ञोपहतपशोर्नामत्रयम् । [ यज्ञ में मारे गये पशु के ३ नाम । ] ( १४ ) हविषो नामद्वयम् । [ हवि के २ नाम । ] ( १५ ) यज्ञाग्नौ हुतस्यैकम् । [ हवन किया पदार्थ । ] ( १६ ) अवभृथस्नानस्यैकम् । [ यज्ञ के अन्त का स्नान । ] ( १७ ) यज्ञयोग्यविप्रादीनामेकम् । [ यज्ञ के योग्य ब्राह्मण । ]

[1]त्रिष्वथ क्रतुकर्मेष्टं, [2]पूर्तं खातादिकर्मणि ।
[3]अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
[4]त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
[5]मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् ॥ ३० ॥
[6]पितृदानं निवापः स्यात् [7]श्राद्धं तत्कर्म शास्त्रतः ।
[8]अन्वाहार्यं मासिकेऽ[9]शोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥
[10]पर्येषणा परीष्टिश्चाऽन्वेषणा च गवेषणा ।
[11]सनिस्त्वध्येषणा [12]याच्ञाभिशस्तिर्याचनाऽर्थना ॥ ३२ ॥
[13]षट् तु [14]त्रिष्वर्घ्यमघार्थे पाद्यं पादाय वारिणि ।
[15]क्रमादातिथ्याऽतिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥
[16]स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।
[ प्राघूर्णिकः प्राघुणकश्चाभ्युत्थानं तु गौरवम् ]

---

( १ ) इष्टकर्मण एकम् । [ याग । ] ( २ ) खातादिकर्मण एकम् । तत्र देवालयारामतडागा-देर्निर्माणस्यैकम् । [ मन्दिर आदि निर्माण । ] ( ३ ) यज्ञिय-शेषस्यैकैकं नाम । अमृतं, विघसः । तत्रायं विचारः—यज्ञशेषः ( पुरोडाशादिः ) [ अमृत ] । आचार्यगुरुपित्राद्यतिथिभुक्तशेषः । [ विघस । ] ( ४ ) दानस्य त्रयोदश नामानि । [ दान के १३ नाम । ] ( ५ ) मृत्युदिने मृतार्थं यद्दानं दीयते तद् [ और्ध्वदैहिक । ] ( ६ ) पितॄनुद्दिश्य यद्दीयते तद् निवापः । [ सीधा ] ( ७ ) शास्त्रोक्तविधिना कृतं पितृकर्म श्राद्धं कथ्यते । [ श्राद्ध । ] ( ८ ) मासिकस्य नामद्वयम् । [ मासिकश्राद्ध के २ नाम । ] ( ९ ) दिवसस्याष्टमभागस्यैकम् नाम । [ कुतपः । ] ( १० ) गवेषणायाश्चत्वारि नामानि । [ गवेषणा, अन्वेषण के ४ नाम । ] ( ११ ) गुर्वादिराराधनस्य नामद्वयम् । [ प्रार्थना द्वारा गुरु आदि को किसी कार्य में नियुक्त करने के २ नाम । ] ( १२ ) याचनायाश्चत्वारि नामानि । [ मांगना के ४ नाम । ] ( १३ ) आगन्तुपर्यन्ताः षट्शब्दास्त्रिषु प्रयुज्यन्ते । ( १४ ) अर्घ्यस्य पाद्यस्य चैकैकम् । [ अर्घ्य-पात्र । ] ( १५ ) आतिथ्यस्यैकैकम् । [ अतिथि-सत्कार । ] ( १६ ) अतिथेस्त्रीणि नामानि । [ अतिथि, पाहुन के ३ नाम । ]

[1]पूजा नमस्याऽपचितिः सपर्यार्चाऽर्हणा समाः ॥ ३४ ॥
[2]वरिवस्या तु शुश्रूषा परिचर्याप्युपासना ।
[3]व्रज्याऽटाट्या पर्यटनं, [4]चर्या त्वीर्यापथे स्थितिः ॥ ३५ ॥
[5]उपस्पर्शस्त्वाचमनमथ [6]मौनमभाषणम् ।
[ [7]प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ।
वाल्मीकिश्चाथ [8]गाधेयो विश्वामित्रश्च कौशिकः ।
[9]व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ]
[10]आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः ॥ ३६ ॥
पर्याय[11]श्चातिपातस्तु स्यात्पर्यय उपात्ययः ।
[12]नियमो व्रतमस्त्री, [13]तच्चोपवासादि पुण्यकम् ॥ ३७ ॥
[14]औपवस्तं तूपवासो, [15]विवेकः पृथगात्मता ।
[16]स्याद् ब्रह्मवर्चसं वृत्ताध्ययनर्द्धि[17]रथाञ्जलिः ॥ ३८ ॥
पाठे ब्रह्माञ्जलिः, [18]पाठे विप्रुषो ब्रह्मबिन्दवः ।

---

( १ ) पूजायाः षट् नामानि । [ पूजा के ६ नाम । ] ( २ ) परिचर्यायाः चत्वारि नामानि । [ सेवा के ४ नाम । ] ( ३ ) पर्यटनस्य नामत्रयम् । [ घूमना के ३ नाम । ] ( ४ ) ईर्यापथे ध्यानाद्युपाये । [ चर्या । ] ( ५ ) आचमनस्य नामद्वयम् । [ आचमन के २ नाम । ] ( ६ ) तूष्णीभावस्य नामद्वयम् । [ मौन, चुप रहना के २ नाम ।] ( ७ ) वाल्मीकेर्नामचतुष्टयम् । [वाल्मीकि के ४ नाम ।] ( ८ ) विश्वामित्रस्य नामत्रयम् । [ विश्वामित्र के ३ नाम । ( ९ ) व्यासस्य चत्वारि नामानि । [ व्यास के ४ नाम । ] ( १० ) क्रमस्य पञ्च नामानि । [ क्रम के ५ नाम । ] ( ११ ) क्रमविपर्ययस्य नामत्रयम् । [ उलटे क्रम के ३ नाम । ] ( १२ ) व्रतमात्रस्य नामद्वयम् । [ व्रत के २ नाम । ] ( १३ ) उपवासादेरेकं नाम **'पुण्यकम्'** । [ व्रत । ] ( १४ ) भोजनाभावस्य नामद्वयम् । [ भूखा रहना के २ नाम । ] ( १५ ) प्रकृतिपुरुषादिभेदज्ञानस्य नामद्वयम् । [ विवेक के २ नाम । ] ( १६ ) ब्रह्मवर्चसः नामद्वयम् । [ ब्रह्मचर्य के २ नाम । ] ( १७ ) वेदपाठावसरे कृतस्याञ्जलेरेकम् । [ वेदपाठ के समय हाथ जोड़ना । ] ( १८ ) वेदपाठे मुखान्निर्गतबिन्दवस्यैकम् । [ वेदपाठ के समय मुख से निकले बिन्दु । ]

[1]ध्यानयोगासने ब्रह्मासनं, [2]कल्पे विधिक्रमौ ॥ ३९ ॥
[3]मुख्यः स्यात्प्रथमः कल्पोऽ[4]नुकल्पस्तु ततोऽधमः ।
[5]संस्कारपूर्वग्रहणं स्यादुपाकरणं श्रुतेः ॥ ४० ॥
[6]समे तु पादग्रहणमभिवादनमित्युभे ।
[7]भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥
[8]तपस्वी तापसः पारिकाङ्क्षी, [9]वाचंयमो मुनिः ।
[10]तपःक्लेशसहो दान्तो, [11]वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥
[12]ऋषयः सत्यवचसः, [13]स्नातकस्त्वाप्लुतो व्रती ।
[14]ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ४३ ॥
[15]यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।
स्थाण्डिलश्चाथ [16]विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥
[17]पवित्रः प्रयतः पूतः, [18]पाखण्डाः सर्वलिङ्गिनः ।
[19]पालाशो दण्ड आषाढो व्रते [20]राम्भस्तु वैणवः ॥ ४५ ॥

---

( १ ) ब्रह्मासनस्यैकं नाम । [ ब्रह्मासन । ] ( २ ) विधेस्त्रीणि नामानि । [ विधि के ३ नाम । ] ( ३ ) मुख्यकल्पस्यैकं नाम । [ मुख्य कल्प । ] ( ४ ) अप्रधानविधेर्नाम । [ गौण विधि । ] ( ५ ) उपाकर्मस्यैकम् । [ उपाकर्म । ] ( ६ ) अभिवादनस्य नामद्वयम् । [ चरण छूकर प्रणाम के २ नाम । ] ( ७ ) सन्यासिनां पञ्च नामानि । [सन्यासियों के ५ नाम ।] ( ८ ) तपस्विनो नामत्रयम् । [ तपस्वी के ३ नाम । ] ( ९ ) मौनिनो नामद्वयम् । [ मौनव्रती के २ नाम । ] ( १० ) तपः क्लेशसहनशक्तिवतो नामद्वयम् । [ तप के कष्ट को सहन करने के २ नाम । ] ( ११ ) ब्रह्मचारिणो नामद्वयम् । [ब्रह्मचारी के २ नाम । ] ( १२ ) सत्यवक्तुर्मुनेर्नामद्वयम् । [ सत्यवक्ता ऋषि का २ नाम । ] ( १३ ) समाप्तवेद-व्रतस्य तत आश्रमान्तरगतस्य नामद्वयम् । [ स्नातक के २ नाम । ] ( १४ ) वशीकृतसर्वेन्द्रियस्य त्रीणि नामानि । [ जितेन्द्रिय के ३ नाम । ] ( १५ ) स्थण्डिल-शायिनो नामद्वयम् । [ भूमि पर सोने वाले के २ नाम । ] ( १६ ) निवृत्तरज-स्तमोगुणवतो नामद्वयम् । [ वीतराग के २ नाम । ] ( १७ ) पवित्रस्य नाम-त्रयम् । [ पवित्र के ३ नाम । ] ( १८ ) पाखण्डिनो नामद्वयम् । [ पाखण्डी के २ नाम । ] ( १९ ) पालाशदण्डस्यैकम् । [ पलाश का दण्ड । ] ( २० ) वैणव-दण्डस्यैकम् । [ बाँस का डण्डा । ]

[1]अस्त्री कमण्डलुः कुण्डी, [2]व्रतिनामासनं वृषी।
[3]अजिनं चर्म कृत्तिः स्त्री, [4]भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥
[5]स्वाध्यायः स्याज्जपः, [6]सुत्याऽभिषवः सवनं च सा।
[7]सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥
[8]दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक्।
[9]शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ४८ ॥
[10]नियमस्तु स यत्कर्माऽनित्यमागन्तुसाधनम्।
[ क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु। ]
[11]उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥
[12]प्राचीनावीतमन्यस्मिन् [13]निवीतं कण्ठलम्बितम्।
[14]अङ्गुल्यग्रे तीर्थं दैवं, [15]स्वल्पाङ्गुल्योर्मूले कायम् ॥ ५० ॥
[16]मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं[17] मूले त्वङ्गुष्ठस्य ब्राह्मम्।
[18]स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥

---

( १ ) कमण्डलोर्नामद्वयम्। [ कमंडल के २ नाम। ] ( २ ) व्रतिनामासनस्यैकम्। [ आसन, कुशासन। ] ( ३ ) मृगचर्मणस्त्रीणि नामानि। [ मृगचर्म के ३ नाम। ] ( ४ ) भिक्षाद्रव्यस्यैकम्। [ भीख। ] ( ५ ) स्वाध्यायस्य नामद्वयम्। [ वेदाध्ययन के २ नाम। ] ( ६ ) सोमरससवनस्य नामत्रयम्। [ सोमरस निकालने के ३ नाम। ] ( ७ ) सर्वविधपापनाशकस्याघमर्षणस्यैकम्। [ अघमर्षण। ] ( ८ ) दर्शपौर्णमासयोरेकैकं नाम। [ दर्श और पौर्णमास यज्ञ का १-१ नाम। ] ( ९ ) नित्यकर्मण एकं नाम। [ नित्यकर्म। ] ( १० ) नियमस्यैकं नाम। [ नियम। ] मुण्डनस्यैकं नाम। [ मुण्डन। ] ( ११ ) दक्षिणेतरस्कन्धस्थापितयज्ञोपवीतस्य नामद्वयम्। [ सव्ययज्ञोपवीत के २ नाम। ] ( १२ ) दक्षिणस्कन्धस्थापितयज्ञोपवीतस्यैकम्। [ अपसव्य यज्ञोपवीत। ] ( १३ ) कण्ठलम्बितयज्ञोपवीतस्यैकम्। [ गला में लटकी जनेऊ। ] ( १४ ) अंगुलीनामग्रे दैवतीर्थस्यैकम्। [ दैव तीर्थ। ] ( १५ ) स्वल्पाङ्गुल्योः ( कनिष्ठिकयोः ) अधो भागे कायतीर्थस्यैकम्। [ कायतीर्थ। ] ( १६ ) अङ्गुष्ठतर्जन्योर्मध्ये पितृतीर्थस्यैकम्। [ पितृतीर्थ। ] ( १७ ) अङ्गुष्ठस्य मूले ब्राह्मतीर्थस्यैकम्। [ ब्राह्मतीर्थ। ] ( १८ ) ब्रह्मभावस्य नामचतुष्टयम्। [ ब्रह्मसायुज्य के ४ नाम। ]

देवभूयादिकं तद्वत् [1]कृच्छ्रं सान्तपनादिकम् ।
[2]सन्यासवत्यनशने पुमान् प्रायोऽथ [3]वीरहा ॥ ५२ ॥
नष्टाग्निः, [4]कुहना लोभान्मिथ्येर्यापथकल्पना ।
[5]व्रात्यः संस्कारहीनः स्याद[6]स्वाध्यायो निराकृतिः ॥ ५३ ॥
[7]धर्मध्वजी लिङ्गवृत्तिर[8]वकीर्णो क्षतव्रतः ।
[9]सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।
[10]परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥
[11]परिवित्तिस्तु तज्ज्यायान्, [12]विवाहोपयमौ समौ ।
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥
[13]व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।
[14]त्रिवर्गो धर्मकामार्थैश्, [15]चतुर्वर्गः समोक्षकैः ॥ ५७ ॥
[16]सबलैस्तैश्चतुर्भद्रं, [17]जन्याः स्निग्धा वरस्य ये ।

इति ब्रह्मवर्गः ।

---

( १ ) प्रायश्चित्तस्यैकम् । [ प्रायश्चित्त । ] अत्र मनुः—

'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनादिकम्' ॥

( २ ) प्रायोपवेशस्यैकम् । [ अनशन । ] ( ३ ) प्रमादादिहेतुना अग्निहोत्राग्निर्नष्टस्य नामद्वयम् । [ असावधानी से जिसकी अग्निहोत्र की अग्नि बुझ गयी, उसके २ नाम । ] ( ४ ) दम्भेन कृतध्यानमौनादेरेकम् । [ पाखण्डी । ] ( ५ ) संस्कारहीनस्य नामद्वयम् । [ व्रात्य के ३ नाम । ] ( ६ ) वेदाध्ययनरहितस्य-द्वयम् । [ स्वाध्याय हीन के २ नाम । ] ( ७ ) भिक्षाद्यर्थं जटादिधारिणो नाम-द्वयम् । [ बनावटी साधु के २ नाम । ] ( ८ ) खण्डितब्रह्मचर्यादिः । [ खण्डित ब्रह्मचारी । ] ( ९ ) यस्य सुप्तस्य सूर्य उदेति अस्तश्चैति तस्यैकैकम् । [ अभि-निर्मुक्त तथा अभ्युदित । ] ( १० ) अविवाहिते ज्येष्ठे कृतपाणिग्रहणस्य कनिष्ठ-स्यैकम् । [परिवेत्ता ।] (११) परिवेत्तुर्ज्येष्ठभ्रातुरेकम् । [परिवेत्ता का बड़ा भाई ।] ( १२ ) विवाहस्य षड् नामानि । [ विवाह के ६ नाम । ] ( १३ ) मैथुनस्य पञ्च नामानि । [ मैथुन के ५ नाम । ] ( १४ ) त्रिवर्गस्यैकम् [ धर्म अर्थ काम । ] ( १५ ) चतुर्वर्गस्यैकम् । [ धर्म, अर्थ, काम, मोक्ष । ] ( १६ ) धर्मार्थकामबलैः सहितश्चतुर्भद्र इति । [ चतुर्भद्र । ] ( १७ ) वरस्य स्निग्धानामेकम् । [ वराती । ]

इति ब्रह्मवर्गः ।

## ८. अथ क्षत्रियवर्गः

[1]मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्त्रियो विराट् ।
[2]राज्ञि राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
[3]राजा तु प्रणताऽशेषसामन्तः स्यादधीश्वरः ।
[4]चक्रवर्ती सार्वभौमो, नृपो[5]ऽन्यो मण्डलेश्वरः ॥ २ ॥
[6]येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ [7]राजकम् ॥ ३ ॥
राजन्यकञ्च नृपतिक्षत्त्रियाणां गणे क्रमात् ।
[8]मन्त्री धीसचिवोऽमात्योऽन्ये [9]कर्मसचिवास्ततः ॥ ४ ॥
महामात्राः प्रधानानि, [10]पुरोधास्तु पुरोहितः ।
[11]द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
[12]प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।
[13]रक्षिवर्गस्त्वनीकस्थो[14]ऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥

---

( १ ) क्षत्त्रियस्य पञ्च नामानि । [ क्षत्रिय के ५ नाम । ] ( २ ) नृपस्य सप्त नामानि । [ राजा के ७ नाम । ] ( ३ ) स्वदेशसीमासमीपस्थसमस्तसामन्तसम्पूजितो राजा । [ अधीश्वर । ] ( ४ ) पर्यन्तपृथिवीमण्डलस्य राजा 'चक्रवर्ती' तस्य नामद्वयम् । [ चक्रवर्ती राजा के २ नाम । ] ( ५ ) मण्डलेश्वरस्यैकं नाम । [ माण्डलिक राजा । ] ( ६ ) सार्वभौमविशेषस्य नाम । केषाञ्चिन्मते राजसूययज्ञकर्ता । [ सम्राट् । ] द्वादशराजमण्डलस्वामी 'सम्राट्' । सकलराजकशासकः 'सम्राट्', इति । ( ७ ) राजसमूहस्य [ राजसमूह ] क्षत्रियसमूहस्य च एकं नाम, राजकम् । ( ८ ) सचिवस्य नामत्रयम् । [ मन्त्री के ३ नाम । ] ( ९ ) प्रधानमन्त्रिणः सहायकानां नामत्रयम् । [ गृह, स्वास्थ्य, शिक्षामन्त्री आदि के ३ नाम ।] ( १० ) पुरोहितस्य नामद्वयम् । [पुरोहित के २ नाम । ] ( ११ ) अधिकारित्वेन व्यवहारद्रष्टुः नामद्वयम् । [ जज ( न्यायाधीश ) के २ नाम । ] ( १२ ) द्वारपालस्य पञ्च नामानि । [ द्वारपाल, पहरेदार के ५ नाम । ] ( १३ ) रक्षकवर्गस्य नामद्वयम् । [ सिपाही के ५ नाम । ] ( १४ ) अधिकारिणो नामद्वयम् । [ अधिकारी ( अफसर, हाकिम ) के २ नाम । ]

[1]स्थायुकोऽधिकृतो ग्रामे, [2]गोपो ग्रामेषु भूरिषु ।
[3]भौरिकः कनकाध्यक्षो, [4]रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥
[5]अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
[6]सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥
[7]शण्ढो वर्षवरस्तुल्यौ, [8]सेवकार्थ्यनुजीविनः ।
[9]विषयानन्तरो राजा [10]शत्रुर्मित्रमतः परम् ॥ ९ ॥
[11]उदासीनः परतरः, [12]पार्ष्णिग्राहस्तु पृष्ठतः ।
[13]रिपौ वैरि-सपत्नाऽरि-द्विषद्-द्वेषण-दुर्हृदः ॥ १० ॥
द्विड्-विपक्षाऽहिताऽमित्र-दस्यु-शात्रव-शत्रवः ।
अभिघाति-पराऽराति-प्रत्यर्थि-परिपन्थिनः ॥ ११ ॥
[14]वयस्यः स्निग्धः सवया, [15]अथ मित्रं सखा सुहृत् ।
[16]सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥

---

( १ ) ग्रामाधिकृतस्यैकं नाम । [ गाँव का मुखिया ठाकुर या चौधरी । ] ( २ ) भूरिषु ग्रामेषु अधिकारिण एकं नाम । [ अनेक गाँवों का अधिकारी । ] ( ३ ) कनकाध्यक्षस्य नामद्वयम् । [ सोना आदि धन के स्वामी के २ नाम । ] ( ४ ) रूप्याध्यक्षस्य नामद्वयम् । [ टकसाल का स्वामी के २ नाम । ] ( ५ ) अन्तःपुराधिकृतस्यैकम् । [ अन्तःपुर ( रनिवास ) का अधिकारी । ] ( ६ ) राजान्तःपुररक्षकविशेषस्य चत्वारि नामानि । [ कञ्चुकी के ४ नाम । ] ( ७ ) षण्ढस्य नामद्वयम् । तद् यथा—

'ये त्वल्पसत्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' ॥ इति ।

[ खोजा, हिजड़ा, नपुंसक के २ नाम । ] ( ८ ) सेवकस्य नामत्रयम् [ नौकर के ३ नाम । ] ( ९ ) समीपदेशस्य राज्ञो नाम । [ समीपवर्ती राजा । ] ( १० ) अतः शत्रोः परं मित्रं भवतीत्याशयः । [ शत्रु से दूसरा मित्र । ] ( ११ ) स्वदेशाद्दूरस्थितस्य राज्ञो नाम । [ दूरवर्ती राजा । ] ( १२ ) विजगीषुणो राज्ञ एकं नाम । [ जीतने की इच्छा वाले राजा का नाम । ] ( १३ ) शत्रोर्नामानि ऊनविंशतिः । [ शत्रु के २९ नाम । ] ( १४ ) समवयस्कस्य नामत्रयम् । [ समवयस्क के ३ नाम । ] ( १५ ) मित्रस्य नामत्रयम् । [ मित्र के ३ नाम । ] ( १६ ) मित्रताया नामद्वयम् । ] ( १७ ) अनुकूलव्यहारस्य नामद्वयम् । [ अनुरोध या दूसरे की बात मानना के २ नाम । ]

[1]यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।
चारश्च गूढपुरुषश्[2]चाऽऽप्तप्रत्ययितौ समौ ॥ १३ ॥
[3]सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्तिक-मौहूर्त-ज्ञानि-कार्तान्तिका अपि ॥ १४ ॥
[4]तान्त्रिको ज्ञातसिद्धान्तः, [5]सत्त्री गृहपतिः समौ ।
[6]लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥
[7]लिखिताऽक्षरविन्यासे लिपिर्लिविरुभे स्त्रियौ ।
[8]स्यात् सन्देशहरो दूतो, [9]दूत्यं तद्भावकर्मणी ॥ १६ ॥
[10]अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।
[11]स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ।
[12]सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
षड्गुणाः, [13]शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।
[14]क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥

---

( १ ) गुप्तपुरुषस्य सप्त नामानि । [ खुफिया, गुप्तचर के ७ नाम । ] ( २ ) आप्तवचनस्य नामद्वयम् । [ विश्वासी के २ नाम । ] ( ३ ) ज्यौतिषिकस्याष्टौ नामानि । [ ज्योतिषी के ८ नाम । ] ( ४ ) तत्वार्थज्ञानवतो द्वे नामनी । [ ज्ञानी के २ नाम । ] ( ५ ) सर्वदा सत्रस्चालनकर्तुर्नामद्वयम् । [ सत्र, सदावर्त चलाने वाले के २ नाम । ] ( ६ ) लेखनकर्मकर्तुश्चत्वारि नामानि । [ लेखक के ४ नाम । ] ( ७ ) लेखनकर्मणो नामद्वयम् । [ लिपि के २ नाम । ] ( ८ ) सन्देशहारकस्य नामद्वयम् । [ दूत के २ नाम । ] ( ९ ) दूतकर्मण एकं नाम । [ दूतकार्य । ] ( १० ) पथिकस्य पञ्च नामानि । [ बटोही के ५ नाम । ] ( ११ ) राज्याङ्गानां नामद्वयम् । [ राज्य के ७ अंगों के नाम—राजा, मन्त्री, मित्र, कोष, देश ( राष्ट्र ), दुर्ग ( किला ), और बल ( सेना ) । ] ( १२ ) राज्यस्य षड् गुणाः । [ राज्य के ६ गुण—१ सन्धि, २ विग्रह, ३ यान, ( चढ़ायी ), ४ आसन, ५ द्वैध, और ६ आश्रय । ] ( १३ ) राज्ञस्तिस्त्रः शक्तयो भवन्ति । [ राजा की ३ शक्तियाँ होती है—१ प्रभाव, २ उत्साह और ३ मन्त्रशक्ति । ] ( १४ ) राजनीतौ त्रिवर्गः । [ १ क्षय, २ स्थान और वृद्धि । ]

[१]स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ।
[२]भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥ २० ॥
[३]साहसं तु दमो दण्डः, [४]साम सान्त्वमथो समौ ।
[५]भेदोपजापावुपधा[६] धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥
पञ्च त्रिष्वषडक्षीणो[७] यस्तृतीयाद्यगोचरः ।
[८]विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥
रहश्चोपांशु चालिङ्गे, [९]रहस्यं तद्भवे त्रिषु ।
[१०]समौ विस्रम्भविश्वासौ, [११]भ्रेषो भ्रंशो यथोचितात् ॥ २३ ॥
[१२]अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
[१३]युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥
न्याय्यं च त्रिषु षट्, [१४]सम्प्रधारणा तु समर्थनम् ।
[१५]अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥
शिष्टिश्चाज्ञा च, [१६]संस्था तु मर्यादा धारणा स्थितिः ।
[१७]आगोऽपराधो मन्तुश्च, [१८]समे तूद्दानबन्धने ॥ २६ ॥

---

( १ ) राज्ञः कोशदण्डजं प्रभावः प्रतापः कथ्यते । [ प्रताप के २ नाम । ] ( २ ) उपायचतुष्टयस्यैकैकं नाम । [ १ साम, २ दाम ( दान ), ३ दण्ड, और ४ भेद । ] ( ३ ) दण्डस्य नामत्रयम् । [ दण्ड के ३ नाम । ] ( ४ ) साम्नो नामद्वयम् । [ साम के २ नाम । ] ( ५ ) भेदस्य नामद्वयम् । [ फूट-डालना के २ नाम । ] ( ६ ) अमात्यादेः परीक्षणस्यैकं नाम । [उपधा । ] ( ७ ) चतुष्कर्ण-मन्त्रस्यैकं नाम । [ गुप्त राय ( सलाह ) । ] ( ८ ) एकान्तस्य नामानि । उपांशु इत्यव्ययम् । [एकान्त के ७ नाम । ] ( ९ ) रहसि भवं तस्यैकं नाम । [रहस्य ।] ( १० ) विश्वासस्य नामद्वयम् । [ विश्वास के २ नाम । ] ( ११ ) अधःपतनस्य नामद्वयम् । [ नीचे गिरने के २ नाम । ] ( १२ ) उचितस्य पञ्च नामानि । तत्र कल्पस्यार्थान्तराणि मेदिन्याम्—'कल्पःशास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' । [ उचित के ५ नाम । ] ( १३ ) न्यायप्राप्तस्य षड्नामानि तानि त्रिषु भवन्ति । [ ठीक, समीचीन के ६ नाम । ] ( १४ ) उचितानुचितनिर्धारणस्य नामद्वयम् । [ उचित-अनुचित निर्धारण ] ( १५ ) आज्ञायाः षड्नामानि । [ आज्ञा, आदेश के ६ नाम । ] ( १६ ) न्यायोचितमर्यादायाः चत्वारि नामानि । मर्यादा के ४ नाम । ] ( १७ ) अपराधस्य नामत्रयम् । [ अपराध के ३ नाम । ] ( १८ ) बन्धनस्य नामद्वयम् । [ बन्धन के २ नाम । ]

[1]द्विपाद् यो द्विगुणो दण्डो, [2]भागधेयः करो बलिः ।
[3]घट्टादिदेयं शुल्कोऽस्त्री, [4]प्राभृतं तु प्रदेशनम् ॥ २७ ॥
उपायनमुपग्राह्यमुपहारस्तथोपदा ।
[5]यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
[6]तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ।
[8]सांदृष्टिकं फलं सद्य, [9]उदर्कः फलमुत्तरम् ॥ २९ ॥
[10]अदृष्टं वह्नितोयादि, [11]दृष्टं स्वपरचक्रजम् ।
[12]महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥
[13]प्रक्रिया त्वधिकारः स्यात् [14]चामरं तु प्रकीर्णकम् ।
[15]नृपासनं यत्तद् भद्रासनं, [16]सिंहासनं तु तत् ॥ ३१ ॥
हैमं, [17]छत्त्रं त्वातपत्रं, [18]राज्ञस्तु नृपलक्ष्म तत् ।

---

( १ ) द्विगुणदण्डस्यैकं नाम । [ दुगुना दण्ड । ] ( २ ) कृषकादिभ्यो राजग्राह्यभागस्य नामत्रयम् । [ लगान, कर के ३ नाम । ] ( ३ ) शुल्कस्यैकं नाम । [ फीस, महसूल । ] ( ४ ) देवगुरुमित्रादिभ्यो दीयमानस्य धनादिवस्तुनः षड् नामानि । [ उपहार के ६ नाम । ] ( ५ ) कन्यादाने दीयमानस्य धनादेर्नामद्वयं, यौतकं यौतुकञ्च । [ यौतक, दहेज के २ नाम । ] ( ६ ) वर्तमानकालस्यैकं नाम । [ तत्काल । ] ( ७ ) उत्तरकालस्यैकं नाम । [ आने वाला समय । ] ( ८ ) सद्यः फलस्यैकं नाम । [ तत्काल मिलने वाला फल । ] ( ९ ) भाविनि काले लब्धमानफलस्य नाम । [ भविष्य में मिलने वाले फल का नाम-उदर्क । ] ( १० ) अग्न्यादिभयस्यैकम् । तद्यथा—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा । अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः' ॥ [ अदृष्ट । ] ( ११ ) स्वसैन्यात्, परसैन्यात्, परराष्ट्रजाच्चौराच्च समुत्पन्नभयस्यैकं नाम 'दृष्टम्' । [ सेना और चोर आदि से उत्पन्न भय का नाम । ] ( १२ ) स्वपक्षोत्थमहीभुजादिभयस्यैकम् । [ अपने राजा से उत्पन्न भय का नाम । ] ( १३ ) राज्ञाम् अधिकारस्य नामद्वयम् । [ राजाओं के अधिकार के २ नाम । ] ( १४ ) चामरस्य नामद्वयम् । [ चँवर के २ नाम । ] ( १५ ) रत्नादिजटितराजसिंहासनस्य नामद्वयम् । [राजा का आसन के २ नाम ।] ( १६ ) सिंहासनस्यैकम् । [ सुवर्ण निर्मित आसन ( सिंहासन ) । ] ( १७ ) छत्रस्य नामद्वयम् । [ छाता के २ नाम । ] ( १८ ) राजचिह्नरूपस्यैकम् । नकारान्तो नृपलक्ष्मशब्दः । [ छत्र । ]

[१]भद्रकुम्भः पूर्णकुम्भो, [२]भृङ्गारः कनकालुका ॥ ३२ ॥
[३]निवेशः शिबिरं षण्डे, [४]सज्जनं तूपरक्षणम् ।
[५]हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥
[६]दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥
इभः स्तम्बेरमः पद्मी, [७]यूथनाथस्तु यूथपः ।
[८]मदोत्कटो, मदकलः, [९]कलभः करिशावकः ॥ ३५ ॥
[१०]प्रभिन्नो गर्जितो मत्तः, [११]समावुद्वान्तनिर्मदौ ।
[१२]हास्तिकं गजता वृन्दे, [१३]करिणी धेनुका वशा ॥ ३६ ॥
[१४]गण्डः कटो, [१५]मदो दानं, [१६]वमथुः करशीकरः ।
[१७]कुम्भौ तु पिण्डौ [१८]शिरसस्तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥

---

( १ ) पूर्णकुम्भस्य नामद्वयम् । [ पूर्ण कलश, भरा घड़ा के २ नाम । ] ( २ ) सुवर्णघटितजलपात्रस्य नामद्वयम् । [ सोने की झारी के २ नाम । ] ( ३ ) शिविरस्य नामद्वयम् । अत्र हैमः—'निवेशः सैन्यविन्यासे न्यासे रङ्गविवाहयोः' । [ छावनी, सेनानिवेश के २ नाम । ] ( ४ ) सैन्यस्योपरक्षणाय नियुक्तजनस्य नामद्वयम् । [ पहरा, चौकी के २ नाम । ] ( ५ ) चतुर्विधं सेनाङ्गम् । तद्यथा—हस्तिनः, अश्वाः, रथाः, पदातयः च । तत्र नाविकानाम् आटविकादीनाञ्च पदातिषु, नौकानां रथेषु तथा महिषादीनां गजाश्वादिष्वन्तर्भावो भवतीति, मुकुटस्याभिप्रायः । [ हाथी घोड़े रथ और पदाति ( पैदल चलने वाले ) सेना के अंग होते हैं । ] ( ६ ) गजस्य पञ्चदश नामानि । [ हाथी के १५ नाम । ] ( ७ ) यूथाधिपस्य गजस्य नामद्वयम् । [ झुण्ड में प्रधान हाथी के २ नाम । ] ( ८ ) अन्तर्मदस्य गजस्य नामद्वयम् । [ जिसका मद अभी न निकल रहा हो उस हाथी के २ नाम । ] ( ९ ) करिशावकस्य नामद्वयम् । [ हाथी के बच्चे के २ नाम । ] ( १० ) सञ्जातमदस्य गजस्य नामत्रयम् । [ मदमत्त हाथी के ३ नाम । ] ( ११ ) मदरहितगजस्य नामद्वयम् । [मदरहित हाथी के २ नाम । ] ( १२ ) गजसमूहस्य नामद्वयम् । [ गजसमूह के २ नाम । ] ( १३ ) करिण्यास्त्रीणि नामानि । [ हथिनी के ३ नाम । ] ( १४ ) गजगण्डस्य नामद्वयम् । [ हाथी के गण्डस्थल के २ नाम । ] ( १५ ) गजमदस्य नामद्वयम् । [ हाथी के मद के २ नाम । ] ( १६ ) गजशुण्डाप्रसृतजलकणस्य नामद्वयम् । [ हाथी की सूंड़ से झरने वाले जलकणों के २ नाम । ] ( १७ ) गजशिरसः पिण्डयोर्नाम ['कुम्भः'] ( १८ ) गजकुम्भमध्यभागस्यैकं नाम । [दोनों कुम्भों का मध्यभाग ।]

[1]अवग्रहो ललाटं स्यादीषिका[2] त्वक्षिकूटकम् ।
[3]अपाङ्गदेशो निर्याणं, [4]कर्णमूलं तु चूलिका ॥ ३८ ॥
[5]अधः कुम्भस्य वाहित्थं, [6]प्रतिमानमधोऽस्य यत् ।
[7]आसनं स्कन्धदेशः स्यात् [8]पद्मकं बिन्दुजालकम् ॥ ३९ ॥
[9]पार्श्वभागः पक्षभागो, [10]दन्तभागस्तु योऽग्रतः ।
[11]द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥
[12]तोत्रं वेणुकमालानं[13] बन्धस्तम्भेऽथ [14]शृङ्खले ।
अन्दुको निगडोऽस्त्री स्यादङ्[15]कुशोऽस्त्री सृणिः स्त्रियाम् ॥ ४१ ॥
[16]दूश्या कक्ष्या वरत्रा स्यात् [17]कल्पना सज्जना समे ।
[18]प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥
[19]वीतं त्वसारं हस्त्यश्वं, [20]वारी तु गजबन्धनी ।

---

( १ ) गजललाटस्य नाम । [ अवग्रह । ] ( २ ) नेत्रगोलकस्यैकं नाम । इषीकापि पाठभेदः । [ अक्षिगोलक । ] ( ३ ) गजस्य अपाङ्गदेशस्यैकं नाम [ 'निर्याणम्' ] ( ४ ) गजकर्णमूलस्यैकं नाम । [ चूलिका । ] ( ५ ) गजकुम्भस्याधोभागस्यैकं [ वाहित्थम् । ] ( ६ ) वाहित्थस्याधोभागस्य दन्तमध्यस्यैकं नाम । [ प्रतिमानम् । ] ( ७ ) गजस्कन्धदेशस्य नाम । [ आसनम् । ] ( ८ ) गजमुखादिस्थितबिन्दुसमूहस्यैकं नाम । [ पद्मकम् । ] ( ९ ) गजपार्श्वभागस्य नामद्वयम् । [ हाथी के अगल-बगल के २ नाम । ] ( १० ) गजदन्ताग्रभागस्यैकम् । [ हाथी दांत का अगला भाग । ] ( ११ ) गजजङ्घापूर्वापरभागयोरेकैकं नाम । तत्र पूर्वभागस्य 'गात्रम्' परभागस्य 'अवरम्' नाम । [ हाथी के जाँघ का पूर्वभाग—गात्र, परभाग—अवर । ] ( १२ ) ताडनवंशादिदण्डस्य नामद्वयम् । [ वेत, छड़ी के २ नाम । ] ( १३ ) गजबन्धनस्तम्भस्य नामद्वयम् । [ हाथी बांधने का खम्भा के २ नाम । ] ( १४ ) शृङ्खलायास्त्रीणि नामानि । [ साँकल के ३ नाम । ] ( १५ ) अङ्कुशस्य नामद्वयम् । [ अंकुश के २ नाम । ] ( १६ ) चर्मादिनिर्मितगजमध्यबन्धनस्य त्रीणि नामानि । [ पेटी के ३ नाम । ] ( १७ ) पल्याणाद्यारोपणेन सज्जीकरस्य नामद्वयम् । [ अम्बारी कसना के २ नाम । ] ( १८ ) गजोपरि आस्तरणार्थनिहितचित्रकम्बलस्य पञ्च नामानि । [ गलीचा, झूल, के ५ नाम । ] ( १९ ) निर्बलहस्त्यश्वसमूहस्यैकम् । [ कमजोर हाथी-घोड़ों का समूह । ] ( २० ) गजबन्धनशालाया नामद्वयम् । [ गजशाला, फीलखाना के २ नाम । ]

[१]घोटके वीतितुरगस्तुरङ्गाऽश्वतुरङ्गमाः ॥ ४३ ॥
वाजि-वाहाऽश्वगन्धर्व-हय-सैन्धव-सप्तयः ।
[२]आजानेयाः कुलीनाः [३]स्युर्विनीताः साधुवाहिनः ॥ ४४ ॥
[४]वनायुजाः पारसीकाः काम्बोजा वाह्लिका हयाः ।
[५]ययुरश्वोऽश्वमेधीयो, [६]जवनस्तु जवाधिकः ॥ ४५ ॥
[७]पृष्ठ्यः स्थौरी, [८]सितः कर्को, [९]रथ्यो वोढा रथस्य यः ।
[१०]बालः किशोरो, [११]वाम्यश्वा वडवा, [१२]वाडवं गणे ॥ ४६ ॥
[१३]त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।
[१४]कश्यं तु मध्यमश्वानां, [१५]हेषा ह्रेषा च निःस्वनः ॥ ४७ ॥
[१६]निगालस्तु गलोद्देशो, [१७]वृन्दे त्वश्वीयमश्ववत् ।

---

( १ ) घोटकानां त्रयोदश नामानि । [ घोड़ा के १३ नाम । ] वीतिः पीतिरपि पाठः । ( २ ) कुलीनाश्वानां नामद्वयम् । [ उच्चकुल के घोड़ा के २ नाम । ] ( ३ ) शिक्षितानां साधुवाहिनां घोटकानां नामद्वयम् । [ शिक्षित घोड़ा के २ नाम । ] ( ४ ) देशविशेषजघोटकानामेकैकं नाम । [ पारसी घोड़ा, काबुली घोड़ा । ] ( ५ ) अश्वमेधयोग्यस्याश्वस्य नामद्वयम् । [ अश्वमेधयोग्य घोड़े के २ नाम । ] ( ६ ) अधिकवेगवतोऽश्वस्य नामद्वयम् । [ तेज दौड़ने वाला घोड़ा के २ नाम । ] ( ७ ) भारवाहिनोऽश्वस्य नामद्वयम् । तत्र स्थौरी नान्तः । [ लद्दू घोड़ा के २ नाम । ] ( ८ ) श्वेतवर्णवतोऽश्वस्यैकं नाम । [ कर्क । ] ( ९ ) रथवाहकस्याश्वस्यैकं नाम । [ रथ्य । ] ( १० ) अश्वबालकस्यैकम् किशोरः । [बछेरा । ] ( ११ ) बडवायास्त्रीणि नामानि । [ घोड़ी के ३ नाम । ] ( १२ ) अश्वसमूहस्यैकं नाम । [ वाडवम् । ] ( १३ ) अश्वेन दिनैकगम्यदेशस्य नाम त्रिषु । [ आश्वीनम् । ] ( १४ ) अश्वमध्यस्यैकम् । [ कश्यम् । ] ( १५ ) अश्वशब्दस्य नामद्वयम् । [ हिनहिनाना के २ नाम । ] ( १६ ) ग्रीवायाः समीपभागस्यैकं नाम । [ गर्दन का समीप भाग । ] अश्वशास्त्रे तद् यथा—

'घण्टाबन्धसमीपस्थो निगालः कीर्तितो बुधैः ।
तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मतः ॥

( १७ ) अश्वसमूहस्य नामद्वयम् । [ अश्वसमूह के २ नाम । ]

[1]आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥
गतयोऽमूः पञ्च धारा, [2]घोणा तु प्रोथमस्त्रियाम् ।
[3]कविका तु खलीनोऽस्त्री, [4]शफं क्लीबे खुरःपुमान् ॥ ४९ ॥
[5]पुच्छोऽस्त्री लूमलाङ्गूले, [6]बालहस्तश्च बालधिः ।
[7]त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥
[8]याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।
[9]असौ पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥
[10]कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।
[11]क्लीबेऽनः शकटोऽस्त्री स्याद् [12]गन्त्री कम्बलिवाह्यकम् ॥ ५२ ॥
[13]शिबिका याप्ययानं स्याद् [14]दोला प्रेङ्खादिका स्त्रियाम् ।
[15]उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥
[16]पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।

---

( १ ) अश्वगतिविशेषाणामेकैकं नाम । [ घोड़ों की चाल । ] एताः पञ्च अश्वगतयः 'धाराः' इति कथ्यन्ते । ( २ ) अश्वनासिकाया एकं नाम 'प्रोथम्' । [ घोड़ा की नाक । ] ( ३ ) खलीनस्य नामद्वयम् । [ लगाम के २ नाम । ] ( ४ ) खुरस्य नामद्वयम् । [ खुर के २ नाम । ] ( ५ ) पुच्छस्य नामत्रयम् । [ पूँछ के ३ नाम । ] ( ६ ) केशयुक्तलाङ्गूलाग्रभागमात्रस्य नामद्वयम् । [ पूँछ का अगला हिस्सा के २ नाम । ] ( ७ ) श्रमदूरीकरणाय बारम्वारं भूमौ लुठितस्याश्वस्य नामद्वयम् । [ भूमि पर लुढ़का हुआ घोड़ा के २ नाम । ] ( ८ ) युद्धार्थ सज्जरथस्य नामत्रयम् । [ रथ के ३ नाम । ] ( ९ ) सुखभ्रमणाय सज्जरथस्यैक नाम । [ घूमने के लिये जोता हुआ रथ । ] ( १० ) प्रवहणस्य नामत्रयम् । [ डोली के ३ नाम । ] ( ११ ) शकटस्य नामद्वयम् । तत्र अनः सान्तं क्लीवे भवति । [ बैलगाड़ी, के २ नाम । ] ( १२ ) कम्बलावृतशकटस्य नामद्वयम् । [ कम्बल से ढँकी गाड़ी के २ नाम । ] ( १३ ) शिविकाया नामद्वयम् । [ पालकी के २ नाम । ] ( १४ ) दोलाया नामद्वयम् । [ हिंडोला के २ नाम । ] ( १५ ) व्याघ्रचर्मावृतस्य रथस्य नामद्वयम् । [ बाघ के चर्म से लपेटे हुए रथ के २ नाम । ] ( १६ ) शुक्लकम्बलवेष्टितरथस्यैकम् । [ सफेदकम्बल से लपेटा हुआ रथ । ]

[1]रथे काम्बलवस्त्राद्याः कम्बलादिभिरावृते ।। ५४ ।।
त्रिषु द्वैपादयो, [2]रथ्या रथकट्या रथव्रजे ।
[3]धूः स्त्री क्लीबे यानमुखं स्याद्[4] रथाङ्गमपस्करः ।। ५५ ।।
[5]चक्रं रथाङ्गं [6]तस्याऽन्ते नेमिः स्त्री स्यात्प्रधिःपुमान् ।
[7]पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ।। ५६ ।।
[9]रथगुप्तिर्वरूथो ना, [10]कूबरस्तु युगन्धरः ।
[11]अनुकर्षो दार्वधःस्थं, [12]प्रासङ्गो ना युगान्तरम् ।। ५७ ।।
[13]सर्वं स्याद् वाहनं यानं युग्यं पत्त्रं च धोरणम् ।
[14]परम्परावाहनं यत् तद् वैनीतकमस्त्रियाम् ।। ५८ ।।
[15]आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
[16]नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ।। ५९ ।।
सव्येष्टृदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।

---

( १ ) वस्त्रकम्बलादिभिरावृतस्य रथस्यैकैकं त्रिषु । [ वस्त्र, कम्बल आदि से लपेटा हुआ रथ । ] ( २ ) रथसमूहस्य त्रीणि नामानि । [ रथ समूह के ३ नाम । ] ( ३ ) वृषादिबन्धनस्थानस्य नामद्वयम् । तत्र धूः रान्तः । [ बैल आदि को बांधने के स्थान के २ नाम । ] ( ४ ) चक्रादन्यस्य रथारम्भकस्य नामद्वयम् । [ रथाङ्ग के २ नाम । ] ( ५ ) रथचक्रस्य नामद्वयम् । [ रथ का पहिया के २ नाम । ] ( ६ ) चक्रस्यान्तभागस्य नामद्वयम् । [ पहिया का बाहरी भाग के २ नाम । ] ( ७ ) चक्रनाभेर्नामद्वयम् । [चक्रनाभि के २ नाम । ] ( ८ ) अक्षाग्रकीलकस्य नामद्वयम् । [ अणि, अर, आर के २ नाम । ] ( ९ ) परप्रहाणाभिघातरक्षार्थं रथसंनाहवद् आवरणस्य नामद्वयम् । [ छप्पर के २ नाम । ] ( १० ) युगकाष्ठबन्धनस्थानस्य नामद्वयम् । [ जुआ बांधने के स्थान के २ नाम ।] ( ११ ) रथस्याधस्तलभागदारुण एकम् । [ रथ के नीचे लगी लम्बी लकड़ी । ] नान्तोऽपि अनुकर्षाशब्दः । (१२) अन्यवृषयुग्मस्यैकम् । केचित्तु–रथाद्यङ्गयुगादन्यद् युगं वृषभदमनकाले यद् आसज्यते तस्यैकम् । [ रथ में अभ्यास कराने के लिये जोता गया बैलों का दूसरा जोड़ा । ] ( १३ ) वाहनमात्रस्य पञ्च नामानि । [ सवारी के ५ नाम । ] ( १४ ) परम्परावाहनस्य शकटादेरेकम् । [ गाड़ियों की कतार । ] ( १५ ) हस्तिपकस्य चत्वारि नामानि । [ महावत, पीलवान के ४ नाम । ] ( १६ ) अष्टौ नामानि सारथेः । [ सारथि, गाड़ीवान् के ८ नाम । ]

[1]रथिनः स्यन्दनारोहा, [2]अश्वारोहास्तु सादिनः ॥ ६० ॥
[3]भटा योधाश्च योद्धारः, [4]सेनारक्षास्तु सैनिकाः ।
[5]सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥
[6]बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।
[7]परिधिस्थः परिचरः, [8]सेनानीर्वाहिनीपतिः ॥ ६२ ॥
[9]कञ्चुको वारवाणोऽस्त्री, [10]यत्तु मध्ये सकञ्चुकाः ।
बध्नन्ति तत्सारसनमधिकाङ्गोऽथ [11]शीर्षकम् ॥ ६३ ॥
शीर्षण्यं च शिरस्त्रेऽथ [12]तनुत्रं वर्म दंशनम् ।
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥
[13]आमुक्तः प्रतिमुक्तश्च पिनद्धश्चाऽपिनद्धवत् ।
[14]सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥
त्रिष्वामुक्तादयो, [15]वर्मभृतां कावचिकं गणे ।
[16]पदाति-पत्ति-पदग-पादातिक-पदाजयः ॥ ६६ ॥
पद्गश्च पदिकश्चाऽथ [17]पादातं पत्तिसंहतिः ।

---

( १ ) रथारूढस्य योद्धुर्द्वे नामनी । [ रथारुढ योधा के २ नाम । ] ( २ ) अश्ववाराणां नामद्वयम् । [ असवार के २ नाम । ] ( ३ ) भटस्य नामत्रयम् । [ योधा, सिपाही के ३ नाम । ] ( ४ ) सेनारक्षकस्य नामद्वयम् । [ सन्तरी के २ नाम । ] ( ५ ) सेनासमेवतसैनिकस्य नामद्वयम् । [ सैनिक के २ नाम । ] ( ६ ) सहस्रसङ्ख्यकसैनिकैर्बलवतः । तत्र सहस्री नान्तः पुंसि । [ हजारी । ] ( ७ ) दण्डधारिणो द्वे नामनी, केचिद् रथगजचक्रादिरक्षकस्येत्यामनन्ति । [ दण्ड-धारी के २ नाम । ] ( ८ ) सेनानायकस्य नामद्वयम् । [ सेनापति के २ नाम । ] ( ९ ) कञ्चुकस्य नामद्वयम् । [कञ्चुक, चोला के २ नाम । ] ( १० ) कञ्चुकस्य स्थैर्यार्थं यद् निबध्नन्ति तस्य नामद्वयम् । [ कमरबन्द के २ नाम । ] ( ११ ) शीर्षण्यस्य नामत्रयम् । [टोप या टोपी के ३ नाम ।] (१२) वर्मणः सप्त नामानि । [ वर्म, कवच के ७ नाम । ] ( १३ ) परिहितवस्त्रकञ्चुकादेश्चत्वारि नामानि । [ पहिना हुआ वस्त्र कञ्चुक आदि के ४ नाम । ] ( १४ ) धृतकवचवतः पुरुषस्य पञ्च नामानि । पूर्वोक्ता आमुक्तादयः शब्दास्त्रिषु । [ कवचधारण किये हुए पुरुष के ५ नाम । ] ( १५ ) कवचिनां समूहस्यैकं नाम । [कवचधारियों का समूह । ] ( १६ ) पदातेः सप्त नामानि । [ पैदल सिपाही के ७ नाम । ] ( १७ ) पदाति-समूहस्यैकं नाम 'पादातम्' । [ पैदल सिपाहियों का समूह । ]

[1]शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ६७ ॥
[2]कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।
[3]अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥
[4]धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।
[5]स्यात्काण्डवांस्तु काण्डीरः, [6]शाक्तीकः शक्तिहेतिकः ॥ ६९ ॥
[7]याष्टीकपारश्वधिका यष्टिपर्श्वधहेतिकौ ।
[8]नैस्त्रिंशिकोऽसिहेतिः स्यात् [9]समौ प्रासिककौन्तिकौ ॥ ७० ॥
[10]चर्मी फलकपाणिः स्यात् [11]पताकी वैजयन्तिकः ।
[12]अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥ ७१ ॥
[13]पुरोगा-ऽग्रेसर-प्रष्ठा-ऽग्रतःसर-पुरःसराः ।
पुरोगमः पुरोगामी, [14]मन्दगामी तु मन्थरः ॥ ७२ ॥
[15]जङ्घालोऽतिजवस्तुल्यौ, [16]जङ्घाकरिकजाङ्घिकौ ।
[17]तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥

---

( १ ) शस्त्रजीविनश्चत्वारि नामानि । [ शस्त्र से आजीविका करने वाला के ४ नाम । ] ( २ ) सम्यक्कृतशराभ्यासस्य शूरस्य नामत्रयम् । [ वाण चलाने में कुशल योधा के ३ नाम । ] ( ३ ) लक्ष्यच्युतशरस्य शूरस्यैकम् । [ लक्ष्य से बाण चूका हुआ शूर । ] ( ४ ) धनुर्धरस्य षड् नामानि । [ धनुषधारी के ६ नाम । ] ( ५ ) बाणधारणकर्तुर्नामद्वयम् । [ बाणधारी के २ नाम । ] ( ६ ) शक्तिनामकास्त्रधारिणो नामद्वयम् । [ शक्ति धारक के २ नाम । ] ( ७ ) यष्टिधारिणः परशुधारिणश्चैकैकं नाम । [ लाठी और फरसाधारी का नाम । ] ( ८ ) खड्गधारिणो नामद्वयम् । [ खड्ग ( तलवार ) धारी के २ नाम । ] ( ९ ) प्रासकुन्तधारिणोरेकैकं नाम । [ बर्छी, भाला धारियों का १-१ नाम । ] ( १० ) फलकधारकस्य नामद्वयम् । [ ढाल वाला के २ नाम । ] ( ११ ) पताकाधारकस्य नामद्वयम् । [झण्डा वाला के २ नाम । ] ( १२ ) अनुचरस्य नामचतुष्टयम् । [ सहायक, सेवक, नौकर के ४ नाम । ] ( १३ ) अग्रेसरस्य सप्त नामानि । [ अगुआ, आगे चलने वाला के ७ नाम । ( १४ ) मन्थरगतिवतो नामद्वयम् । [ धीरे चलने वाला के २ नाम । ] ( १५ ) अतिवेगवतः पुरुषस्य नामद्वयम् । [ शीघ्र चलने वाला पुरुष के २ नाम । ] ( १६ ) जङ्घाजीविनो नामद्वयम् । [ हरकारा के २ नाम । ] ( १७ ) वेगशालिनः षड् नामानि । [ जल्दीबाज के ६ नाम । ]

[1]जय्यो यः शक्यते जेतुं [2]जेयो जेतव्यमात्रके ।
[3]जैत्रस्तु जेता, [4]यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ।
[5]ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥ ७५ ॥
[6]स्यादुरस्वानुरसिलो, [7]रथिनो रथिको रथी ।
[8]कामं गाम्यनुकामीनो, [9]ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥
[10]शूरो वीरश्च विक्रान्तो, [11]जेता जिष्णुश्च जित्वरः ।
[12]सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
[13]ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥
[14]व्यूहस्तु बलविन्यासो, [15]भेदा दण्डादयो युधि ।
[16]प्रत्यासारो व्यूहपार्ष्णिः, [17]सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥

---

( १ ) जेतुं शक्यस्यैकं नाम 'जय्यः'। [ जीतने में समर्थ । ] ( २ ) जेतुं योग्यस्यैकं नाम 'जेयः'। [ जीतने योग्य । ] ( ३ ) जैत्रस्य नामद्वयम् । [ जीतने वाला के २ नाम । ] ( ४ ) सामर्थ्येन शत्रुसम्मुखं गच्छतस्त्रीणि । [ शक्ति से शत्रु का मुकाबला करने वाला पुरुष के ३ नाम । ] ( ५ ) अतिबलशालिनस्त्रीणि । [ अतिबलवान् के ३ नाम । ] ( ६ ) विस्तृतवक्षसो नामद्वयम् । [ चौड़ी छाती वाला के २ नाम । ] ( ७ ) रथस्वामिनस्त्रीणि नामानि । [ रथस्वामी के ३ नाम । ] ( ८ ) यथेष्टं गमनशीलस्य नामद्वयम् । [ स्वेच्छा से जाने वाला के २ नाम । ] ( ९ ) अतिगमनशीलस्यैकं नाम । [ बहुत चलने वाला । ] ( १० ) वीरस्य नामत्रयम् । [ शूर के ३ नाम । ] ( ११ ) जेतुर्नामत्रयम् । [ जीतने वाला के ३ नाम । ] ( १२ ) युद्धकुशलस्यैकं । तत्र शस्त्राजीवादयः सांयुगीनान्ताः त्रिषु भवन्ति । [ युद्ध-कुशल । ] ( १३ ) सेनाया एकादश नामानि । [ सेना के ११ नाम । ] ( १४ ) व्यूहरचनाया नामद्वयम् । [ व्यूह रचना के २ नाम । ] तत्प्रकारस्तु यथा—

'मुखे रथा हयाः पृष्ठे तत्पृष्ठे च पदातयः ।
पार्श्वयोश्च गजाः कार्या व्यूहोऽयमुच्यते बुधैः' ॥ इति ।

( १५ ) व्यूहस्य भेदाः—दण्डचक्रभोगमण्डलशकादयः । [ व्यूह के भेद । ] ( १६ ) व्यूहपृष्ठभागस्य नामद्वयम् । [ व्यूह का पिछला भाग । ] ( १७ ) सैन्यपृष्ठस्थितस्यैकम् । [ कुमक, सहायक सेना । ]

**[1]एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।**
**[2]पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥**
**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।**
**अनीकिनी, [3]दशानीकिन्यक्षौहिण्यथ [4]सम्पदि ॥ ८१ ॥**
**सम्पत्तिः श्रीश्च लक्ष्मीश्च, [5]विपत्त्यां विपदापदौ ।**
**[6]आयुधं तु प्रहरणं शस्त्रमस्त्रमथाऽस्त्रियौ ॥ ८२ ॥**
**[7]धनुश्चापौ धन्व-शरासन-कोदण्ड-कार्मुकम् ।**

---

( १ ) सेनाविशेषस्य नामैकम् । [ सेनाविशेष का नाम 'पत्ति' । ] तत्राऽऽह नन्तः—

'एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते' ॥ इति ।

( २ ) पत्त्यङ्गैस्त्रिगुणितैः क्रमशः सेनामुखाद्याः सेनाविशेषा भवन्ति । क्रमेण तेषां विवरणम्—तिस्रः पत्तयः [ सेनामुखम् । ] त्रीणि सेनामुखानि । [ गुल्मः । ] त्रयो गुल्माः [ गणः । ] त्रयो गणाः [ वाहिनी । ] तिस्रो वाहिन्यः [ पृतना । ] तिस्रः पृतनाः [ चमूः ] तिस्रः चम्वः [ अनीकिनी ] । दशानीकिन्यः [अक्षौहिणी] ( ३ ) अक्षौहिण्या एकं नाम । [ अक्षौहिणी सेना । ] तस्याः प्रमाणं यथा—

'अक्षौहिण्याः प्रमाणन्तु खागाष्टैकाक्षिभिर्गजैः ।
रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः' ॥ इति ।

**सेना भेदों मे हाथी आदि की संख्या-बोधक-तालिका**

| सेना भेद | पत्ति | सेना मुख | गुल्म | गण | वाहिनी | पृतना | चमू | अनीकिनी | अक्षौहिणी |
|---|---|---|---|---|---|---|---|---|---|
| हाथी तथा रथ | १ | ३ | ९ | २७ | ८१ | २४३ | ७२९ | २१८७ | २१८७० |
| घोड़े | ३ | ९ | २७ | ८१ | २४३ | ७२९ | २१८७ | ६५६१ | ६५६१० |
| पैदल | ५ | १५ | ४५ | १३५ | ४०५ | १२१५ | ३६४५ | १०९३५ | १०९३५० |

( ४ ) सम्पत्तेश्चत्वारि नामानि । [ सम्पत्ति के ४ नाम । ] ( ५ ) विपत्तेस्त्रीणि नामानि । [ विपत्ति के ३ नाम । ] ( ६ ) आयुधस्य चत्वारि नामानि । [ शस्त्र के ४ नाम । ] ( ७ ) धनुषः सप्त नामानि । षान्तं धनुः पुंनपुंसकयोः । उकारान्तो धनुश्शब्दः पुंसि । धनूः स्त्रियाम् । [ धनुष के ७ नाम । ]

**इष्वासोऽप्यथ [1]कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥**
**[2]कपिध्वजस्य गाण्डीव-गाण्डिवौ पुंनपुंसकौ ।**
**[3]कोटिरस्याटनी, [4]गोधे तले ज्याघातवारणे ॥ ८४ ॥**
**[5]लस्तकस्तु धनुर्मध्यं, [6]मौर्वी ज्या शिञ्जिनी गुणः ।**
**[7]स्यात् प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५ ॥**
**[8]लक्षं लक्ष्यं शरव्यं च, [9]शराभ्यास उपासनम् ।**
**[10]पृषत्क-बाण-विशिखा अजिह्मग-खगाशुगाः ॥ ८६ ॥**
**कलम्ब-मार्गण-शराः पत्री रोप इषुर्द्वयोः ।**
**[11]प्रक्ष्वेडनास्तु नाराचाः, [12]पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥**
**[13]निरस्तः प्रहिते बाणे, [14]विषाक्ते दिग्धलिप्तकौ ।**
**[15]तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥**

---

( १ ) कर्णस्य धनुषो नाम । [ कालपृष्ठ, कर्ण का धनुष । ] ( २ ) अर्जुन-धनुषो नामद्वयम् । [ अर्जुन के धनुष के २ नाम 'गाण्डीव' । ] ( ३ ) धनुष-कोटेर्नामद्वयम् । [ धनुष का कोना के २ नाम । ] ( ४ ) ज्याघातवारणस्य नामद्वयम् । [ धनुष की डोरी की चोट को रोकने के २ नाम । ] ( ५ ) धनुषो मध्यभागस्यैकं, 'लस्तकः' । [ धनुष का मध्यभाग । ] ( ६ ) धनुषो गुणस्य चत्वारि नामानि । [ धनुष की डोरी के ४ नाम । ] ( ७ ) धन्विनां स्थानभेदानां पञ्च नामानि । तान्यथा—१. प्रत्यालीढम्, २. आलीढं, ३. समपदं, ४. विशाखं, ५. मण्डलञ्च । [धनुष धारियों के स्थान भेदों के ५ नाम ।] तत्र रभस एवं मनुते—

'वैष्णवं समपादं च वैशाखं मण्डलन्तथा ।
प्रत्यालीढमथालीढं स्थानान्येतानि षड्नृणाम्' ॥ इति रभसः ।

( ८ ) लक्ष्यस्य नामत्रयम् । [ निशाना के ३ नाम । ] ( ९ ) शरक्षेपाभ्यासस्य नामद्वयम् । [ बाण चलाने के अभ्यास के २ नाम । ] ( १० ) बाणस्य द्वादश नामानि । [ बाण के १२ नाम । ] ( ११ ) लौहमयबाणस्य नामद्वयम् । [ लोहे के बाण के २ नाम । ] ( १२ ) शरपक्षस्य नामद्वयम् । अत्र वक्ष्यमाणा लिप्त-कान्ताः शब्दास्त्रिषु प्रयुज्यन्ते । [ बाण के पुंख के २ नाम । ] ( १३ ) प्रक्षिप्त-बाणस्यैकम् । [ धनुष द्वारा फैके हुए बाण के २ नाम । ] ( १४ ) विषदिग्ध-बाणस्य नामद्वयम् । [ विष में बुझाये हुए बाण के २ नाम । ] ( १५ ) तूणीरस्य षड् नामानि । [ तरकस के ६ नाम । ]

तूण्यां, [1]खड्गे तु निस्त्रिंशचन्द्रहासाऽसिरिष्टयः ।
कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ ८९ ॥
[2]त्सरुः खड्गादिमुष्टौ स्याद् [3]मेखला तन्निबन्धनम् ।
[4]फलकोऽस्त्री फलं चर्म, [5]सङ्ग्राहो मुष्टिरस्य यः ॥ ९० ॥
[6]द्रुघणो मुद्गरघनौ, [7]स्यादीली करवालिका ।
[8]भिन्दिपालः सृगस्तुल्यौ, [9]परिघः परिघातनः ॥ ९१ ॥
[10]द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।
[11]स्याच्छस्त्री चासिपुत्री च च्छुरिका चासिधेनुका ॥ ९२ ॥
[12]वा पुंसि शल्यं शङ्कुर्ना, [13]शर्वला तोमरोऽस्त्रियाम् ।
[14]प्रासस्तु कुन्तः, [15]कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥
[16]सर्वाभिसारः सर्वौघः सर्वसन्नहनाऽर्थकः ।
[17]लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥
[18]यत् सेनयाऽभिगमनमरौ तदभिषेणनम् ।

---

( १ ) खड्गस्य नव नामानि । [ तलवार के ९ नाम । ] ( २ ) खड्गमुष्टेरेकं नाम । [ मूठ । ] ( ३ ) खड्गादेश्चर्मादिनिर्मितकटिबन्धनस्यैकं नाम । [ चमड़े का पट्टा । ] ( ४ ) फलकस्य नामत्रयम् । [ ढाल के ३ नाम । ] ( ५ ) फलकमुष्टेरेकम् । [ ढाल की मूठ । ] ( ६ ) लोहमुद्गरस्य नामत्रयम् । [ मुद्गर, लोहे का घन के ३ नाम । ] ( ७ ) करवालिकाया नामद्वयम् । [ छोटी तलवार, गुप्ती के २ नाम । ] ( ८ ) अश्मप्रक्षेपसाधनत्रयस्य नामद्वयम् । भिन्दिमालोऽपि क्वचित् । [ गोफण के २ नाम । ] ( ९ ) लौहबद्धस्य लगुडभेदस्य नामद्वयम् । [ लोहांगी लाठी के २ भेद । ] ( १० ) कुठारस्य चत्वारि नामानि । [ कुल्हाड़ी के ४ नाम । ] ( ११ ) क्षुरिकायाश्चत्वारि नामानि । [ छूरी के ४ नाम । ] ( १२ ) बाणाग्रभागस्य नामद्वयम् । [ बाण का फल के २ नाम । ] ( १३ ) तोमरस्य नामद्वयम् । [ गँड़ासा के २ नाम । ] ( १४ ) प्रासस्य नामद्वयम् । [ भाला के २ नाम । ] ( १५ ) कोणभागस्य चत्वारि । [ तलवार के कोना के ४ नाम । ] ( १६ ) सर्वसैन्यसन्नहनस्य नामत्रयम् । [ सब प्रकार की सेनाओं के समूह के ३ नाम । ] ( १७ ) शारदनवरात्रे महानवम्यां शस्त्रवाहनप्रभृतिपूजाविधेरेकं नाम । [शस्त्र, घोडा, रथ आदि की पूजा, आरती । ] ( १८ ) रिपौ ससैन्याऽऽक्रमणस्यैकम् । [ शत्रु पर चढ़ाई करना । ]

[1]यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
[2]स्यादासारः प्रसरणं, [3]प्रचक्रं चलितार्थकम् ।
[4]अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥
[5]वैतालिका बोधकराश् [6]चाक्रिका घाण्टिकाऽर्थकाः ।
[7]स्युर्मागधास्तु मगधा, [8]वन्दिनः स्तुतिपाठकाः ॥ ९७ ॥
[9]संशप्तकास्तु समयात् सङ्ग्रामादनिवर्तिनः ।
[10]रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ॥ ९८ ॥
[11]चूर्णे क्षोदः, [12]समुत्पिञ्जपिञ्जलौ भृशमाकुले ।
[13]पताका बैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥
[14]सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ।
[15]अहम्पूर्वमहम्पूर्वमित्यहम्पूर्विका स्त्रियाम् ॥ १०० ॥
[16]आहोपुरुषिका दर्पाद् या स्यात् सम्भावनात्मनि ।

---

( १ ) यात्रायाः षड् नामानि । [ यात्रा के ६ नाम । ] ( २ ) सर्वतोव्यापि सैन्यप्रसरणस्य नामद्वयम् । [ सेना के फैलाव के २ नाम । ] ( ३ ) प्रस्थित-सैन्यस्य द्वे नामनी । [सेना प्रस्थान के २ नाम ।] ( ४ ) शत्रुम्प्रति निर्भीकयायिन एकम् । [ शत्रु पर आक्रमण करने वाला । ] ( ५ ) राज्ञां प्रातर्जागरणकारिणो नामद्वयम् । [राजाओं को प्रातःकाल जगाने वालों के २ नाम ।] ( ६ ) घण्टिका-वादकस्य नामद्वयम् । अन्ये तु—राज्ञां स्तुतिपाठकानामिति स्वीकुर्वन्ति । अत्र पाठ भेदः—'चक्रिका घटिकार्थकाः' । [ घड़ियाल बजाने वाला के २ नाम । ] ( ७ ) वंशपरम्परागतस्तुतिपाठकानां नामद्वयम् । [ स्तुतिपाठकों के २ नाम । ] ( ८ ) वन्दिनां द्वे नामनी । केचित्तु मागधा इत्यारम्य स्तुतिपाठकपर्यन्तान् समार्थकान् स्वीकुर्वन्ति । [ भाट के २ नाम । ] ( ९ ) सङ्ग्रामादनिवर्तिनो नामैकम् । [ युद्ध से विजय प्राप्त किये बिना न लौटने की शपथ लिया हुआ वीर । ] ( १० ) धूलेश्चत्वारि नामानि । तत्र रजस् सान्तं क्लीबे । [ धूल के ४ नाम । ] ( ११ ) चूर्णस्य नामद्वयम् । केचित् तु रेणुरारभ्य क्षोदपर्यन्तान् धूलिपर्यायत्वेन मन्वते । [ धूल के २ नाम । ] ( १२ ) भृशमाकुलस्य नामद्वयम् । [ अत्यन्त व्याकुल के २ नाम । ] ( १३ ) पताकायाश्चत्वारि नामानि । [ पताका, झंडी के ४ नाम । ] ( १४ ) भयप्रदयुद्धभूमेरेकं नाम । [ भयंकर युद्ध भूमि । ] ( १५ ) अहम्पूर्विकाया एकं नाम । [मैं पहले मैं पहले इसप्रकार उत्साहपूर्वक कार्य करना ।] ( १६ ) आत्मसम्भावनाया एकं नाम । [ मैं भी कुछ हुँ ऐसा सोचना । ]

[1]अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ॥ १०१ ॥
[2]द्रविणं तरः-सहो-बल-शौर्याणि स्थाम शुष्मं च ।
शक्तिः पराक्रमः प्राणो, [3]विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
[4]वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ।
[5]युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥
मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् ।
अस्त्रियां समराऽनीकरणाः कलहविग्रहौ ॥ १०४ ॥
सम्प्रहाराऽभिसम्पातकलिसंस्फोटसंयुगाः ।
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ।
[6]नियुद्धं बाहुयुद्धेऽथ [7]तुमुलं रणसङ्कुले ॥ १०६ ॥
[8]क्ष्वेडा तु सिंहनादः स्यात् [9]करिणां घटना घटा ।
[10]क्रन्दनं योधसंरावो, [11]बृंहितं करिगर्जितम् ॥ १०७ ॥
[12]विस्फारो धनुषः स्वानः, [13]पटहाऽऽडम्बरौ समौ ।

---

( १ ) परस्परम् अहङ्कारस्यैकम् । [ मैं बड़ा हूँ, मैं बड़ा हूँ इस प्रकार का घमण्ड करना । ] ( २ ) पराक्रमस्य दश नामानि । तत्र तरः सान्तं क्लीबे, स्थाम नान्तं क्लीबे । [ शक्ति के १० नाम । ] ( ३ ) अतिविक्रमस्य नामद्वयम् । [ अतिविक्रमस्य नामद्वयम् । [ अतिपराक्रम के २ नाम । ] ( ४ ) युद्धारम्भे समाप्तौ वा मद्यपानस्यैकम् । [ युद्ध के आदि अथवा अन्त में मद्यपान । ] ( ५ ) युद्धस्यैकत्रिंशन्नामानि, तत्र युत्-धान्ता, संयत्-समित्-च तान्ते । [ युद्ध के ३१ नाम । ] ( ६ ) बाहुयुद्धस्य नामद्वयम् । [ कुस्ती के २ नाम । ] ( ७ ) रणसङ्कुलस्य नामद्वयम् । [ घमासान युद्ध के २ नाम । ] ( ८ ) शूराणां सिंहनादस्य नामद्वयम् । तत्र क्ष्वेडा शब्दः स्त्रियाम् । [ योधाओं की सिंहगर्जना के २ नाम । ] ( ९ ) गजसमूहस्य नामद्वयम् । [ हाथियों के झुंड के २ नाम । ] ( १० ) स्पर्धया योधानां परस्परमाह्वानस्य नामद्वयम् । [योधाओं का एक दूसरे को ललकारने के २ नाम ।] ( ११ ) गजगर्जितस्य नामद्वयम् । [ हाथी की चिंघाड़ के २ नाम । ] ( १२ ) धनुषः शब्दस्यैकम् । [ धनुष की टंकार । ] ( १३ ) युद्धपटहस्य नामद्वयम् । [ मारूबाजा के २ नाम । ]

[1]प्रसभं तु बलात्कारो हठोऽथ [2]स्खलितं छलम् ॥ १०८ ॥
[3]अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ।
[4]मूर्च्छा तु कश्मलं मोहोऽप्यमर्दस्तु पीडनम् ॥ १०९ ॥
[6]अभ्यवस्कन्दनं त्वभ्यासादनं, [7]विजयो जयः ।
[8]वैरशुद्धिः प्रतीकारो वैरनिर्यातनञ्च सा ॥ ११० ॥
[9]प्रद्रावोद्रावसन्द्रावसन्दावा विद्रवो द्रवः ।
अपक्रमोऽपयानञ्च, [10]रणे भङ्गः पराजयः ॥ १११ ॥
[11]पराजितपराभूतौ, त्रिषु [12]नष्टतिरोहितौ ।
[13]प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥
प्रवासनं परासनं निषूदनं निहिंसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥
उद्वासन-प्रमथन-क्रथनोज्जासनानि च ।
आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥
[14]स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥ ११६ ॥

---

( १ ) बलात्कारस्य नामत्रयम् । [ बलात्कार के ३ नाम । ] ( २ ) युद्ध-मर्यादाभङ्गस्य नामद्वयम् । [ युद्ध की मर्यादा भंग करने के २ नाम । ] ( ३ ) शुभाशुभसूचकमहाभूतविकारस्य नामत्रयम् । [ उत्पात के ३ नाम । ] ( ४ ) मूर्च्छायास्त्रीणि नामानि । [ मूर्च्छा के ३ नाम । ] ( ५ ) शत्रुपीडनस्य नाम-द्वयम् । [ शत्रु को दबाने के २ नाम । ] ( ६ ) प्रहारादि प्रकारेण शत्रोर्निः-शक्तीकरणस्य नामद्वयम् । ( ७ ) विजयस्य नामद्वयम् । [ विजय के २ नाम । ] ( ८ ) प्रतीकारस्य नामत्रयम् । [ बदला लेना के ३ नाम । ] ( ९ ) प्रद्रवस्य अष्टौ नामानि । [भागना के ८ नाम । ] ( १० ) पराजयस्य नामद्वयम् । [ हारना के २ नाम । ] ( ११ ) पराजितस्य नामद्वयम् । [ हारा हुआ के २ नाम । ] ( १२ ) तिरोहितस्य नामद्वयम् । [ छिपा हुआ के २ नाम । ] ( १३ ) मारणस्य त्रिंशन्नामानि । [ मारना, वध करना के ३० नाम । ] ( १४ ) मरणस्य षड्-नामानि । तत्र मृत्युः स्त्रीपुंसयोः । [ मृत्यु के ६ नाम । ]

[१] परासु-प्राप्तपञ्चत्व-परेत-प्रेत-संस्थिताः ।
मृतप्रमीतौ त्रिष्वेते, [२] चिता चित्या चितिः स्त्रियाम् ॥ ११७ ॥
[३] कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।
[४] श्मशानं स्यात् पितृवनं, [५] कुणपः शवमस्त्रियाम् ॥ ११८ ॥
[६] प्रग्रहोपग्रहौ वन्द्यां, [७] कारा स्याद् बन्धनालये ।
[८] पुंसि भूम्न्यसवः प्राणाश्चैवं [९] जीवोऽसुधारणम् ॥ ११९ ॥
[१०] आयुर्जीवितकालो ना, [११] जीवातुर्जीवनौषधम् ।

इति क्षत्रियवर्गः ।



## ९. अथ वैश्यवर्गः

[१२] ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।

---

( १ ) मृतस्य सप्त नामानि । [ मरा हुआ के ७ नाम । ] ( २ ) चितायास्त्रीणि नामानि । [ चिता के ३ नाम । ] ( ३ ) छिन्नशिरसो देहस्यैकम् । [ कबन्ध ( जिसका शिर कटा हो ) । ] ( ४ ) श्मशानस्य नामद्वयम् । [ श्मशान के २ नाम । ] ( ५ ) मृतशरीरस्य नामद्वयम् । 'कुणपः पूतिगन्धे शवेऽपि च । मेदिन्याम् । [ मुर्दा के २ नाम । ] ( ६ ) वन्दिशालायास्त्रीणि नामानि । [ जेल, कारावास के ३ नाम । ] अन्यत्र तु तदित्यम्—

'प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे ।
हयादिरश्मौ रश्मौ च सुवर्णहरिपादपे ॥
उपग्रहः पुमान् वन्द्यामुपयोगेऽनुकूलने । मेदिन्याम् ।

( ७ ) बन्धनगृहस्य नामद्वयम् । [ जेलखाना के २ नाम । ] ( ८ ) प्राणवायोर्नामद्वयम् । तत्र प्राणासुशब्दौ पुंसि बहुवचने च भवतः । [ प्राणों के २ नाम । ] ( ९ ) जीवनस्य द्वे नामनी । [ जीवन क्रिया के २ नाम । ] ( १० ) जीवयुक्तकालस्य नामद्वयम् । तत्र आयुः सान्तं नपुंसके । [ जीवनकाल के २ नाम । ] ( ११ ) जीवनौषधस्य नामद्वयम् । [ मृतसंजीवनी के २ नाम । ]

इति क्षत्रियवर्गः ।



( १२ ) वैश्यस्य षड् नामानि । [ वैश्य के ६ नाम । ]

[1]आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥
[2]स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
[3]सेवा श्ववृत्तिर्[4]नृतं कृषिर्[5]उञ्छशिलं त्वृतम् ॥ २ ॥
[6]द्वे याचिताऽयाचितयोर्यथासङ्ख्यं मृताऽमृते ।
[7]सत्याऽनृतं वणिग्भावः, [8]स्यादृणं पर्युदञ्चनम् ॥ ३ ॥
उद्धारो[9]ऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
[10]याच्ञयाऽऽप्तं याचितकं, [11]निमयादापमित्यकम् ॥ ४ ॥
[12]उत्तमर्णाऽधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
[13]कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥
[14]क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः ।

---

( १ ) आजीविकायाः षड् नामानि । [ आजीविका के ६ नाम । ] ( २ ) कृषिप्रभृतिवृत्तीनामेकैकं नाम, कृषिः, पाशुपाल्यं, वाणिज्यम् । [ खेती, पशुपालन, व्यापार । ] ( ३ ) सेवावृत्तेर्नामद्वयम् । [ नौकरी के २ नाम । ] ( ४ ) कृषेर्नामद्वयम् । [ खेती के २ नाम । ]

'शुनो वृत्तिः स्मृता सेवा गर्हितं तद् द्विजन्मनाम् ।
हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते' ॥ इति ।

( ५ ) खलनिपतितधान्यसङ्ग्रहस्य नामत्रयम् । उञ्छः, शिलम्, ऋतम् । [ खलिहान में छूटे हुए अन्न संग्रह के ३ नाम । ] तत्र—'पुमानुञ्छः शिलमृतम्' । इति बोपालितः । 'ऋतमुञ्छशिलं स्मृतम्', इति मनुः । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' । इति यादवः । ( ६ ) याचितवृत्तेरेकम्, अयाचितवृत्तेरप्येकं नाम । क्रमेण-मृतम् अमृतं च । [ याचितवृत्ति-मृत, अयाचित वृत्ति-अमृत । ] ( ७ ) वाणिज्यस्य नामद्वयम् । सत्यसहितमनृतं सत्याऽनृतम्, अत्र शाकपार्थिवादिसमासः । [ व्यापार के २ नाम । ] ( ८ ) ऋणस्य नामत्रयम् । [ कर्ज के ३ नाम । ] ( ९ ) धनादिवृद्धये तत्प्रयोगस्य नामत्रयम् । [ व्याज पर रुपये देना के ३ नाम । ] ( १० ) याच्ञया प्राप्तधनस्यैकम् । [ मांगने से प्राप्त धन । ] ( ११ ) परिवर्तनेन प्राप्तधनस्यैकम् । [ बदले में प्राप्त धन । ] ( १२ ) ऋणव्यवहारे धनदातुर्नाम—उत्तमर्णः, ऋणगृहीतुर्नाम—अधमर्णः, [ उत्तमर्ण = महाजन, अधमर्ण = कर्जदार । ] ( १३ ) ऋणवृद्ध्याजीविनश्चत्वारि नामानि । [ सूदखोर । ] ( १४ ) कृषकस्य चत्वारि नामानि । [ किसान के ४ नाम । ]

[1]क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
[2]यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ।
[3]तिल्यं तैलीनवन्माषोमाणुभङ्गाद्द्विरूपता ॥ ७ ॥
[4]मौद्‍गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।
[ [5]शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम् । ]
[6]बीजाकृतं तूप्तकृष्टे, [7]सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
[8]त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
[9]द्विगुणाकृतं तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
[10]द्रोणाढकादिवापादौ द्रौणिकाऽऽढकिकादयः ।
[11]खारीवापस्तु खारीक, [12]उत्तमर्णादयस्त्रिषु ॥ १० ॥
[13]पुन्नपुंसकयोर्वप्रः केदारः, क्षेत्रमस्य तु ।

---

( १ ) व्रीहिसामान्यस्य तथा कलमाद्युत्पत्तियोग्यक्षेत्रस्यैकैकम् । [ गेहूँ, तथा धान होने योग्य क्षेत्र । ] ( २ ) यवाद्युत्पत्तियोग्यक्षेत्रस्यैकैकम् । [ जौ आदि होने योग्य क्षेत्र । ] ( ३ ) तिलाद्युत्पत्तियोग्यक्षेत्राणां क्रमेण द्वे द्वे नामनी । यथा— तिल्यं, तैलीनम् । माष्यम्, माषीणम् । उम्यम्, औमीनम् । अणव्यम्, आणवीनम् । भङ्ग्यम्, भाङ्गीनम् । [ तिल आदि होने योग्य क्षेत्र । ] ( ४ ) मुद्गानां भवनं क्षेत्रम् मौद्‍गीनम् । कोद्रवाणां भवनं क्षेत्रं कौद्रवीणम् । गोधूमानां भवनं क्षेत्रं गौधूमीनम् । कलायानां भवनं क्षेत्रं कालायीनम् । प्रियङ्गूनां भवनं क्षेत्रं प्रैयङ्गवीणम् । चणकानां भवनं क्षेत्रं चाणकीनम्, इत्यादि बोध्यम् । [ मूंग आदि होने योग्य क्षेत्र । ] ( ५ ) शाकक्षेत्रस्य नामद्वयम् । [ शाकक्षेत्र के २ नाम । ] ( ६ ) बीजवापोत्तरं कृष्टक्षेत्रस्य नामद्वयम् । [ बीज बोने के बाद जोता हुआ क्षेत्र के २ नाम । ] ( ७ ) कृष्टमात्रक्षेत्रस्य नामत्रयम् । [ जोता हुआ खेत के ३ नाम । ] ( ८ ) वारत्रयकृष्टस्य क्षेत्रस्य चत्वारि नामानि । [ तीन बार-जोता हुआ क्षेत्र के ४ नाम । ] ( ९ ) वारद्वयं कृष्टक्षेत्रस्य पञ्च नामानि । [ दो बार जोता हुआ क्षेत्र के ५ नाम । ] ( १० ) द्रोणादिपरिमितव्रीह्यादिवापयोग्यक्षेत्रस्य एकैकं नाम । तद्यथा द्रोणस्य वापः द्रौणिकः । आढकस्य वापः = आढकिकः । कुडवस्य वापः = कौडविकः । प्रस्थस्य वापः = प्रास्थिकः । [ द्रोणपरिमित बीज बोने योग्य आदि क्षेत्र के नाम । ] ( ११ ) खारीवापस्यैकम् । [ एकमन अन्न बोने योग्य खेत । ] ( १२ ) उत्तमर्णादयः खारीकान्ताः त्रिषु वाच्यलिङ्गा भवन्ति । [ उत्तमर्ण से खारीक पर्यन्त शब्द तीनों लिंगों में होते हैं । ] ( १३ ) क्षेत्रस्य त्रीणि नामानि । [ खेत के ३ नाम । ]

[1]कैदारकं स्यात्कैदार्यं क्षेत्रं केदारिकं गणे ॥ ११ ॥
[2]लोष्टानि लेष्टवः पुंसि, [3]कोटिशो लोष्ठभेदनः ।
[4]प्राजनं तोदनं तोत्रं, [5]खनित्रमवदारणम् ॥ १२ ॥
[6]दात्रं लवित्रमाबँन्धो योत्रं योक्त्रमथो [8]फलम् ।
निरीशं कुटकं फालः कृषिको, [9]लाङ्गलं हलम् ॥ १३ ॥
गोदारणं च सीरोऽथ [10]शम्या स्त्री युगकीलकः ।
[11]ईशा लाङ्गलदण्डः स्यात् [12]सीता लाङ्गलपद्धतिः ॥ १४ ॥
[13]पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने ।
[14]आशुर्व्रीहिः पाटलः स्यात् [15]सितशुकयवौ समौ ॥ १५ ॥
[16]तोक्मस्तु तत्र हरिते, [17]कलायस्तु सतीनकः ।
हरेणुखण्डिकौ चास्मिन्, [18]कोरदूषस्तु कोद्रवः ॥ १६ ॥
[19]मङ्गल्यको मसूरोऽथ [20]मकुष्ठक-मयुष्ठकौ ।
वनमुद्गे, [21]सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥ १७ ॥

( १ ) क्षेत्रसमूहस्य चत्वारि नामानि । [ खेतों के समूह के ४ नाम । ] ( २ ) मृत्तिकाखण्डस्य नामद्वयम् । [ मिट्टी का ढेला के २ नाम । ] ( ३ ) लोष्टभेदनकाष्ठस्य नामद्वयम् । [ हेगा, मोगरी के २ नाम । ] ( ४ ) वृषभादि-प्रेरणदण्डस्य नामत्रयम् । [ बेत, चाबुक के ३ नाम । ] ( ५ ) कुद्दालादेर्नाम-द्वयम् । [ कुदाल, कुदाली, कुटला के २ नाम । ] ( ६ ) लवित्रस्य नामद्वयम् । [ दरांती, दातुली के २ नाम । ] ( ७ ) वृषादेर्गलयुगबन्धनस्य नामत्रयम् । [ जुआ बांधने की रस्सी के ३ नाम । ] ( ८ ) हलस्य फलस्य पञ्च नामानि । [ हल के फाल के ५ नाम । ] ( ९ ) हलस्य चत्वारि नामानि । [ हल के ४ नाम । ] ( १० ) युगकीलस्य नामद्वयम् । [ जुआ की कील के २ नाम । ] ( ११ ) हलयुगयोर्मध्यकाष्ठस्य नामद्वयम् । [ बैलों के कन्धा पर रखने वाला जुआ के २ नाम । ] ( १२ ) लाङ्गलपद्धतेस्त्रीणि नामानि । [ सीता-सिया के ३ नाम । ] ( १३ ) धान्यखले पशुबन्धनस्तम्भस्यैकम् । [ मेढ । ] ( १४ ) षष्टिकादेस्त्रीणि नामानि । [ सांठी आदि के ३ नाम । ] ( १५ ) यवानां नाम-द्वयम् । [ जौ के २ नाम । ] ( १६ ) अपक्वयवस्यैकम् । [ हरा जौ । ] ( १७ ) कलायस्य चत्वारि नामानि । [ मटर के ४ नाम । ] ( १८ ) कोद्रवस्य नामद्वयम् । [ कोदों के २ नाम । ] ( १९ ) मसूरस्य द्वे नामनी । [ मसूर के २ नाम । ] ( २० ) वनमुद्गस्य नामत्रयम् । [ मोठ के ३ नाम । ] ( २१ ) सर्षपस्य नामत्रयम् । [ सरसों के ३ नाम । ]

[1]सिद्धार्थस्त्वेष धवलो, [2]गोधूमः सुमनः समौ।
[3]स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः॥ १८॥
[5]द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले।
[6]क्षवः क्षुताभिजननो राजिका कृष्णिकाऽऽसुरी॥ १९॥
[7]स्त्रियौ कङ्गुप्रियङ्गू द्वे, [8]अतसी स्यादुमा क्षुमा।
[9]मातुलानी तु भङ्गायां, [10]व्रीहिभेदस्त्वणुः पुमान्॥ २०॥
[11]किंशारुः शस्यशूकं स्यात् [12]कणिशं शस्यमञ्जरी।
[13]धान्यं व्रीहिःस्तम्बकरिः [14]स्तम्बो गुच्छस्तृणादिनः॥ २१॥
[15]नाडी नालं च काण्डोऽस्य, [16]पलालोऽस्त्री स निष्फलः।
[17]कडङ्गरो बुसं क्लीबे, [18]धान्यत्वचि तुषः पुमान्॥ २२॥

---

( १ ) गौरसर्षपस्यैकम्। [ पीली सरसों। ] ( २ ) गोधूमस्य नामद्वयम्। [ गेहूँ के २ नाम। ] ( ३ ) कुल्माषस्य नामद्वयम्। [ छोला, घुघुरी के २ नाम। ] ( ४ ) चणकस्य नामद्वयम्। [ चना के २ नाम। ] ( ५ ) तैलरहित-तिलस्य नामद्वयम्। [ तेलरहित तिल के २ नाम। ] ( ६ ) राजिकायाः पञ्च नामानि। [ राई के ५ नाम। ] ( ७ ) प्रियङ्गोर्नामद्वयम्। तत्र कङ्कुशब्द-ऊकारान्तोऽपि दृश्यते। [ कगुनी के २ नाम। ] ( ८ ) अतस्यास्त्रीणि नामानि। [ तीसी, अलसी के ३ नाम। ] ( ९ ) भङ्गाया नामत्रयम्। [भांग के २ नाम। ] ( १० ) अणुव्रीहिभेदस्यैकम्। [ चीना। ] ( ११ ) यवाद्यग्रभागस्य नामद्वयम्। [ जौ के टूस के २ नाम। ] ( १२ ) धान्यमञ्जर्या नामद्वयम्। [ धान की बाल के २ नाम। ] ( १३ ) धान्यसामान्यस्य नामत्रयम्। [ सामान्यधान्य के ३ नाम। ] तत्र व्रीहिः, स्तम्बकरिः च पुंसि। धान्यभेदाः—

'व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणकाः।
अणवः प्रियङ्गुकोद्रवमकुष्ठकाः शालिकाढ्यः॥
किञ्च कलायकुलत्थौ शणश्च सप्तदश धान्यानि।' इति मुकुटः।

( १४ ) यवादिमूलस्य नामद्वयम्। [ जौ आदि के जड़ के २ नाम। ] आदिना व्रीहियवादिग्रहः। ( १५ ) तृणादिकाण्डस्य नामत्रयम्। [ डंठल के ३ नाम। ] ( १६ ) फलरहितकाण्डस्यैकम्। [पुआल।] ( १७ ) बुसस्य नामद्वयम्। [ भूसा के २ नाम। ] ( १८ ) धान्यत्वचो नामद्वयम्। [ भूसी, चोकर के २ नाम। ]

[1]शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे, [2]शमी शिम्बा त्रिषूत्तरे ।
[3]ऋद्धमावसितं धान्यं, [4]पूतन्तु बहुलीकृतम् ॥ २३ ॥
[5]माषादयः शमीधान्ये, [6]शूकधान्ये यवादयः ।
[7]शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥
[8]तृणधान्यानि नीवाराः, [9]स्त्री गवेधुर्गवेधुका ।
[10]अयोग्रं मुसलोऽस्त्री [11]स्यादुदूखलमुलूखलम् ॥ २५ ॥
[12]प्रस्फोटनं शूर्पमस्त्री, [13]चालनी तितउः पुमान् ।
[14]स्यूतप्रसेवौ [15]कण्डोलपिटौ, [16]कटकिलिञ्जकौ ॥ २६ ॥
समानौ [17]रसवत्यान्तु पाकस्थानमहानसे ।

---

( १ ) शूकधान्यस्य नामद्वयम् । [शूकधान्य के २ नाम । ] ( २ ) शिम्बाया नामद्वयम् । [ छीमी, सीमी, सेम के २ नाम । ] उड़द, मटर, सेम आदि सभी शिम्बी धान्य कहे जाते हैं। ( ३ ) मर्दितापनीततृणस्य धान्यराशेर्नामद्वयम् । [ साफ किये हुए धान्य के २ नाम । ] ( ४ ) तुषापनयनानन्तरं राशीकृतस्य धान्यस्य नामद्वयम् । [ धान्य समूह के २ नाम । ] ( ५ ) माषादिशमीधान्यस्यैकम् । [ शमीधान्य । ] यथा—

'माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः ।
कलायस्तूवर इति शमीधान्यगणः स्मृतः' ॥ इति रत्नकोषे ॥

( ६ ) यवगोधूमादिशूकधान्यस्यैकम् । [ शूकधान्य । ] ( ७ ) शाल्यादीनामेकं नाम । 'षष्टिकाः षष्टिरात्रेण पच्यन्ते', इति । अमी माषाद्याः पुंसि । [ साठी ] ( ८ ) तृणधान्यस्य नामद्वयम् । [ नीवार के २ नाम । ] ( ९ ) मुन्यन्नविशेषस्य नामद्वयम् । [ मुनिअन्न के २ नाम । ] ( १० ) मुसलस्य नामद्वयम् । [ मुसल के २ नाम । ] ( ११ ) उलूखलस्य नामद्वयम् । [ ऊखल के २ नाम । ] ( १२ ) शूर्पस्य द्वे नामनी । [ सूप, छाज के २ नाम । ] ( १३ ) चालन्या नामद्वयम् । [ चलनी के २ नाम । ] ( १४ ) शणादिनिर्मितप्रसेवस्य नामद्वयम् । [ बोरा, थैला के २ नाम । ] ( १५ ) वंशवेतसादिनिर्मितभाण्डस्य नामद्वयम् । [ दौरी, डलिया, टोपरी, पिटारी, के २ नाम । ] ( १६ ) कटस्य नामद्वयम् । [ चटाई के २ नाम । ] ( १७ ) रसवत्यास्त्रीणि नामानि । [ रसोईघर के ३ नाम । ]

[1]पौरोगवस्तदध्यक्षः, [2]सूपकारास्तु बल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।
[3]आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥
[4]अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।
[5]अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥
हसन्यप्यथ न स्त्री [6]स्यादङ्गारो[7]ऽलातमुल्मुकम् ।
[8]क्लीबेऽम्बरीषं भ्राष्ट्रो, [9]ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥
[10]अलिञ्जरः स्यान्मणिकः, [11]कर्कर्यालुर्गलन्तिका ।
[12]पिठरः स्थाल्युखा कुण्डं, [13]कलशस्तु त्रिषु द्वयोः ॥ ३१ ॥
घटः कुटनिपावस्त्री [14]शरावो वर्धमानकः ।
[15]ऋजीषं पिष्टपचनं, [16]कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥
[17]कुतूः कृत्तेः स्नेहपात्रं [18]सैवाऽल्पा कुतुपः पुमान् ।
[19]सर्वमावपनं भाण्डं पात्राऽमत्रं च भाजनम् ॥ ३३ ॥

---

( १ ) महानसाधिपतेर्नामद्वयम् । [ रसोईघर के स्वामी के २ नाम । ] ( २ ) पाककर्तुः सप्त नामानि । तत्र आद्यद्वयं नाम व्यञ्जनकर्तुरिति, 'स्वामी' । [ रसोइया के ७ नाम । ] ( ३ ) आपूपिकस्य नामत्रयम् । [ हलवाई के ३ नाम । ] ( ४ ) अधिश्रयिण्याः पञ्च नामानि । [ चूल्हा के ५ नाम । ] ( ५ ) अङ्गारधानिकायाः चत्वारि नामानि । [ सग्गड़, बोरसी के ४ नाम । ] ( ६ ) अङ्गारस्यैकम् । [ अंगार । ] ( ७ ) अर्धदग्धकाष्ठस्य नामद्वयम् । [ अधजली लकड़ी के २ नाम । ] ( ८ ) भ्राष्ट्रस्य नामद्वयम् । [ भाड़ के २ नाम । ] ( ९ ) मद्यनिर्माणयोग्यलौहपात्रस्य नामद्वयम् । तत्र कन्दुः स्त्रियां पुंसि च । स्वेदनी स्त्रियां, स्वेदनः पुंसि, इति मुकुटः । [ भबका के २ नाम । ] ( १० ) महाघटस्य नामद्वयम् । [ कमोरा, मांट, मटका के २ नाम । ] ( ११ ) गलन्तिकायास्त्रीणि नामानि । [झंझर, सुराही, करवा के नाम । ] ( १२ ) स्थाल्याश्चत्वारि नामानि । [ बटलोही के ४ नाम । ] ( १३ ) घटस्य चत्वारि नामानि । तत्र कलशस्त्रिषु । दन्त्यान्तोऽपि कलसः । [ घड़ा के ४ नाम । ] ( १४ ) शरावस्य नामद्वयम् । [ परई, पुरवा, के २ नाम । ] ( १५ ) पिष्टपचनस्य नामद्वयम् । [ तवा के २ नाम । ] ( १६ ) कंसस्य नामद्वयम् । [ कटोरा के २ नाम । ] ( १७ ) चर्मनिर्मिततैलपात्रस्य नामद्वयम् । [ कुप्पा के २ नाम । ] ( १८ ) कुतुपस्यैकं पुंसि । [कुप्पी ।] ( १९ ) भाजनस्य पञ्च नामानि । [ बर्तन, वासन, पात्र के ५ नाम । ]

[1]दर्विः कम्बिः खजाका च, [2]स्यात्तर्दूर्दारुहस्तकः।
[3]अस्त्री शाकं हरितकं शिग्रु[4]रस्य तु नाडिका॥ ३४॥
कलम्बश्च कडम्बश्च, [5]वेसवार उपस्करः।
[6]तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ [7]वेल्लजम्॥ ३५॥
मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम्।
[8]जीरको जरणोऽजाजी कणा, [9]कृष्णे तु जीरके॥ ३६॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका।
[10]आर्द्रकं शृङ्गवेरं स्यादथ [11]छत्त्रा वितुन्नकम्॥ ३७॥
कुस्तुम्बुरु च धान्याकमथ [12]शुण्ठी महौषधम्।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम्॥ ३८॥
[13]आरनालकसौवीरकुल्माषाऽभिषुतानि च।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके॥ ३९॥

---

( १ ) दर्व्या नामत्रयम्। [ करछुल, डाडू के ३ नाम। ] ( २ ) दर्वि-विशेषस्य नामद्वयम्। [ पलटा, पौना, पणियाँ के २ नाम। ] ( ३ ) वास्तुकादिशाकस्य नामत्रयम्। शाकम् अस्त्री। [ शाक के ३ नाम। ] ( ४ ) शाकनालस्य नामद्वयम्। [ शाक के डंठल के २ नाम। ] ( ५ ) पाकसंस्कारार्थं प्रयुज्यमानस्य हिङ्ग्वादेर्नामद्वयम्। [ छोंकन के २ नाम ] तत्र-हिङ्गुजीरकहरिद्राधान्याकशुण्ठीसर्षपादेरिति, मुकुटः। केचिच्च—विंशति पलानि हरिद्रायाः, दशपलानि धान्याकस्य, पञ्च पलानि जीरकस्य, सार्द्धद्वयपलं मेथिकायाः, भर्जितमेवैतच्चतुष्टयं ग्राह्यम्। पलत्रयं मरिचस्य, पलार्द्धं रामठस्य च संयोज्य वेसवार इत्युच्यते। तद्यथा आत्रेय संहितायाम्—

'चित्रकं पिप्पलीमूलं पिप्पलीचव्यनागरम्। धान्याकं रजनीश्वेततण्डुलाश्च समांशकाः॥
वेसवार इति ख्यातः शाकादिषु नियोजयेत्'। इति।

( ६ ) अम्लभेदस्य तिन्तिडीकस्य नामत्रयम्। [ चूका के ३ नाम। ] ( ७ ) मरिचस्य षड् नामानि। [ मरिच के ६ नाम। ] ( ८ ) जीरकस्य नामचतुष्टयम्। [ जीरा के ४ नाम। ] ( ९ ) कृष्णजीरकस्य षड् नामानि। [ कालाजीरा के ६ नाम। ] ( १० ) आर्द्रकस्य नामद्वयम्। [ अदरख के २ नाम। ] ( ११ ) धान्याकस्य चत्वारि नामानि। [ धनियां के ४ नाम। ] ( १२ ) शुण्ठ्याः पञ्च नामानि। [ सोंठ के ५ नाम। ] ( १३ ) काञ्जिकस्य अष्टौ नामानि। [ कांजी के ८ नाम। ] यथाह धन्वन्तरिः—

[1]सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ।
[2]तत्पत्त्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥
[3]निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।
[4]सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ॥ ४१ ॥
[5]सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ।
[6]रौमकं वसुकं, [7]पाक्यं विडञ्च कृतके द्वयम् ॥ ४२ ॥
[8]सौवर्चलेऽक्षरुचके, [9]तिलकं तत्र मेचके ।
[10]मत्स्यण्डी फाणितं खण्डविकारे, [11]शर्करा सिता ॥ ४३ ॥
[12]कूर्चिका क्षीरविकृतिः [13]स्याद्रसाला तु मार्जिता ।
[[14]दध्ना सह पयः पक्वं यत्तत्स्याद्दधिकूर्चिका ।

---

'काञ्चिकं काञ्जिकं वीरं कुल्माषाभिषुतं तथा ।
अवन्तिसोमं धान्याम्लमारनालं महारसम् ॥
सौवीरञ्च सुवीराम्लं तथा शुक्लं तुषोदकम् ॥ इति ।

( १ ) हिङ्गुवृक्षनिर्यासस्य पञ्च नामानि । [ हींग के ५ नाम । ] ( २ ) हिङ्गुपत्र्याः पञ्च नामानि । त्वक्पत्रीति पाठभेदः क्वचित् । यथा—'तत्पत्री त्वचमाख्यातं त्वक्पत्रीकारवीति च' । इति रुद्रः । [ हिगु पत्री के ५ नाम । ] ( ३ ) हरिद्रायाः पञ्च नामानि । [ हल्दी के ५ नाम । ] ( ४ ) सामुद्रलवणस्य नामद्वयम् । [ सामुद्रलवण । ] ( ५ ) सैन्धवलवणस्य नामचतुष्टयम् । [सैन्धवलवण। ] ( ६ ) शाकम्भरीलवणस्य नामद्वयम् । [ साँभर नमक के २ नाम । ] ( ७ ) कृतकलवणस्य नामद्वयम् । [ खारी नमक के २ नाम । ] ( ८ ) सौवर्चललवणस्य नामत्रयम् । [ सौंचरनमक के ३ नाम । ] ( ९ ) कृष्णवर्णवतः सौवर्चललवणस्यैकम् । [ कालानमक । ] ( १० ) मत्स्यण्ड्या नामत्रयम् । [ राब के ३ नाम । ] ( ११ ) शर्कराया नामद्वयम् । [ चीनी के ३ नाम । ] ( १२ ) किलाटिकाया नामद्वयम् । [ खोवा, मावा के २ नाम । ] तत्र विशेषः—

कूर्चिका सूचिकायां च तूलिकायाञ्च कुड्मले ।
कपाटाकुटिके क्षीरविकृतावपि योषिति' ॥ इति मेदिनी ।

( १३ ) रसालाया नामद्वयम् । [ सिखरन के २ नाम । ] ( १४ ) दधिकूर्चिकाया एकं नाम । [ दही के साथ पकाया गया दूध । ]

[1]तक्रेण पक्वं यत्क्षीरं सा भवेत् तक्रकूर्चिका ॥ ]
[2]स्यात्तेमनन्तु निष्ठानं, त्रिलिङ्गा वासितावधेः ॥ ४४ ॥
[3]शूलाकृतं भटित्रं स्याच्छूल्यमुख्यन्तु पैठरम् ।
[5]प्रणीतमुपसम्पन्नं, [6]प्रयस्तं स्यात् सुसंस्कृतम् ॥ ४५ ॥
[7]स्यात्पिच्छिलं तु विजिलं, [8]संमृष्टं शोधितं समे ।
[9]चिक्कणं मसृणं स्निग्धं, तुल्ये [10]भावितवासिते ॥ ४६ ॥
[11]आपक्वं पौलिरभ्यूषो, [12]लाजाः पुम्भूम्नि चाक्षताः ।
[13]पृथुकः स्याच्चिपिटको, [14]धाना भृष्टयवे स्त्रियः ॥ ४७ ॥
[15]पूपोऽपूपः पिष्टकः स्यात् [16]करम्भो दधिसक्तवः ।
[17]भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ॥ ४८ ॥
[18]भिस्सटा दग्धिका, [19]सर्वरसाग्रे मण्डमस्त्रियाम् ।

---

( १ ) तक्रकूर्चिकाया एकं नाम । [ मठा के साथ पकाया गया दूध ] ( २ ) व्यञ्जनस्य नामद्वयम् । [ पकाये भोजन के २ नाम । ] वासित-शब्दपर्यन्ताः शब्दास्त्रिलिङ्गाः । ( ३ ) लोहशलाकया पक्वमांसस्य नामत्रयम् । [ मांस के पकौड़े के ३ नाम । ] ( ४ ) स्थाल्यां पक्वस्यान्नादेः नामद्वयम् । [ बटलोई में पकाये अन्न के ३ नाम । ] ( ५ ) पक्वव्यञ्जनस्य नामद्वयम् । [ भलीभांति पकाये हुए भोजन के २ नाम । ] ( ६ ) सुसंस्कृत व्यञ्जनादे-र्नामद्वयम् । [ भली भांति पकाये हुए भोजन के २ नाम । ] ( ७ ) मण्डयुक्त-भक्तस्य जलयुक्तव्यञ्जनस्य च नामद्वयम् । [ मांडवाले भात तथा जलवाले व्यञ्जन के २ नाम । ] ( ८ ) परिसाधितस्यान्नस्य नामद्वयम् । [ साफ किया हुआ अन्न के २ नाम । ] ( ९ ) चिक्कणस्य नामत्रयम् । [ चिकना के ३ नाम । ] ( १० ) सुवासितपदार्थस्य नामद्वयम् । [ सुगन्धित किया हुआ पदार्थ के २ नाम । ] ( ११ ) भर्जितहरितयवादेस्त्रीणि नामानि । [उबी, उमी के ३ नाम । ] ( १२ ) भृष्टव्रीह्यादेर्नामद्वयम् । [लावा, के २ नाम ।] ( १३ ) चिपिटकस्य नाम-द्वयम् । [ च्यूड़ा, चिउड़ा के २ नाम । ] ( १४ ) भर्जितयवानां नामद्वयम् । [ भुने जौ के २ नाम । ] ( १५ ) अपूपस्य नामत्रयम् । [ पूआ या मालपूआ के ३ नाम । ] ( १६ ) दधिमिश्रितसक्तूनां नामद्वयम् । [दही मिले सत्तू के २ नाम । ] ( १७ ) भक्तस्य षड् नामानि । अन्धस् शब्दः सान्तं नपुंसके । [ भात के ६ नाम । ] ( १८ ) दग्धौदनस्य नामद्वयम् । [ जले हुए भात के २ नाम । ] ( १९ ) मण्डकस्य नामद्वयम् । [ पेय, के २ नाम । ]

[1]मासराऽऽचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
[2]यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
[ [3]म्रक्षणाभ्यञ्जने तैलं, [4]कृसरस्तु तिलौदनः । ]
[5]गव्यं त्रिषु गवां सर्वं, [6]गोविड् गोमयमस्त्रियाम् ॥ ५० ॥
[7]तत्तु शुष्कं करीषोऽस्त्री, [8]दुग्धं क्षीरं पयः समम् ।
[9]पयस्यमाज्यदध्यादि, [10]द्रप्सं दधि घनेतरत् ॥ ५१ ॥
[11]घृतमाज्यं हविः [12]सर्पिर्नवनीतं नवोद्धृतम् ।
[13]तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ॥
[14]दण्डाहतं कालशेयमरिष्टमपि गोरसः ।
[15]तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥
[16]मण्डं दधि भवं मस्तु, [17]पीयूषोऽभिनवम्पयः ।
[18]अशनाया बुभुक्षा क्षुद्, [19]ग्रासस्तु कवलः पुमान् ॥ ५४ ॥

---

( १ ) भक्तमण्डस्य नामत्रयम् । [ भात का माँड़ के ३ नाम । ] ( २ ) यवाग्वाः पञ्च नामानि । [ लपसी के ५ नाम । ] ( ३ ) तैलस्य नामत्रयम् । [ तेल के ३ नाम । ] ( ४ ) तिलौदनस्य नामद्वयम् । [ तिल-भात के २ नाम । ] ( ५ ) गवां सर्वं पदार्थं गव्यं कथ्यते तत् त्रिषु प्रयुज्यते । [ गोरस । ] ( ६ ) गोमयस्य नामद्वयम् । [ गोबर के २ नाम । ] ( ७ ) शुष्कं गोमयं करीषः । [ गोहरी, गुइठा, गोप्टाला । ] ( ८ ) दुग्धस्य नामत्रयम् । पयस् शब्दः सान्तं क्लीबे । [ दूध के ३ नाम ] ( ९ ) घृतदध्यादेरेकम् नाम 'पयस्यम्' । [ पयस्य ] ( १० ) द्रवरूपदध्न एकम् । अत्र 'द्रप्स' स्थाने 'सरम्' इति पाठः क्वचित् । ( ११ ) घृतस्य चत्वारि नामानि । [ घी के ४ नाथ । ] ( १२ ) नवोद्धृतघृतस्यैकम् । [ नवनीत, मक्खन । ] ( १३ ) हैयङ्गवीनस्यैकं [ एक रात के वासी दही से निकाला घी । ] कालिदासादयो हैयङ्गवीनशब्देन नवनीतं मन्वते । तद् यथा—'हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्' । इति रघु० । [ नौनी, नौणी । ] ( १४ ) सामान्यतक्रस्य नामचतुष्टयम् । [ मठा, छाछ, छाँस के ४ नाम । ] ( १५ ) चतुर्थांशजलयुक्तं तक्रम् । अर्धजलम् उदश्वित् । निर्जलम् मथितम् । [ विशेषप्रकार का मठा । ] ( १६ ) वस्त्रपरिस्रुतदधिजलस्यैकम् । [ दही का पानी । ] ( १७ ) नवप्रसूताया गोः पयसो नामैकम् । [ पीयूष । ] ( १८ ) भोक्तुमिच्छाया नामत्रयम् । क्षुत् धान्ता । [ भूख के ३ नाम । ] ( १९ ) कवलस्य नामद्वयम् । [ कवल, कौर, ग्रास के २ नाम । ]

[1]सपीतिः स्त्री तुल्यपानं, [2]सग्धिः स्त्री सहभोजनम् ।
[3]उदन्या तु पिपासा तृट् तर्षो, [4]जग्धिस्तु भोजनम् ॥ ५५ ॥
जेमनं लेह आहारो निघासो न्याद इत्यपि ।
[5]सौहित्यं तर्पणं तृप्तिः, [6]फेला भुक्तसमुज्झितम् ॥ ५६ ॥
[7]कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
[8]गोपे गोपाल-गोसङ्ख्य-गोधुगाभीर-वल्लवाः ॥ ५७ ॥
[9]गोमहिष्यादिकं पादबन्धनं, [10]द्वौ गवीश्वरे ।
गोमान् गोमी, [11]गोकुलन्तु गोधनं स्याद् गवां व्रजे ॥ ५८ ॥
[12]त्रिष्वाशितङ्गवीनं तद् गावो यत्राशिताः पुरा ।
[13]उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥
अनड्वान् सौरभेयो [14]गौरुक्ष्णां संहतिरौक्षकम् ।
[15]गव्या गोत्रा गवां [16]वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥
[17]वृषो महान् महोक्षः [18]स्याद्वृद्धोक्षस्तु जरद्गवः ।

( १ ) सहपानस्य नामद्वयम् । [ सहपान के २ नाम । ] ( २ ) सहभोजनस्य नामद्वयम् । [ सहभोजन के २ नाम । ] ( ३ ) पिपासायाश्चत्वारि नामानि । तृट् षान्ता । [प्यास, तीस, तृषा के ४ नाम । ] ( ४ ) भोजनस्य सप्त नामानि । [ भोजन के ७ नाम । ] ( ५ ) तृप्तेस्त्रीणि नामानि । [ भोजन से तृप्ति के ३ नाम । ] ( ६ ) भुक्तसमुज्झितस्य नामद्वयम् । [ जूठा, जूठन के २ नाम । ] ( ७ ) पर्याप्तस्य षड्नामानि । [ पर्याप्त, भरपूर के ६ नाम । ] ( ८ ) गोपस्य षड् नामानि । [ ग्वाला के ६ नाम । ] ( ९ ) गोमहिष्यादेरेकैकम् । 'यादवं धनम्' इति पाठे तु गोमहिष्यादिः यादवानां धनम्भवतीति तात्पर्य. । आदिपदेन खराजाविकादिग्रहणम् । [ गाय-भैंस । ] ( १० ) गोस्वामिनो नामद्वयम् । [ गाय का स्वामी ] ( ११ ) गोसमूहस्य नामद्वयम् । [ गायों के समूह का २ नाम । ] ( १२ ) पूर्वं गोचरभूमेः । [ पुरानी गोचरभूमि । ] ( १३ ) वृषभस्य नव नामानि । [ बैल के ९ नाम । ] उक्षा नान्तः । अनड्वान् हान्तः । ( १४ ) वृषसमूहस्यैकम् । [ बैलों का समूह । ] ( १५ ) गवां समूहस्य नामद्वयम् । [ गायों के समूह के २ नाम । ] ( १६ ) वत्सधेनुसमूहस्यैकम् । [ बछड़ों तथा धेनु के समूह का नाम । ] ( १७ ) महान् वृषो महोक्षः । [ बड़ा बैल । ] ( १८ ) वृद्धवृषभस्य नाम जरद्गवः । [ बूढ़ा बैल । ]

[1]उत्पन्न उक्षाः जातोक्षः [2]सद्यो जातस्तु तर्णकः ॥ ६१ ॥
[3]शकृत्करिस्तु वत्सः [4]स्यादम्यवत्सतरौ समौ ।
[5]आर्षभ्यः षण्डतायोग्यः, [6]षण्डो गोपतिरिट्चरः ॥ ६२ ॥
[7]स्कन्धदेशे त्वस्य वहः, [8]सास्ना तु गलकम्बलः ।
[9]स्यान्नस्तितस्तु नस्योतः, [10]प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥
[11]युगादीनां तु वोढारो युग्य-प्रासङ्ग्य-शाकटाः ।
[12]खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ ॥ ६४ ॥
[13]धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः ।
[14]उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
[15]स तु सर्वधुरीणः स्याद्यो वै सर्वधुरावहः ।
[16]माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥
अर्जुन्यघ्न्या रोहिणी [17]स्यादुत्तमा गोषु नैचिकी ।

---

( १ ) यूनोवृषभस्यैकम् । [ जवान बैल । ] ( २ ) सद्योजातगोवत्सस्यैकम् । [ नवजात बछड़ा । ] ( ३ ) वत्सस्य नामद्वयम् । [ बछड़ा के २ नाम । ] ( ४ ) प्राप्तयौवनावस्थस्य वृषभस्य नामद्वयम् । [ जवान सांड । ] ( ५ ) लब्धतारुण्यस्य गोवत्सस्यैकम् । [ जवान गाय का बछड़ा । ] ( ६ ) षण्डस्य नामत्रयम् । 'पण्डं पद्मादिसङ्घाते न स्त्री स्याद् गोपतौ पुमान्' । इति मेदिनी । अत्र पण्डशब्दो मूर्धन्यादिः डान्तश्च । 'षण्डः स्यात् पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि' । इति मेदिनी । [ सांड के ३ नाम । ] ( ७ ) वृषभस्कन्धदेशस्थमांसपिण्डस्यैकम् । [ जूड़ा । ] ( ८ ) गलकम्बलस्य नामद्वयम् । सास्ना स्त्रियाम् । [ गले की झालर के २ नाम । ] ( ९ ) नासारज्जुपिनद्धस्य वृषभस्य नामद्वयम् । [ नकेल वाले सांड़ के २ नाम । ] ( १० ) दमनकाले कण्ठारोपितकाष्ठस्य नामद्वयम् । [ जुआ के २ नाम । ] ( ११ ) युगं वहति—[ युग्यः ] । प्रासङ्गं वहति—[ प्रासङ्ग्यः ] शकटं बहति—[ शाकटः । ] ( १२ ) हलेन खनति, हलं वहति, हलस्य अयं वा [ हालिकः ] सीरेण खनति, सीरं वहति, सीरस्य अयं वा [ सैरिकः । ] ( १३ ) धुरन्धरस्य वृषस्य पञ्च नामानि । [ हल या गाड़ी में अकेले जोते जाना वाला बैल के ५ नाम । ] ( १४ ) एकधुरावहस्य वृषभस्य नामत्रयम् । [ एक ओर के भार को ढोने वाले बैल के ३ नाम । ] ( १५ ) सर्वधुरीणस्य नामद्वयम् । [ सब प्रकार के भार को ढोने वाले वैल के २ नाम । ] ( १६ ) धेनोर्नव नामानि । [ गाय के ९ नाम । ] ( १७ ) उत्तमाया गोरेकं नाम । [ उत्तम गाय । ]

[1]वर्णादिभेदात् संज्ञाः स्युः शबली-धवलादयः ॥ ६७ ॥
[2]द्विहायनी द्विवर्षा [3]गौरेकाब्दा त्वेकहायनी ।
[4]चतुरब्दा चतुर्हायण्येवं [5]त्र्यब्दा त्रिहायणी ॥ ६८ ॥
[6]वशा वन्ध्याऽवतोका [7]तु स्रवद्गर्भाऽथ [8]सन्धिनी ।
आक्रान्ता वृषभेणाऽथ [9]वेहद्गर्भोपघातिनी ॥ ६९ ॥
[10]काल्योपसर्या प्रजने, [11]प्रष्ठौही बालगर्भिणी ।
[12]स्यादचण्डी तु सुकरा, [13]बहुसूतिः परेष्टुका ॥ ७० ॥
[14]चिरप्रसूता बष्कयणी, [15]धेनुः स्यान्नवसूतिका ।
[16]सुव्रता सुखसन्दोह्या, [17]पीनोध्नी पीवरस्तनी ॥ ७१ ॥
[18]द्रोणक्षीरा द्रोणदुग्धा, [19]धेनुष्या बन्धके स्थिता ।

---

( १ ) वर्णादिभेदात् तासां नामानि—शबली, धवला, कपिला, पाटला । प्रमाणभेदात्–उन्नता, दीर्घा, ह्रस्वा, खर्वा, नामानि । अङ्ग भेदात्–पिङ्गाक्षी, वक्र-शृङ्गी, दीर्घपृष्ठा, एवमेव देशभेदादप्यनुसन्धेयम् । [काली, धौरी आदि । ] ( २ ) द्विवर्षाया गोर्नामद्वयम् । [दो साल की गाय के २ नाम । ] ( ३ ) एकवर्षाया गो-र्नामद्वयम् । [ एक वर्ष की गाय के २ नाम । ] ( ४ ) चतुर्वर्षाया गोर्नामद्वयम् । [ चार वर्ष की गाय के २ नाम । ] ( ५ ) त्रिवर्षाया गोर्नामद्वयम् । [ तीन वर्ष की गाय के २ नाम । ] ( ६ ) वन्ध्याया गोर्नामद्वयम् । [बाँझ गाय के २ नाम ।] ( ७ ) स्रवद्गर्भाया गोर्नामद्वयम् । [ गर्भपात हुई गाय के २ नाम । ] ( ८ ) वृषभेण आक्रान्ताया गोरेकम् । कृतमैथुनाया इत्याशयः । [ गाभिन गाय । ] ( ९ ) गर्भोपघातिन्या नामद्वयम् । [ गर्भ को गिरा देने वाली गाय के २ नाम । ] ( १० ) गर्भग्रहणयोग्याया गोरेकं नाम । [ गाभिन होने योग्य । ] ( ११ ) प्रथमवारं धृतगर्भाया धेनोः नामद्वयम् । [ प्रथम बार गाभिन हुई गाय के २ नाम । ] ( १२ ) अक्रोधनाया धेनोर्नामद्वयम् । [ सीधी-साधी गाय के २ नाम । ] ( १३ ) बहुवारं प्रसूताया द्वे नामनी । [ अनेक बार ब्यायी गाय के २ नाम । ] ( १४ ) चिरप्रसूताया धेनोर्नामद्वयम् । [ बकेन, बाखड़ गाय के २ नाम । ] ( १५ ) नवप्रसूताया धेनोर्नामद्वयम् । [ हाल ही में ब्यायी गाय के २ नाम । ] ( १६ ) सुखदोह्याया धेनोर्नामद्वयम् । [ सुख से दूध देनेवाली गाय के २ नाम । ] ( १७ ) पीवरस्तन्या नामद्वयम् । [ मोटे स्तन वाली गाय के २ नाम । ] ( १८ ) द्रोणदुग्धाया नामद्वयम् । [ १० सेर दूध देने वाली गाय के २ नाम । ] ( १९ ) बन्धकस्थिताया धेनोरेकम् । [ बन्धक रखी हुयी गाय । ]

[1]समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥
[2]ऊधस्तु क्लीबमापीनं, [3]समौ शिवककीलकौ ।
[4]न पुंसि दाम सन्दानं, [5]पशुरज्जुस्तु दामनी ॥ ७३ ॥
[6]वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।
[7]कुठरो दण्डविष्कम्भो, [8]मन्थनी गर्गरी समे ॥ ७४ ॥
[9]उष्ट्रे क्रमेलकमयमहाङ्गाः, [10]करभः शिशुः ।
[11]करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥
[12]अजा छागी, [13]स्तभच्छागवस्तच्छगलका अजे ।
[14]मेढोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
[15]उष्ट्रोरभ्रोऽजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
[16]चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥

---

( १ ) प्रतिवर्षं प्रसवित्र्या धेनोरेकम् । [ प्रतिवर्ष बच्चा देने वाली गाय । ] ( २ ) दुग्धाशयस्य नामद्वयम् । [ थन के २ नाम । ] ( ३ ) कीलकस्य नामद्वयम् । [ खूँटा के २ नाम । ] ( ४ ) गोदोहनकाले पादबन्धनरज्जोर्नामद्वयम् । [ दूध दुहते समय गाय के पैर बाँधने वाली रस्सी के २ नाम । ] ( ५ ) पशुबन्धनरज्वा नामद्वयम् । [ जानवरों को बाँधने वाली रस्सी के २ नाम । ] ( ६ ) मन्थदण्डस्य पञ्च नामानि । [ मथानी के ५ नाम । ] ( ७ ) मन्थबन्धनकाष्ठस्य किंवा मन्थदण्डधारककाष्ठस्यैकम् । [ मथानी बाँधने वाला काष्ठ । ] ( ८ ) मन्थनपात्रस्य नामद्वयम् । [ दही मथने के पात्र के २ नाम । ] ( ९ ) उष्ट्रस्य चत्वारि नामानि । [ ऊँट के ४ नाम । ] ( १० ) उष्ट्रशिशोरेकं नाम । [ ऊँट का बच्चा । ] ( ११ ) काष्ठयन्त्रशृङ्खलादिबद्धस्य करभस्य नाम । ( १२ ) अजाया नामद्वयम् । [ बकरी के ३ नाम । ] ( १३ ) अजस्य पञ्च नामानि । [ बकरा के ५ नाम । ] ( १४ ) मेषस्य सप्त नामानि । [ भेड़ा के ७ नाम । ] ( १५ ) उष्ट्रादिवृन्दस्यैकैकम् । तद्यथा—उष्ट्राणां समूहः—औष्ट्रकम् । उरभ्राणां समूहः—औरभ्रकम् । अजानां समूहः—आजकम् । [ ऊँट आदि का समूह । ] ( १६ ) गर्दभस्य पञ्च नामानि । [ गधा के ५ नाम । ]

गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि ।
रासभे, गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः ॥ इति विश्वः ।

[1]वैदेहकः सार्थवाहो नैगमो वणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयकश्च सः ॥ ७८ ॥
[2]विक्रेता स्याद् विक्रयिकः, [3]क्रायकः क्रयिकः समौ ।
[4]वाणिज्यं तु वणिज्या स्यान् [5]मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥
[6]नीवी परिपणो मूलधनं, [7]लाभोऽधिकं फलम् ।
[8]परिदानं परीवर्तो नैमेयनियमावपि ॥ ८० ॥
[9]पुमानुपनिधिर्न्यासः, [10]प्रतिदानं तदर्पणम् ।
[11]क्रये प्रसारितं क्रय्यं, [12]क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥
[13]विक्रेयं पणितव्यञ्च पण्यं, क्रय्यादयस्त्रिषु ।
[14]क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ॥ ८२ ॥
[15]विपणो विक्रयः, [16]सङ्ख्याः सङ्ख्येये ह्यादश त्रिषु ।

( १ ) वणिजोऽष्टौ नामानि । [वनिया के ८ नाम । ] ( २ ) विक्रयकर्तुर्नामद्वयम् । [ बेचने वाले के २ नाम । ] ( ३ ) क्रयिकस्य नामद्वयम् । [ खरीददार के २ नाम । ] ( ४ ) वणिक्कर्मणो नामद्वयम् । [ व्यापार के २ नाम । ] ( ५ ) मूल्यस्य त्रीणि नामानि । [ मूल्य के ३ नाम । ] ( ६ ) मूलधनस्य नामत्रयम् । [ मूलधन के ३ नाम । ] ( ७ ) लाभस्य त्रीणि नामानि । [ मुनाफा, लाभ, फायदा के ३ नाम । ] ( ८ ) परिवर्तनस्य नामचतुष्टयम् । [ लेन-देन के ४ नाम । ] ( ९ ) न्यासस्य नामद्वयम् । [ धरोहर के २ नाम । ] ( १० ) निक्षेपप्रत्यर्पणस्य नामद्वयम् । [ धरोहर लौटाना के २ नाम । ] ( ११ ) आपणे विक्रयार्थं प्रसारितद्रव्यस्यैकं क्रय्यम् । [ बेचने योग्य पदार्थ । ] ( १२ ) आपणे प्रसारणयोग्यद्रव्यस्यैकं क्रेयम् । [ खरीदने योग्य द्रव्य । ] ( १३ ) विक्रययोग्यद्रव्यस्य त्रीणि नामानि । क्रय्यादयः पण्यान्ताः शब्दास्त्रिषु । [ बिकाऊ माल के ३ नाम । ] ( १४ ) सत्यापनस्य त्रीणि नामानि । [ साई, बयाना के ३ नाम । ] ( १५ ) विक्रयस्य नामद्वयम् । [ बेचना के २ नाम । ] ( १६ ) दशशब्दमभिव्याप्य एकादिकाः सङ्ख्याः सङ्ख्येये त्रिलिङ्गाश्च । तद् यथा—एकः पुरुषः, एका नारी, एकं फलम् । एवमेव दश पुरुषाः, दश नार्यः, दश फलानि । आदशेति इत्यस्य तात्पर्यः—दशशब्दश्रवणपर्यन्तमित्याशयः, तेन अष्टादशान्ताः सङ्ख्याः सङ्ख्येये द्रव्ये वर्तते । तेन गवां विंशतिः, पुरुषस्यैकः, इति तु न सम्भवति । [ १ से लेकर १० तक के शब्दों के रूप तीनों लिंगों में होते हैं । ]

[1]विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः ॥ ८३ ॥
[2]सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु [3]चानवतेः स्त्रियः ।
[4]पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥
[5]यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
[6]मानं तुलाऽङ्गुलिप्रस्थै-[7]र्गुञ्जाः पञ्चाद्यमापकः ॥ ८५ ॥
[8]ते षोडशाऽक्षः कर्षोऽस्त्री, [9]पलं कर्षचतुष्टयम् ।
[10]सुवर्णविस्तौ हेम्नोऽक्षे, [11]कुरुविस्तस्तु तत्पले ॥ ८६ ॥
[12]तुला स्त्रियां पलशतं, [13]भारः स्याद्विंशतिस्तुलाः ।
[14]आचितो दश भाराः स्युः, [15]शाकटो भार आचितः ॥ ८७ ॥

---

( १ ) विंशतिः [ २० आदि संख्यायें एक वचनान्त होती हैं । ] इत्याद्या यासां सङ्ख्या. ताः सङ्ख्येयसङ्ख्ययोर्वर्तन्ते । एकवचनान्ताश्च । अत्रभाष्यम्— 'आदशभ्यः सङ्ख्या सङ्ख्येये वर्तते । ऊर्ध्वं सङ्ख्याने सङ्ख्येये च' । इति । विंशतिः पटाः । विंशतिः पटानाम् वा । शतं गावः । गवां शतं वा । ( २ ) सङ्ख्यामात्रार्थे वर्तमानाया विंशत्यादेः सङ्ख्याया द्विवचनबहुवचनेऽपि एकशेषेण स्तः । यथा–[ द्वे विंशती, तिस्रो विंशतयः । ] ( ३ ) तासु विंशत्यादिषु नवतिमभिव्याप्य स्त्रीलिङ्गाभवन्ति । यथा–[ विंशतिः पुरुषाः । विंशतिः फलानि । विंशतिः स्त्रियः । ] ( ४ ) दशानां पङ्क्तिरिति संज्ञा । पङ्क्तेर्दशगुणोत्तरं क्रमेण शतं, सहस्रमित्यादिभवति । [ दस, सौ; हजार आदि । ] ( ५ ) मानार्थस्य चत्वारि नामानि । [ नाप के ४ नाम । ] ( ६ ) तुलया, अङ्गुल्या प्रस्थैश्च मानं भवति । [ तराजू, अंगुलियों और सेर आदि से वस्तु का मान ( नाप-तौल ) किया जाता है । ] ( ७ ) पञ्च गुञ्जापरिमितो माषको भवति । [ ५ रत्ती = १ माषा । ] ( ८ ) षोडशमाषकपरिमितः कर्षः । [ १६ मासा = १ तोला । ] ( ९ ) कर्षचतुष्टयम् पलम् । [ ४ तोला = १ पल । ] ( १० ) अक्षमानस्य नामद्वयम् । [ सुवर्णकर्ष के २ नाम । ] ( ११ ) अक्षपलस्यैकम् । [ सुवर्ण पल । ] ( १२ ) पलशतं तुला । [ ४०० तोला=५ सेर शास्त्रीय । लौकिक ४ सेर १२ छटाँक= १ तुला । ] ( १३ ) भारस्यैकम् । [ २॥ मन=१ क्विटल ।] ( १४ ) आचितस्यैकम् । [ २५ मन । ] ( १५ ) शाकटो भार आचितः कथ्यते । [ एक गाड़ी भार का नाम आचित । ]

[1]कार्षापणः कार्षिकः [2]स्यात्कार्षिके ताम्रिके पणः।
[3]अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः॥ ८८॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्।
[4]पादस्तुरीयो भागः [5]स्यादंशभागौ तु वण्टके॥ ८९॥
[6]द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि॥ ९०॥
[7]स्यात्कोषश्च हिरण्यं च हेमरूप्ये कृताकृते।
[8]ताभ्यां यदन्यत् तत्कुप्यं, [9]रूप्यं तद्द्वयमाहतम्॥ ९१॥
[10]गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः।

---

( १ ) रजतरूपस्य नामद्वयम्। [ १ कर्ष का ( चाँदी का ) सिक्का = १ रुपया। ] ( २ ) कर्षपरिमितताम्रमुद्राया एकम्। [ १ कर्ष (तोला) का ताँबे का सिक्का। ] ( ३ ) पृथगेकैकं परिमाणानाम्। [ प्रस्थ आदि का १–१ नाम। ] आद्यर्थेन मानीभविकाप्रवर्तिकादिग्रहः। तद्यथा—

वाहो विंशतिखारीभिर्भविका स्यादनेन तु।
प्रवर्तः पञ्च खारीभिः सस्यमाने प्रकीर्तितः॥
पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्।
चत्वारः कुडवाः प्रस्थश्चतुः प्रस्थमथाढकम्॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः सूर्प उच्यते।
सार्धसूर्पो भवेत् खारी द्विद्रोणा गोण्युदाहृता॥
तामेव भारं जानीयाद् वाहो भारचतुष्टयम्॥

( ४ ) चतुर्थभागस्यैकं नाम। [ चौथाई भाग। ] ( ५ ) विभागस्य नामत्रयम्। [ अंश, भाग, हिस्सा के ३ नाम। ] ( ६ ) धनस्य त्रयोदश नामानि। [ धन के १३ नाम। ] ( ७ ) घटिताघटितहेमरूप्ययोर्नामद्वयम्। [ आभूषण बने हुए तथा सादे सोने-चांदी के २ नाम। ] ( ८ ) रजतस्वर्णाभ्यामतिरिक्तताम्रादिधातोरेकं नाम कुप्यम्। [ ताँबा आदि धातु। ] ( ९ ) घटितरूपस्य हेमरूप्यादेरेकम्। [ रुपया, गिन्नी। ] ( १० ) मरकतस्य चत्वारि नामानि। [ पन्ना के नाम। ]

[1]शोणरत्नं लोहितकः पद्मरागोऽथ [2]मौक्तिकम् ॥ ९२ ॥
मुक्ताऽथ [3]विद्रुमः पुंसि प्रवालं पुन्नपुंसकम् ।
[4]रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥
[5]स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥
[6]अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः ।
[7]दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥
[8]रीतिः स्त्रियामारकूटो न स्त्रियामथ [9]ताम्रकम् ।
शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥
[10]लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ।
अश्मसारोऽथ [11]मण्डूरं सिंहाणमपि तन्मले ॥ ९८ ॥
[12]सर्वञ्च तैजसं लौहं [13]विकारस्त्वयसः कुशी ।
[ [14]सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु ।
शीसं कालायसञ्चैवमष्टौ लोहानि चक्षते ॥ ]

---

( १ ) पद्मरागस्य नामत्रयम् । [ माणिक्य के ३ नाम । ] ( २ ) मुक्ताया नामद्वयम् । [ मोती के २ नाम । ] ( ३ ) प्रवालस्य नामद्वयम् । [ मूंगा के २ नाम । ] ( ४ ) रत्नस्य नामद्वयम् । [ रत्न के २ नाम । ] ( ५ ) सुवर्णस्य एकोनविंशति नामानि । [ सोना के २१ नाम । ] ( ६ ) स्वर्णालङ्कारस्यैकम् । [ सोने का आभूषण । ] ( ७ ) रजतस्य पञ्च नामानि । [ चाँदी के ५ नाम । ] ( ८ ) पित्तलस्य नामद्वयम् । [ पीतल के २ नाम । ] ( ९ ) ताम्रस्य षड् नामानि । [ ताँबा के ६ नाम । ] ( १० ) लोहस्य सप्त नामानि । [ लौह के ७ नाम । ] ( ११ ) लौहकिट्टस्य नामद्वयम् । [मण्डूर, लोहा का मैल के २ नाम । ] ( १२ ) सर्वधातूनामेकं नाम । [ लौहम् । ] ( १३ ) लोहविकारस्यैकम् । [ लोहनिर्मितवस्तु । ]

'कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः ।
कुशीलोहविकारे स्यात् कुशा वल्गा कुशं जले' ॥ इति हैमः ।

( १४ ) सुवर्णादयः अष्टौ लोहानि कथ्यन्ते । [ सोना आदि धातुओं की लौह संज्ञा है । ]

[1]क्षारः काचोऽथ [2]चपलो रसः सूतश्च पारदे ॥ ९९ ॥
[3]गवलं माहिषं शृङ्गम[4]भ्रकं गिरिजामले।
[5]स्रोतोऽञ्जनन्तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥
[6]तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके।
[7]कर्परी दार्विकाक्काथोद्भवं तुत्थं [8]रसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं, [9]गन्धाश्मनि तु गन्धकः।
सौगन्धिकश्च, [10]चक्षुष्याकुलाल्यौ च कुलत्थिका ॥ १०२ ॥
[11]रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम्।
[12]पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥
[13]गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु।
[14]बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥
[15]हिण्डीरोऽब्धिकफः फेनः, [16]सिन्दूरं नागसम्भवम्।
[17]नागसीसकयोगेष्टवप्राणि, [18]त्रपु पिच्चटम् ॥ १०५ ॥

---

( १ ) काचस्य नामद्वयम् । [ शीशा, काच के २ नाम । ] ( २ ) पारदस्य नामचतुष्टयम् । [ पारा के ४ नाम । ] ( ३ ) महिषशृङ्गस्यैकम् । पारदः प्रायेण महिषशृङ्गविवरे स्थाप्यतेस्म, अत एवाऽत्र तन्निर्देशः । [ भैंस का सींग । ] ( ४ ) अभ्रकस्य नामत्रयम् । [ अभ्रक के ३ नाम । ] स्वामिमुकुटौ तु गिरिजामलम् पृथक् स्वीकुरुतः । ( ५ ) सौवीराञ्जनस्य चत्वारि नामानि । [ सुर्मा के ४ नाम । ] ( ६ ) तुत्थाञ्जनस्य चत्वारि नामानि । [ तूतिया के ४ नाम । ] 'स्वामी तु तुत्थाञ्जनादिपञ्चकं कर्पर्यन्तं तुत्थाञ्जनपर्यायमुक्त्वा दार्विकाक्वाथोद्भवे तुत्थरसाञ्जनादित्रयमाह' इति मुकुटः ( ७ ) कर्पर्यास्त्रीणि नामानि । [ खपरिया के ३ नाम । ] ( ८ ) रसाञ्जनस्य नामत्रयम् । [ रसौत, रसवत् के ३ नाम । ] ( ९ ) गन्धकस्य नामत्रयम् । [ गन्धक के ३ नाम । ] ( १० ) तुत्थविशेषस्य त्रीणि । [ तूतिया भेद । ] ( ११ ) रीतिपुष्पस्य चत्वारि नामानि । [ पीतल का फूल के ४ नाम । ] ( १२ ) हरितालस्य पञ्च नामानि । [हरिताल के ५ नाम । ] ( १३ ) शिलाजतुद्रव्यस्य पञ्च नामानि । [ शिलाजीत के ५ नाम । ] ( १४ ) गन्धरसस्य षड् नामानि । [ बोल के ६ नाम । ] ( १५ ) समुद्रफेनस्य नामत्रयम् । [ समुद्रफेन के ३ नाम । ] ( १६ ) सिन्दूरस्य नामद्वयम् । [ सिन्दूर के २ नाम । ] ( १७ ) सीसकस्य नामचतुष्टयम् । [ सीसा के ४ नाम । ] ( १८ ) वङ्गस्य चत्वारि नामानि । [ राँगा के ४ नाम । ]

रङ्गवङ्गे, [1]अथ पिचुस्तूलोऽथ [2]कमलोत्तरम् ।
स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥
[3]मेषकम्बल ऊर्णायुः, [4]शशोर्णं शशलोमनि ।
[5]मधु क्षौद्रं माक्षिकादि, [6]मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥
[7]मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटी गोला, [8]यवक्षारो यवाग्रजः ॥ १०८ ॥
पाक्योऽथ [9]सर्जिकाक्षारः कापोतः सुखवर्चकः ।
सौवर्चलं स्याद्रुचकं, [10]त्वक्क्षीरी वंशरोचना ॥ १०९ ॥
[11]शिग्रुजं श्वेतमरिचं, [12]मोरटं मूलमैक्षवम् ।
[13]ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥
[14]गोलोमी भूतकेशो ना, [15]पत्त्राङ्गं रक्तचन्दनम् ।
[16]त्रिकटु त्र्यूषणं व्योषं, [17]त्रिफला तु फलत्रिकम् ॥ १११ ॥

इति वैश्यवर्गः ।

---

( १ ) कार्पासस्य नामद्वयम् । [ कपास, रुई के २ नाम । ] ( २ ) कुसुम्भस्य नामचतुष्टयम् । [ कुसुम्भ ( पीला फूल ) के ४ नाम । ] ( ३ ) कम्बलस्य नामद्वयम् । [ कम्बल के २ नाम । ] ( ४ ) शशलोमनिर्मितकम्बलस्य नामद्वयम् । शशलोम्नो वा । [ पशमीना के २ नाम । ] ( ५ ) मधुनस्त्रीणि । [ शहद के ३ नाम । ] ( ६ ) मधूच्छिष्टस्य नामद्वयम् । [ मोम के २ नाम । ] ( ७ ) मनःशिलायाः सप्त नामानि । [ मैनसिल के ७ नाम । ] ( ८ ) यवक्षारस्य नामत्रयम् । [ जवाखार के ३ नाम । ] ( ९ ) सर्जिकाक्षारस्य पञ्च नामानि । [ सज्जीखार के ५ नाम । ] ( १० ) वंशलोचनस्य नामद्वयम् । [ वंशलोचन के २ नाम । ] ( ११ ) शिग्रुबीजस्य नामद्वयम् । [ सहजन के बीज के २ नाम । ] ( १२ ) इक्षुमूलस्यैकम् । [ ईख की जड़ । ] ( १३ ) पिप्पलीमूलस्य नामत्रयम् । [ पिपलामूल के ३ नाम । ] ( १४ ) भूतकेशस्य नामद्वयम् । [ भूतकेश के २ नाम । ] ( १५ ) रक्तसारद्रव्यस्य नामद्वयम् । [ पतंग के २ नाम । ] ( १६ ) शुण्ठीपिप्पलीमरीचानां समूहस्य नामत्रयम् । [ सोंठ-मरिच-पीपल का सम्मिलित ३ नाम । ] ( १७ ) त्रिफलाया नामद्वयम् । [ हरड़-बहेड़ा-आँवला का सम्मिलित २ नाम । ]

इति वैश्यवर्गः ।

# १०. अथ शूद्रवर्गः

[1]शूद्रश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।
[2]आ चाण्डालात्तु सङ्कीर्णा अम्बष्ठकरणादयः ॥ १ ॥
[3]शूद्राविशोस्तु करणो[4]ऽम्बष्ठो वैश्याद्विजन्मनोः ।
[5]शूद्राक्षत्त्रिययोरुग्रो, [6]मागधः क्षत्त्रियाविशोः ॥ २ ॥
[7]माहिष्योऽर्याक्षत्त्रिययोः, [8]क्षत्तार्याशूद्रयोः सुतः ।
[9]ब्राह्मण्यां क्षत्त्रियात् सूतस्तस्यां[10] वैदेहको विशः ॥ ३ ॥
[11]रथकारस्तु माहिष्यात् करण्यां यस्य सम्भवः ।
[12]स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥
[13]कारुः शिल्पी, [14]संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।
[15]कुलकः स्यात्कुलश्रेष्ठी, [16]मालाकारस्तु मालिकः ॥ ५ ॥
[17]कुम्भकारः कुलालः स्यात् [18]पलगण्डस्तु लेपकः ।

---

( १ ) शूद्रस्य चत्वारि नामानि । [शूद्र के ४ नाम ।] ( २ ) वर्णसङ्कराणामेकम् । आदिपदेन उग्रादिग्रहः । [ वर्णसंकर । ] ( ३ ) वैश्यात् शूद्रायां जातस्यैकं नाम । [ करण । ] ( ४ ) विप्राद् वैश्यायामुत्पन्नस्यैकम् । [ अम्बष्ठ । ] ( ५ ) क्षत्रियात् शूद्रायामुत्पन्नस्यैकम् । [ उग्र । ] ( ६ ) वैश्यात् क्षत्रियायामुत्पन्नस्यैकम् [ मागध । ] ( ७ ) क्षत्रियात् वैश्यायामुत्पन्नस्यैकम् । [ माहिष्य । ] ( ८ ) शूद्राद् वैश्यायामुत्पन्नस्यैकम् । [ क्षत्ता । ] ( ९ ) क्षत्रियाद् ब्राह्मण्यां जातस्यैकम् [ सूत । ] ( १० ) वैश्याद् ब्राह्मण्यां जातस्यैकम् । [वैदेहक । ] ( ११ ) करण्यां ( शूद्रायां वैश्यादुत्पन्नस्य ) माहिष्यात् ( वैश्याक्षत्रियपुत्रात् ) समुत्पन्नस्यैकम् । [ रथकार । ] ( १२ ) शूद्राद् ब्राह्मण्यामुत्पन्नस्यैकम् । [ चाण्डाल । ] ( १३ ) शिल्पिनो नामद्वयम् । [ शिल्पी, के २ नाम । ]

तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥ इति ।

( १४ ) सजातीयशिल्पिसङ्घस्यैकं स्त्रियां पुंसि च । [ सजातीय शिल्पियों का संघ । ] ( १५ ) शिल्पिसमूहस्वामिनो नामद्वयम् । तत्र कुलश्रेष्ठी शब्दो नान्तः । [ कारीगरों का चौधरी के २ नाम । ] ( १६ ) मालाकारस्य नामद्वयम् । [माली के २ नाम । ] ( १७ ) कुम्भकारस्य नामद्वयम् । [ कुम्हार के २ नाम । ] ( १८ ) गृहादौ लेपकारस्य नामद्वयम् । [ घर लीपने वाले के २ नाम । ]

[1]तन्तुवायःकुविन्दः स्यात् [2]तुन्नवायस्तु सौचिकः ॥ ६ ॥
[3]रङ्गाजीवश्चित्रकारः, [4]शस्त्रमार्जोऽसिधावकः ।
[5]पादूकृच्चर्मकारः स्याद् [6]व्योकारो लोहकारकः ॥ ७ ॥
[7]नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ।
[8]स्याच्छाङ्खिकः काम्बविकः, [9]शाल्बिकस्ताम्रकुट्टकः ॥ ८ ॥
[10]तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ।
[11]ग्रामाधीनो ग्रामतक्षः, [12]कौटतक्षोऽनधीनकः ॥ ९ ॥
[13]क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः ।
[14]निर्णेजकः स्याद्रजकः, [15]शौण्डिको मण्डहारकः ॥ १० ॥
[16]जाबालः स्यादजाजीवो, [17]देवाजीवस्तु देवलः ।
[18]स्यान्माया शाम्बरी, [19]मायाकारस्तु प्रातिहारिकः ॥ ११ ॥

---

( १ ) तन्तुवायस्य द्वे नामनी । [ जुलाहा के २ नाम । ] ( २ ) सौचिकस्य नामद्वयम् । [ दर्जी के २ नाम । ] ( ३ ) चित्रकारस्य द्वे नामनी । [ चित्रकार, रंगरेज के २ नाम । ] ( ४ ) शस्त्रमार्जकस्य नामद्वयम् । [ सिकलीगर के २ नाम । ] ( ५ ) चर्मकारस्य नामद्वयम् । [ चमार, मोची के २ नाम । ] ( ६ ) लोहकारस्य द्वे नामनी । [ लोहार के २ नाम । ] ( ७ ) स्वर्णकारस्य चत्वारि नामानि । [ सुनार के ४ नाम । ] ( ८ ) शङ्खवादकस्य नामद्वयम् । केचिच्छङ्खविकारनिर्मातुरिति । [ शंख बजाने वाला अथवा शंख की चूड़ी आदि बनाने वाले के २ नाम । ] ( ९ ) ताम्रकारस्य द्वे नामनी । [ ठठेरा या कसेरा के २ नाम । ] ( १० ) वर्धकेः पञ्च नामानि । [ बढ़ई के ५ नाम । ] ( ११ ) ग्रामाधीनस्य वर्धकेर्नामद्वयम् । [ गाँव का बढ़ई के २ नाम । ] ( १२ ) कौट-त्वष्टुरेकम् । [ स्वतन्त्र बढ़ई । ] ( १३ ) नापितस्य पञ्च नामानि । [ नाई के ५ नाम । ] ( १४ ) रजकस्य नामद्वयम् । [ धोबी के २ नाम । ] ( १५ ) शौण्डिकस्य नामद्वयम् । [ कलवार के २ नाम । ] ( १६ ) अजाजीवनस्य नाम-द्वयम् । [ भेड़, बकरी पालने वाला के २ नाम । ] ( १७ ) देवलस्य नामद्वयम् । [ आजीविका के लिये देवपूजा करने वाले के २ नाम । ] ( १८ ) इन्द्रजालादि-मायाया नामद्वयम् । [ जादू मायाजाल के २ नाम । ] ( १९ ) मायाप्रदर्शयितु-र्नामद्वयम् । [ जादूगर, के २ नाम । ]

[1]शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।
भरता इत्यपि नटा[2]श्चारणास्तु कुशीलवाः ॥ १२ ॥
[3]मार्दङ्गिकाः मौरजिकाः, [4]पाणिवादास्तु पाणिघाः ।
[5]वेणुध्माः स्युर्वैणविका, [6]वीणावादास्तु वैणिकाः ॥ १३ ॥
[7]जीवान्तकः शाकुनिको, [8]द्वौ वागुरिक-जालिकौ ।
[9]वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥
[10]भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः ।
[11]वार्तावहो वैवधिको, [12]भारवाहस्तु भारिकः ॥ १५ ॥
[13]विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥
[14]भृत्ये दासेय-दासेर-दास-गोप्यक-चेटकाः ।
नियोज्य-किङ्कर-प्रैष्य-भुजिष्य-परिचारकाः ॥ १७ ॥
[15]पराचित-परिस्कन्द-परजात-परैधिताः ।
[16]मन्दस्तुन्दपरिमृज आलस्यःशीतकोऽलसोऽनुष्णः ॥ १८ ॥
[17]दक्षे तु चतुर-पेशल-पटवः सूत्थान उष्णश्च ।

---

( १ ) नटानां षड् नामानि । शैलालिकृशाश्विनौ नान्तौ । [नट के ६ नाम ।] ( २ ) बन्दिविशेषस्य द्वे नामनी । [ चारण, भाट, स्तुतिपाठक के २ नाम । ] ( ३ ) मृदङ्गवादनशीलस्य द्वे नामनी । [ तबलची के २ नाम । ] ( ४ ) करतालिकावादनशीलस्य नामद्वयम् । [ ताली, चुटकी बजाने वाले के २ नाम । ] ( ५ ) वंशीवादकस्य द्वे नामनी । [ वंशी बजाने वाले के २ नाम । ] ( ६ ) वीणावादकस्य द्वे नामनी । [ वीणा बजाने वाले के २ नाम । ] ( ७ ) शाकुनिकस्य नामद्वयम् । [ बहेलिया के २ नाम । ] ( ८ ) जालिकस्य नामद्वयम् । [ जाल फैलाकर पशुपक्षियों को फँसाने वाला व्याध के २ नाम । ] ( ९ ) मांसविक्रयजीविनस्त्रीणि । [ खटिक के ३ नाम । ] ( १० ) वैतनिकस्य चत्वारि नामानि । [ नौकर के ४ नाम । ] ( ११ ) वार्तावाहकस्य नामद्वयम् । [ सन्देशवाहक के २ नाम । ] ( १२ ) भारवाहकस्य द्वे नामनी । [पल्लेदार के २ नाम ।] ( १३ ) नीचस्य दश नामानि । [ नीच पुरुष के १० नाम । ] ( १४ ) परिचारकस्यैकादश नामानि । [ दास, गुलाम के ११ नाम । ] ( १५ ) परपालितस्य चत्वारि नामानि । [ दूसरे द्वारा पाला गया के ४ नाम । ] ( १६ ) अलसस्य षड् नामानि । [ आलसी के ६ नाम । ] ( १७ ) चतुरस्य षड् नामानि । [ चतुर के ६ नाम । ]

[1]चाण्डाल-प्लव-मातङ्ग-दिवाकीर्ति-जनङ्गमाः ॥ १९ ॥
निषाद-श्वपचावन्तेवासि-चाण्डाल-पुक्कसाः ।
[2]भेदाः किरात-शबर-पुलिन्दा म्लेच्छजातयः ॥ २० ॥
[3]व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।
[4]कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥
शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ।
[5]श्वा विश्वकद्रुर्मृगयाकुशलः, [7]सरमा शुनी ॥ २२ ॥
[8]विट्चरः सूकरो ग्राम्यो, [9]वर्करस्तरुणः पशुः ।
[10]आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥ २३ ॥
[11]दक्षिणारुर्लुब्धयोगाद् दक्षिणेर्मा कुरङ्गकः ।
[12]चौरैकागारिकस्तेन-दस्यु-तस्कर-मोषकाः ॥ २४ ॥
प्रतिरोधि-परास्कन्दि-पाटच्चर-मलिम्लुचाः ।
[13]चौरिका स्तैन्यचौर्ये च स्तेयं, [14]लोप्त्रं तु तद्धने ॥ २५ ॥
[15]वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ।
[16]उन्माथः कूटयन्त्रं स्याद् वागुरा [17]मृगबन्धनी ॥ २६ ॥

---

( १ ) चाण्डालस्य दश नामानि । [ चाण्डाल के १० नाम । ] ( २ ) चाण्डालविशेषाणामेकैकम् । [ किरात, शबर, पुलिन्द । ] ( ३ ) व्याधस्य चत्वारि नामानि । [ शिकारी, बहेलिया के ४ नाम । ] ( ४ ) शुनः सप्त नामानि । [ कुत्ता के ७ नाम । ] ( ५ ) मत्तशुन एकम् । [ पागल कुत्ता । ] ( ६ ) मृगयाकुशलकुक्कुरस्यैकं नाम । [ शिकारी कुत्ता । ] ( ७ ) सरमाया नामद्वयम् । [ कुतिया के २ नाम । ] ( ८ ) ग्राम्यशूकरस्यैकं नाम । [ पालतू सूअर । ] ( ९ ) तरुणपशुमात्रस्यैकम् । [ जवान पशु । ] ( १० ) आखेटस्य चत्वारि नामानि । तत्र मृगया स्त्रियाम् । [ शिकार, आखेट के ४ नाम । ] ( ११ ) लुब्धककृतदक्षिणभागव्रणस्य मृगस्यैकम् । [ शिकारी द्वारा दाहिनी ओर घायल मृग । ] ( १२ ) चौरस्य दश नामानि । [ चोर के १० नाम । ] ( १३ ) चोरकर्मणश्चत्वारि नामानि । [ चोरी के ४ नाम । ] ( १४ ) चोरितद्रव्यस्यैकम् । [ चोरी का धन । ] ( १५ ) मृगपक्षिणां बन्धनसाधनस्यैकम् । [ मृग तथा पक्षियों को बाधने का साधन । ] ( १६ ) मृगादिबन्धनयन्त्रस्य द्वे नामनी । [ मृग आदि पशुओं को फँसाने के यन्त्र के २ नाम । ] ( १७ ) जालविशेषस्य द्वे नामनी । [ विशेष प्रकार के जाल के २ नाम । ]

[1]शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः ।
[2]उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहः ॥ २७ ॥
[3]पुंसि वेमा वायदण्डः, [4]सूत्राणि नरि तन्तवः ।
[5]वाणिर्व्यूतिः स्त्रियौ तुल्ये, [6]पुस्तं लेप्यादिकर्मणि ॥ २८ ॥
[7]पाञ्चालिका पुत्रिका स्याद् वस्त्रदन्तादिभिः कृता ।
[ [8]जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु । ]
[9]पिटकः पेटकः पेटा मञ्जूषाऽथ [10]विहङ्गिका ॥ २९ ॥
भारयष्टि[11]स्तदालम्बि शिक्यं काचोऽथ[12] पादुका ।
पादूरुपानत्स्त्री, [13]सैवानुपदीना पदायता ॥ ३० ॥
[14]नध्री वर्ध्री वरत्रा [15]स्यादश्वादेस्ताडनी कशा ।
[16]चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ॥ ३१ ॥

---

( १ ) रज्जोः पञ्च नामानि । तत्र शुल्ब-वराटके क्लीबे, रज्जुः स्त्रियाम्, बटी त्रिषु भवति । [रस्सी के ५ नाम ।] ( २ ) घटीयन्त्रस्य नामद्वयम् । [ अरहट, रहट के २ नाम । ] ( ३ ) वस्त्रव्यूतिदण्डस्य द्वे नामनी । [करघा के २ नाम । ] ( ४ ) सूत्रस्य द्वे नामनी । [ सूत, तागा के २ नाम । ] ( ५ ) वस्त्रादिवानस्य द्वे नामनी । [ कपड़ा बुनना के २ नाम । ] ( ६ ) वस्त्रादिलेप्यस्यैकम् । आदिना काष्ठपुत्तलिकादिबोध्यम् । [ रंगाई आदि का नाम । ] तत्र पुस्तस्वरूपम्—

मृदा वा दारुणा वाऽथ वस्त्रेणाऽप्यथ चर्मणा ।
लोहरत्नैः कृतं वाऽपि पुस्तमित्यभिधीयते' ॥ इति ।

( ७ ) वस्त्रदन्तादिभिः कृतायाः पुत्रिकाया नामद्वयम् । [ गुड़िया, खिलौना के २ नाम । ] ( ८ ) जतुत्रपुविकारयोः क्रमेणैकैकं नाम त्रिषु भवति । [ जातुष तथा त्रापुष ।] ( ९ ) मञ्जूषायाश्चत्वारि नामानि । मुकुटस्तु आद्यद्वयं पेटकस्येति स्वीकरोति । [ पिटारी, सन्दूक के ४ नाम । ] ( १० ) शिक्याधारलगुडस्य द्वे नामनी [ बंहगी की लकड़ी के २ नाम । ] ( ११ ) शिक्यस्य द्वे नामनी । [ छींका के २ नाम । ] ( १२ ) पादुकायास्त्रीणि नामानि । [ खड़ाऊँ, जूता के ३ नाम । ] ( १३ ) विस्तृतपादत्राणस्यैकम् । [बूट ।] ( १४ ) चर्ममयरज्जोस्त्रीणि नामानि । [ चमड़े की रस्सी के ३ नाम । ] ( १५ ) कशाया एकं नाम । [चाबुक, छड़ी ।] ( १६ ) चाण्डालवीणायास्त्रीणि नामानि । [ छोटी सारंगी के ३ नाम । ]

[1]नाराची स्यादेषणिका, [2]शाणस्तु निकषःकषः ।
[3]व्रश्चनः पत्रपरशु[4]रेषिका तूलिका समे ॥ ३२ ॥
[5]तैजसावर्तनी मूषा, [6]भस्त्रा चर्मप्रसेविका ।
[7]आस्फोटनी वेधनिका, [8]कृपाणी कर्तरी समे ॥ ३३ ॥
[9]वृक्षादनी वृक्षभेदी, [10]टङ्कः पाषाणदारणः ।
[11]क्रकचोऽस्त्री करपत्त्र[12]मारा चर्मप्रभेदिका ॥ ३४ ॥
[13]सूर्मी स्थूणाऽयःप्रतिमा, [14]शिल्पं कर्मकलादिकम् ।
[15]प्रतिमानं प्रतिबिम्बं प्रतिमाप्रतियातनाप्रतिच्छाया ॥ ३५ ॥
प्रतिकृतिरर्चा पुंसि प्रतिनिधि[16]रुपमोपमानं स्यात् ।
[17]वाच्यलिङ्गाः, समस्तुल्यः सदृक्षः सदृशः सदृक् ॥ ३६ ॥
साधारणः समानश्च स्युरुत्तरपदे त्वमी ।
[18]निभ-सङ्काश-नीकाश-प्रतीकाशोपमादयः ॥ ३७ ॥

---

( १ ) सुवर्णतुलाया नामद्वयम् । [ सोना तोलने का तराजू के २ नाम । ] ( २ ) निकषो पलस्य त्रीणि नामानि । [ कसौटी के ३ नाम । ] ( ३ ) पत्र-परशोर्नामद्वयम् । [ छेनी के २ नाम । ] ( ४ ) वीरणादिशलाकाया नामद्वयम् । [ तूली के २ नाम । ] ( ५ ) मूषाया, द्वे नामनी । [ घड़िया के २ नाम । ] ( ६ ) भस्त्राया नामद्वयम् । [ भाथी धौंकनी के २ नाम । ] ( ७ ) मुक्तादिवेध-निकाया नामद्वयम् । [ वर्मी के २ नाम । ] ( ८ ) कर्तर्या नामद्वयम् । [ कैंची के २ नाम । ] ( ९ ) वृक्षादन्या द्वे नामनी । [ वसूला के २ नाम । ] ( १० ) पाषाणदारणस्य नामद्वयम् । [ घन या हथौड़ा के २ नाम । ] ( ११ ) करपत्रस्य द्वे नामनी । [ आरा के २ नाम । ] ( १२ ) चर्मप्रभेदिकाया नामद्वयम् । [ आरी के २ नाम । ] ( १३ ) लोहप्रतिमायास्त्रीणि नामानि । सूर्मीशब्दः तालव्यादि-रपि । [ लोहे की प्रतिमा के ३ नाम । ] ( १४ ) प्रतिमाया अष्टौ नामानि । [ प्रतिमा, तस्वीर, फोटो के ८ नाम । ] ( १५ ) कलाकौशलादिकर्मण एकम् । [ कला-कौशल । ] ( १६ ) उपमाया उपमानस्य चेकैकम् । केचित्तु दश प्रति-माया एवाङ्गीकुर्वन्ति । [ उपमा-उपमान । ] ( १७ ) सदृशस्य सप्त नामानि, ते सर्वेऽपि वाच्यलिङ्गाः । [ समान के ७ नाम । ] ( १८ ) एते पञ्च निभादय उत्तर-पदस्था एव तुल्यवचना वाच्यलिङ्गाश्च भवन्ति । [ निभ आदि शब्द सदृशवाचक किसी शब्द के साथ प्रयुक्त होते हैं । यथा—पण्डितनिभः = पण्डितजैसा आदि ]

[१]कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ।
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥ ३८ ॥
[२]सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा ।
गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥ ३९ ॥
मदिरा कश्यमद्ये [३]चाऽप्यवदंशस्तु भक्षणम् ।
[४]शुण्डा पानं मदस्थानं, [५]मधुवारा मधुक्रमाः ॥ ४० ॥
[६]मध्वासवो माधवको मधु माध्वीकमद्वयोः ।
[७]मैरेयमासवः, सीधुर्मेदको जगलः समौ ॥ ४१ ॥
[९]सन्धानं स्यादभिषवः, [१०]किण्वं पुंसि तु नग्नहूः ।
[११]कारोत्तरः सुरामण्ड, [१२]आपानं पानगोष्ठिका ॥ ४२ ॥
[१३]चषकोऽस्त्री पानपात्रं, [१४]सरकोऽप्यनुतर्षणम् ।
[१५]धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥ ४३ ॥
[१६]स्युर्लग्नकाः प्रतिभुवाः, [१७]सभिका द्यूतकारकाः ।
[१८]द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥ ४४ ॥

---

( १ ) वेतनस्यैकादश नामानि । [ वेतन, तनखाह के ११ नाम । ] ( २ ) मद्यस्य त्रयोदश नामानि । [ शराब के १३ नाम । ] ( ३ ) अवदंशस्यैकम् । [ पकौड़ा, चाट । ] ( ४ ) मदस्थानस्य त्रीणि नामानि । [ कलवरिया के ३ नाम । ] ( ५ ) मधुपानावसरस्य द्वे नामनी । [ मद्यपान के समय के २ नाम । ] ( ६ ) मधुकपुष्पकृतमद्यस्य चत्वारि नामानि । [ महुआ की शराब के ४ नाम । ] ( ७ ) इक्षुशाकादिजमदस्य त्रीणि नामानि । [ ईख आदि की शराब के ३ नाम । ] ( ८ ) सुराकल्कस्य द्वे नामनी । [ सुराकल्क के २ नाम । ] ( ९ ) सुरासन्धानस्य नामद्वयम् । [ शराब बनाना के २ नाम । ] ( १० ) मद्य-किण्वस्य द्वे नामनी । [ मद्यकिण्व के २ नाम । ] ( ११ ) सुरामण्डस्य द्वे नामनी । [ सुरामण्ड के २ नाम । ] ( १२ ) पानगोष्ठ्याः द्वे नामनी । [ पानगोष्ठी के २ नाम । ] ( १३ ) पानपात्रस्य द्वे नामनी । [ चषक, प्याला के २ नाम । ] ( १४ ) मद्यपानस्य द्वे नामनी । केचित् तु चत्वारि समार्थकानीति । [ मद्यपान के २ नाम । ] ( १५ ) द्यूतकृतः पञ्च नामानि । [ जुवारी के ५ नाम । ] ( १६ ) प्रतिभुवो द्वे नामनी । [ जमानतदार के २ नाम । ] ( १७ ) द्यूतकारकाणां द्वे नामनी । [जुआ खेलाने वालों के २ नाम ।] ( १८ ) द्यूतस्य चत्वारि नामानि । [ जुआ के ४ नाम । ]

[1]पणोऽक्षेषु ग्लहोऽक्षास्तु[2] देवनाः पाशकाश्च ते।
[3]परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ॥ ४५ ॥
[4]अष्टापदं शारिफलं, [5]प्राणिद्यूतं समाह्वयः।
[6]उक्ता भूरिप्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः ॥ ४६ ॥
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते।

इति शूद्रवर्गः।

इत्यमरसिंहकृतौ नामलिङ्गानुशासने।
द्वितीयकाण्डो भूम्यादिः साङ्ग एव समर्थितः ॥ १ ॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने द्वितीयं काण्डम्।



( १ ) द्यूते पणस्य द्वे नामनी। [ बाजी के २ नाम। ] ( २ ) पाशकस्य त्रीणि नामानि। [ पाशा के ३ नाम। ] तत्र विशेषः—

अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके।
रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि ॥
चक्रे कर्षे पुमान् क्लीबं तुत्ये सौवर्चलेन्द्रिये। इति मेदिनी ॥

( ३ ) शारीणां सर्वतश्चालनस्यैकम्। [ चौपड़ में गोटियों को चलाना। ] ( ४ ) शारिफलस्य नामद्वयम्। [ चौपड़ के २ नाम। ] ( ५ ) प्राणिद्यूतस्य नामद्वयम्। [ प्राणियों का जुआ के २ नाम। ] ( ६ ) अस्मिन् वर्गे ये मालाकार-मार्दङ्गिक-वैणविकादयो यौगिकाः शब्दाः पुंसि कथिताः तेऽन्यत्र स्त्रियां क्लीवे चोदनीयाः। यथा—मालाकारः पुमान्, मालाकारी स्त्री, मालाकारं कुलम्, इत्यादि। येऽप्ययौगिकाः करण-मालिक-कुम्भकारादयः, ते जातिवचनत्वाच्छूद्रादिवत् लिङ्गान्तरे स्त्रीलिङ्गे क्लीबत्वेऽपि ज्ञातव्याः। यथा—करणी, कुम्भकारीत्यादयः। [ यौगिक शब्दों का प्रयोग तीनों लिंगों में होता है। ]

इति शूद्रवर्गः।

इति श्रीमत्पण्डिततारादत्तत्रिपाठितनूजेन डॉ० ब्रह्मानन्दत्रिपाठिना विरचितायाम् अमरकोषटीकायां द्वितीयं काण्डम्।



# अथ तृतीयं काण्डम्

## १. विशेष्यनिघ्नवर्गः

[1]विशेष्यनिघ्नैः सङ्कीर्णैर्नानार्थैरव्ययैरपि ।
लिङ्गादिसङ्ग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥
[2]स्त्रीदाराद्यैर्यद् विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥
[3]सुकृती पुण्यवान् धन्यो, [4]महेच्छस्तु महाशयः ।
[5]हृदयालुः सुहृदयो, [6]महोत्साहो महोद्यमः ॥ ३ ॥
[7]प्रवीणे निपुणाभिज्ञ-विज्ञ-निष्णात-शिक्षिताः ।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥ ४ ॥

---

( १ ) इह तृतीयाऽऽख्ये सामान्यकाण्डे पञ्च वर्गा यथाक्रमं कथ्यन्ते । कथम्भूतास्ते वर्गाः पूर्वोक्ताः स्वर्गाद्याश्रयाः । 'सुकृतीपुण्यवान् धन्य' इत्यादीनां देवासुर मनुष्येष्वेव विशेषणत्वेन सम्बध्यन्ते येषां तानि तेषां सङ्ग्रहाः, तैः । आदिपदेन लङ्काशेफालिकाप्रभृतीनां ग्रहणमभीष्टम् । [ इस वर्ग की प्रस्तावना । ] ( २ ) स्त्रीदारकलत्रादिशब्दैः यल्लिङ्गसङ्ख्याविशिष्टैः, यद्विशेष्यं स्त्रीदारकलत्रादिरूपं प्रस्तुतं, तस्य द्रव्यगुणक्रियाशब्दाः भेदकाः ( विशेषणानि ) भवन्ति । तद् यथा **गुणशब्दः**—सुकृती पुरुषः, सुकृतिनो दाराः, सुकृतिनी स्त्री, सुकृति कलत्रम् । **द्रव्यशब्दः**—दण्डी पुरुषः, दण्डिनो दाराः, दण्डिनी स्त्री, दण्डि कलत्रम् । **क्रियाशब्दः**—पाचकः पुरुषः, पाचका दाराः, पाचिका स्त्री, पाचकं कलत्रमित्यादयः । [ सामान्य विशेषणों के रूप विशेष्य के अनुसार बदलते हैं । ] ( ३ ) भाग्यशालिनो नामत्रयम् । [ भाग्यवान् के ३ नाम । ] ( ४ ) महाशयस्य द्वे नामनी । [ महाशय के २ नाम । ] ( ५ ) शुद्धमनसो नामद्वयम् । सहृदयः, इत्यपि पाठभेदः । [ शुद्ध हृदय वाले के २ नाम । ] ( ६ ) महोत्साहवतो द्वे नामनी । [ महोत्साही के २ नाम । ] ( ७ ) कर्मकुशलस्य दश नामानि । [ कर्मठ के १० नाम । ]

[1]पूज्यः प्रतीक्ष्यः [2]सांशयिकः संशयापन्नमानसः ।
[3]दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥ ५ ॥
[4]स्युर्वदान्य-स्थूललक्ष्य-दानशौण्डा बहुप्रदे ।
[5]जैवातृकः स्यादायुष्मा[6]नन्तर्वाणिस्तु शास्त्रवित् ॥ ६ ॥
[7]परीक्षकः कारणिको, [8]वरदस्तु समर्धकः ।
[9]हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥ ७ ॥
[10]दुर्मना विमना अन्तर्मना [11]स्यादुत्क उन्मनाः ।
[12]दक्षिणे सरलोदारौ, [13]सुकलो दातृभोक्तरि ॥ ८ ॥
[14]तत्परे प्रसिताऽऽसक्ता-[15]विष्टार्थोद्युक्त उत्सुकः ।
[16]प्रतीत प्रथित-ख्यात-वित्त-विज्ञात-विश्रुताः ॥ ९ ॥
[17]गुणैः प्रतीते तु कृतलक्षणाऽऽहतलक्षणौ ।
[18]इभ्य आढ्यो धनी, [19]स्वामी त्वीश्वरःपतिरीशिता ॥ १० ॥
अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।

---

( १ ) पूज्यस्य द्वे नामनी । [ पूज्य के २ नाम । ] ( २ ) संशयापन्नस्य नामद्वयम् । [ संशयालु के २ नाम । ] ( ३ ) दक्षिणायोग्यस्य नामत्रयम् । [ दक्षिणा योग्य के २ नाम । ] ( ४ ) दानवीरस्य नामचतुष्टयम् । [ दानी के ४ नाम । ] ( ५ ) चिरञ्जीविनो नामद्वयम् । [ आयुष्मान् के २ नाम । ] ( ६ ) शास्त्रविदो द्वे नामनी । [ शास्त्रज्ञ के २ नाम । ] ( ७ ) परीक्षकस्य नामद्वयम् । ( ८ ) वरदस्य द्वे नामनी । [ वरदान देने वाले के २ नाम । ] ( ९ ) हर्षितमनसश्चत्वारि नामानि । [ प्रसन्नचित्त के ४ नाम । ] ( १० ) दुःखितमनसस्त्रीणि नामानि । [ दुःखी के २ नाम । ] ( ११ ) उत्कण्ठितस्य द्वे नामनी । [ उत्कण्ठित के २ नाम । ] ( १२ ) सरलाशयवतस्त्रीणि नामानि । [ सरल आशय वाले के ३ नाम । ] ( १३ ) दानभोगशीलस्यैकं नाम, [ सुकल । ] ( १४ ) कार्ये तत्परस्य त्रीणि नामानि । [ काम में लगे हुए के ३ नाम । ] ( १५ ) इष्टार्थोद्यमवतो द्वे नामनी । केचित् पञ्चापि तत्परपर्यायाः, इति स्वीकुर्वन्ति । [ उद्यमी के २ नाम । ] ( १६ ) प्रसिद्धस्य षड् नामानि । [ प्रसिद्ध के ६ नाम । ] ( १७ ) सद्गुणैः प्रसिद्धस्य द्वे नामनी । [ गुणवान् के २ नाम । ] ( १८ ) धनिनस्त्रीणि । [ धनी के २ नाम । ] ( १९ ) अधिपतेर्दश नामानि । [ स्वामी के १० नाम । ]

[1]अधिकर्द्धिः समृद्धः स्याद् [2]कुटुम्बव्यापृतस्तु यः ॥ ११ ॥
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।
[3]वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥ १२ ॥
[4]निर्वार्यः कार्यकर्ता यः सम्पन्नः सत्त्वसम्पदा ।
[5]अवाचि मूकोऽथ [6]मनोजवसः पितृसन्निभः ॥ १३ ॥
[7]सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ।
[8]लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान् [9]स्निग्धस्तु वत्सलः ॥ १४ ॥
[10]स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ।
[11]स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १६ ॥
[12]परतन्त्रः पराधीनः परवान्नाथवानपि ।
[13]अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १६ ॥
[14]खलपूः स्याद्बहुकरो, [15]दीर्घसूत्रश्चिरक्रियः ।
[16]जाल्मोऽसमीक्ष्यकारी स्यात् [17]कुण्ठो मन्दःक्रियासु यः ॥ १७ ॥

---

( १ ) सम्पन्नस्य द्वे नामनी । [ सम्पन्न के २ नाम । ] ( २ ) कुटुम्बपालनतत्परस्य नामत्रयम् । [ कुटुम्ब पालनकर्ता के ३ नाम । ] ( ३ ) सौन्दर्योपेतस्यैकम् । [ सुन्दरता युक्त । ] ( ४ ) निःशङ्ककार्यकर्तुरेकम् । [ निश्चिन्त होकर काम करने वाला । ] ( ५ ) मूकस्य द्वे नामनी । [ गूँगा के २ नाम । ] ( ६ ) पितृसमस्य द्वे नामनी । अदन्तोऽपि मनोजवः, सान्तोऽपि मनोजवाश्च । [ पिता के समान के २ नाम । ] ( ७ ) संस्कारपूर्वककन्यादातुरेकं नाम । [ कूकुद । ] ( ८ ) श्रीमतश्चत्वारि नामानि । [ श्रीमान् के ४ नाम । ] ( ९ ) वत्सलस्य द्वे नामनी । [ प्रिय के २ नाम । ] ( १० ) दयालोश्चत्वारि नामानि । [ दयालु के ४ नाम ] । ( ११ ) स्वच्छन्दस्य पञ्च नामानि । [ स्वतन्त्र के ५ नाम । ] ( १२ ) परतन्त्रस्य चत्वारि नामानि । [पराधीन के ४ नाम ।] ( १३ ) अधीनसामान्यस्य पञ्च नामानि । केचित् परतन्त्रेत्यारभ्य नवानपि पर्यायान् स्वीकुर्वन्ति । [ अधीन के ५ नाम । ] ( १४ ) भूमिसम्मार्जकस्य द्वे नामनी । [ झाड़ू लगाने वाले के २ नाम । ] ( १५ ) बिलम्बेन कर्मकरस्य द्वे नामनी । [ देर से काम करने वाले के २ नाम । ] ( १६ ) असमीक्ष्यकार्यं कुर्वतो द्वे नामनी । [ बिना सोचे समझे कार्य करनेवाले के २ नाम । ] ( १७ ) मन्दक्रियस्यैकं नाम । [ धीरे काम करने वाला । ]

[1]कर्मक्षमोऽलङ्कर्मीणः, [2]क्रियावान् कर्मसूद्यतः ।
[3]स कार्मः कर्मशीलो यः, [4]कर्मशूरस्तु कर्मठः ॥ १८ ॥
[5]भरण्यभुक्कर्मकरः, [6]कर्मकारस्तु तत्क्रियः ।
[7]अपस्नातो मृतस्नात [8]आमिषाशी तु शौष्कलः ॥ १९ ॥
[9]बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः ।
[10]परान्नः परपिण्डादो, [11]भक्षको घस्मरोऽद्मरः ॥ २० ॥
[12]आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।
[13]उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ॥ २१ ॥
[14]सर्वान्नीनस्तु सर्वान्नभोजी, [15]गृध्नुस्तु गर्धनः ।
लुब्धोऽभिलाषुकस्तृष्णक्, [16]समौ लोलुपलोलुभौ ॥ २२ ॥
[17]उन्मदस्तून्मदिष्णुः [18]स्यादविनीतः समुद्धतः ।
[19]मत्ते शौण्डोत्कटक्षीवाः [20]कामुके कमितानुकः ॥ २३ ॥
कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः ।

---

( १ ) कार्यकरणसमर्थस्यैकं नाम । [ काम करने में समर्थ । ] ( २ ) उद्योगोद्यतस्यैकम् । [ उद्योग में लगा हुआ । ] ( ३ ) फलचिन्तां परित्यज्य कर्मणि तत्परस्य द्वे नामनी । [ निःस्पृह के २ नाम । ] ( ४ ) प्रारब्धकर्मपरिसमापकस्य द्वे नामनी । [ कर्मठ के २ नाम । ] ( ५ ) मूल्येन कर्मकुर्वतो द्वे नामनी । [ मूल्य लेकर काम करने वाले के २ नाम । ] ( ६ ) वेतनं विनापि कर्मकर्तुरेकम् । [ बिना मूल्य लिये काम करने वाला । ] ( ७ ) मृतस्नातस्य द्वे नामनी । [ अशौचस्नान किये हुए के २ नाम । ] ( ८ ) मांसाशिनो द्वे नामनी । [ मांस खाने वाले के २ नाम । ] ( ९ ) बुभुक्षितस्य चत्वारि नामानि । [ भूखा के २ नाम । ] ( १० ) परान्नपरस्य द्वे नामनी । [ दूसरे के भोजन पर निर्भर रहने वाले के २ नाम । ] ( ११ ) भक्षणपरस्य नामत्रयम् । [ बहुभोजी के ३ नाम । ] ( १२ ) औदरिकस्य द्वे नामनी । [ पेटू के २ नाम । ] ( १३ ) स्वोदरपूरकस्य द्वे नामनी । [ अपना पेट भरने की चिन्ता वाले के २ नाम । ] ( १४ ) सर्ववर्णान्नभक्षकस्य द्वे नामनी । [ चारों वर्णों के अन्न को खाने वाले के २ नाम । ] ( १५ ) लुब्धस्य पञ्च नामानि । [ लोभी के ५ नाम । ] ( १६ ) अतिलुब्धस्य द्वे नामनी । [अत्यन्त लोभी के २ नाम ।] ( १७ ) उन्मादशीलस्य द्वे नामनी । [ उन्मादी के २ नाम । ] ( १८ ) अविनीतस्य द्वे नामनी । [ उद्धत के २ नाम । ] ( १९ ) उन्मत्तस्य चत्वारि नामानि । [ पागल के ४ नाम । ] ( २० ) कामुकस्य नव नामानि । [ कामी के ९ नाम । ]

[1]विधेयो विनयग्राही वचनेस्थित आश्रवः ॥ २४ ॥
[2]वश्यः प्रणेयो, [3]निभृतविनीतप्रश्रिताः समाः ।
[4]धृष्टे धृष्णग्वियातश्च, [5]प्रगल्भः प्रतिभान्वितः ॥ २५ ॥
[6]स्यादधृष्टे तु शालीनो, [7]विलक्षो विस्मयान्विते ।
[8]अधीरे कातरस्त्र[9]स्नौ भीरु-भीरुक-भीलुकाः ॥ २६ ॥
[10]आशंसुराशंसितरि, [11]गृहयालुर्ग्रहीतरि ।
[12]श्रद्धालुः श्रद्धया युक्ते, [13]पतयालुस्तु पातुके ॥ २७ ॥
[14]लज्जाशीलोऽपत्रपिष्णुर्वन्दा[15]रुरभिवादके ।
[16]शरारुर्घातुको हिंस्रः, [17]स्याद्वर्धिष्णुस्तु वर्धनः ॥ २८ ॥
[18]उत्पतिष्णुस्तूत्पतिता[19]ऽलङ्करिष्णुस्तु मण्डनः ।
[20]भूष्णुर्भविष्णुर्भविता, [21]वर्तिष्णुर्वर्तनः समौ ॥ २९ ॥

---

( १ ) आज्ञापालकस्य चत्वारि नामानि । [ आज्ञा पालक के ४ नाम । ] ( २ ) स्वाधीनस्य द्वे नामनी । [ स्वाधीन के २ गाम । ] ( ३ ) विनीतस्य त्रीणि नामानि । [ विनम्र के ३ नाम । ] ( ४ ) अविनीतस्य त्रीणि नामानि । [ उद्-दण्ड के ३ नाम । ] ( ५ ) प्रतिभान्वितस्य द्वे नामनी । [ प्रतिभाशाली के ३ नाम । ] ( ६ ) शालीनस्य नामद्वयम् । [ शालीन के २ नाम । ] ( ७ ) आश्चर्ययुक्तस्य द्वे नामनी । [ चकित के २ नाम । ] ( ८ ) अधीरमनसो द्वे नामनी । [ घबड़ाया हुआ के २ नाम । ] ( ९ ) भयशीलस्य चत्वारि नामानि । [ भीरु के ४ नाम । ] ( १० ) इष्टार्थप्राप्तीच्छोर्द्वे नामनी । [इच्छा पूर्ति को चाहने वाले के २ नाम । ] ( ११ ) ग्रहणशीलस्य नामद्वयम् । [ गृहीता के २ नाम । ] ( १२ ) श्रद्धयायुक्तस्यैकं नाम । [ श्रद्धालु । ] ( १३ ) पतनशीलस्य नामद्वयम् । [ पतनशील के २ नाम । ] ( १४ ) लज्जाशीलस्य नामद्वयम् । [ लज्जाशील के २ नाम । ] ( १५ ) अभिवादनशीलस्य नामद्वयम् । [ अभिवादनशील के २ नाम । ] ( १६ ) हिंसाशीलस्य त्रीणि नामानि । [ हिंसक के ३ नाम । ] ( १७ ) वर्धनशीलस्य नामद्वयम् । [वर्धनशील के २ नाम ।] ( १८ ) ऊर्ध्वपतन-शीलस्य नामद्वयम् । [ उछलने वाले के २ नाम । ] ( १९ ) अलङ्करणशीलस्य द्वे नामनी । [ शौकीन के २ नाम । ] ( २० ) भवनशीलस्य त्रीणि नामानि । [ होनहार के ३ नाम । ] ( २१ ) वर्तनशीलस्य द्वे नामनी । [ व्यवहारशील के २ नाम । ]

[1]निराकरिष्णुः क्षिप्नुः स्यात् [2]सान्द्रस्निग्धस्तु मेदुरः ।
[3]ज्ञाता तु विदुरो विन्दु[4]र्विकासी तु विकस्वरः ॥ ३० ॥
[5]विसृत्वरो विसृमरः प्रसारी च विसारिणि ।
[6]सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥ ३१ ॥
[7]क्रोधनोऽमर्षणः कोपी, [8]चण्डस्त्वत्यन्तकोपनः ।
[9]जागरूको जागरिता, [10]घूर्णितः प्रचलायितः ॥ ३२ ॥
[11]स्वप्नक् शयालु[1]र्निद्रालु[2]र्निद्राण-शयितौ समौ ।
[13]पराङ्मुखः पराचीनः, [14]स्यादवाङप्यधोमुखः ॥ ३३ ॥
[15]देवानञ्चति देवद्रयङ्, [16]विष्वद्रयङ् विष्वगञ्चति ।
[17]यःसहाञ्चति सध्यङ् स, [18]स तिर्यङ् यस्तिरोऽञ्चति ॥ ३४ ॥
[19]वदो वदावदो वक्ता, [20]वागीशो वाक्पतिः समौ ।
[21]वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ॥ ३५ ॥

---

( १ ) निराकरणशीलस्य द्वे नामनी । [ निषेध करने वाले के २ नाम । ] ( २ ) अत्यन्तस्निग्धस्य द्वे नामनी । [ अतिप्रिय के २ नाम । ] ( ३ ) ज्ञानशीलस्य त्रीणि नामानि । ( ४ ) विकसनशीलस्य द्वे नामनी । [ विकासशील के २ नाम । ] ( ५ ) प्रसरणशीलस्य चत्वारि नामानि । [फैलने वाले के ४ नाम । ] ( ६ ) सहनशीलस्य षड् नामानि । [ सहनशील के ६ नाम । ] ( ७ ) क्रोधनस्य त्रीणि नामानि । [ क्रोधी के ३ नाम । ] ( ८ ) अतिक्रोधनस्य द्वे नामनी । [ अत्यन्त क्रोधी के २ नाम । ] ( ९ ) जागरूकस्य नामद्वयम् । [ सजग के २ नाम । ] ( १० ) घूर्णितस्य नामद्वयम् । [ ऊँघने वाले के २ नाम । ] ( ११ ) निद्राशीलस्य नामत्रयम् । अत्र स्वप्नक् शब्दो जान्तः । [ सोने के स्वभाव वाले के ३ नाम । ] ( १२ ) निद्रितस्य द्वे नामनी । [ सोये हुए के २ नाम । ] ( १३ ) विमुखस्य द्वे नामनी । [ विमुख के २ नाम । ] ( १४ ) अधोमुखस्य नामद्वयम् । [ औंधामुख के २ नाम । ] ( १५ ) देवपूजकस्य नामद्वयम् । [ देवतापूजक के २ नाम । ] ( १६ ) सर्वतो गच्छत एकम् । [ घुमक्कड़ । ] ( १७ ) सहचरस्यैकम् । [ साथी । ] ( १८ ) वक्रं गच्छत एकम् । [ टेढा चलने वाला । ] ( १९ ) वक्तुस्त्रीणि नामानि । [ वक्ता के ३ नाम । ] ( २० ) चतुरवचनस्य द्वे नामनी । [ बोलने में कुशल के २ नाम । ] ( २१ ) वाचोयुक्तिकुशलस्य चत्वारि नामानि । अन्ये तु पूर्वोक्तं नामद्वयं तार्किकस्य, शेषद्वयं बहुभाषिण इति । [ सभा चतुर के ४ नाम । ]

[1]स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्।
[2]दुर्मुखे मुखराऽबद्धमुखौ, [3]शक्लः प्रियंवदे ॥ ३६ ॥
[4]लोहलः स्यादस्फुटवाग् [5]गर्ह्यवादी तु कद्वदः।
[6]समौ कुवादकुचरौ, [7]स्यादसौम्यस्वरोऽस्वरः ॥ ३७ ॥
[8]रवणः शब्दनो, [9]नान्दीवादी नान्दीकरः समौ।
[10]जडोऽज्ञ [11]एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥
[12]तूष्णींशीलस्तु तूष्णीको, [13]नग्नोऽवासा दिगम्बरे।
[14]निष्कासितोऽवकृष्टःस्यात् [15]अपध्वस्तस्तु धिक्कृतः ॥ ३९ ॥
[16]आत्तगर्वोऽभिभूतः स्यात् [17]दापितःसाधितः समौ।
[18]प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥ ४० ॥
[19]निकृतः स्याद् विप्रकृतो, [20]विप्रलब्धस्तु वञ्चितः।

---

( १ ) वाचालस्य चत्वारि नामानि। [ वाचाल के ४ नाम। ] ( २ ) अप्रियवादिन स्त्रीणि नामानि। [ कटुभाषी के ३ नाम। ] ( ३ ) प्रियवादिनो नामद्वयम्। [ प्रियभाषी के २ नाम। ] ( ४ ) अस्फुटभाषिणो नामद्वयम्। [ अस्पष्ट बोलने वाले के २ नाम। ] ( ५ ) गर्ह्यभाषिणो नामद्वयम्। [ निन्दित-भाषण करने वाले के २ नाम। ] ( ६ ) कुकथनशीलस्य द्वे नामनी। [ अशुभ-भाषी के २ नाम। ] ( ७ ) रूक्षस्वरवतो नामद्वयम्। [ कटुभाषी के २ नाम। ] ( ८ ) शब्दकरणशीलस्य नामद्वयम्। [ बड़बड़िया के २ नाम। ] ( ९ ) नाटकादौ मङ्गलार्थं भेर्यादिवादकस्य नामद्वयम्। [ बाजा वादक के २ नाम। ] ( १० ) मूर्खस्य नामद्वयम्। [ मूर्ख के २ नाम। ] ( ११ ) भाषण-श्रवणयोर-योग्यस्यैकम्। अनेडमूकम्, इति पाठान्तरम्। शब्दोऽयं त्रिषु। [ गूंगा ] ( १२ ) मौनशीलस्य नामद्वयम्। [ चुप रहने वाला के २ नाम। ] ( १३ ) दिगम्बरस्य त्रीणि नामानि। [ नंगा के ३ नाम। ] ( १४ ) निष्कासितस्य द्वे नामनी। [ घर से निकाले हुए के २ नाम। ] ( १५ ) धिक्कृतस्य द्वे नामनी। [ धिक्कार प्राप्त के २ नाम। ] ( १६ ) गर्वयुक्तस्य नामद्वयम्। केचन चत्वारः पर्याया एतस्यैव इति। [घमण्डी के २ नाम।] ( १७ ) धनादिकं प्रदापितस्य द्वे नामनी। अथवा प्रदापितधनादेः। [ जिसको धन आदि दिलाया गया हो, उसके २ नाम। ] ( १८ ) प्रत्याख्यातस्य चत्वारि नामानि। [ अपमानित के ४ नाम। ] ( १९ ) तिरस्कृतस्य नामद्वयम्। [ तिरस्कृत के २ नाम।] ( २० ) वञ्चितस्य द्वे नामनी। [ ठगे हुए के २ नाम। ]

[1]मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥ ४१ ॥
[2]अधिक्षिप्तः प्रतिक्षिप्तो, [3]बद्धे कीलितसंयतौ ।
[4]आपन्न आपत्प्राप्तः स्यात् [5]कान्दिशीको भयद्रुतः ॥ ४२ ॥
[6]आक्षारितः क्षारितोऽभिशस्ते, [7]सङ्कसुकोऽस्थिरे ।
[8]व्यसनार्त्तोपरक्तौ द्वौ, [9]विहस्तव्याकुलौ समौ ॥ ४३ ॥
[10]विक्लवो विह्वलः स्यात्तु [11]विवशोऽरिष्टदुष्टधीः ।
[12]कश्यः कशार्हे, [13]सन्नद्धे त्वाततायी वधोद्यते ॥ ४४ ॥
[14]द्वेष्ये त्वक्षिगतो, [15]वध्यः शीर्षच्छेद्य इमौ समौ ।
[16]विष्यो विषेण यो वध्यो, [17]मुसल्यो मुसलेन यः ॥ ४५ ॥
[18]शिम्बिदानोऽकृष्णकर्मा, [19]चपलश्चिकुरः समौ ।
[20]दोषैकदृक् पुरोभागी, [21]निकृतस्त्वनृजुः शठः ॥ ४६ ॥

---

( १ ) मनोहतस्य चत्वारि नामानि । [दिल टूटा हुआ के ४ नाम ।] ( २ ) कृताक्षेपस्य द्वे नामनी । [जिसके प्रति आक्षेप किया गया है, के २ नाम ।] ( ३ ) बद्धस्य त्रीणि नामानि । [ बँधा हुआ के ३ नाम । ] ( ४ ) आपत्पतितस्य द्वे नामनी । [ कष्ट में पड़े हुए के २ नाम । ] ( ५ ) भयद्रुतस्य नामद्वयम् । [ डर से भागे हुए के २ नाम । ] ( ६ ) मैथुननिमित्तं मुधादूषितस्य त्रीणि नामानि । [ मिथ्या दूषित के ३ नाम । ] ( ७ ) अस्थिरस्वभाववतो द्वे नामनी । [ चल स्वभाव वाले के २ नाम । ] ( ८ ) दैव-मानुषीपीडायुक्तस्य द्वे नामनी । [ दैवी तथा मानुषी पीडा से युक्त के २ नाम । ] ( ९ ) व्याकुलस्य नामद्वयम् । [व्याकुल के २ नाम । ] ( १० ) स्वाङ्गान्यपि धारयितुमशक्तस्य द्वे नामनी । [ विह्वल के २ नाम । ] ( ११ ) आसन्नमरणलक्षणेन दुष्टबुद्धेर्नामद्वयम् । [ दुष्टिबुद्धि वाले के २ नाम । ] ( १२ ) ताडनयोग्यस्य नामद्वयम् । [ बेंत मारने योग्य के २ नाम । ] ( १३ ) वधोद्यतस्यैकम् । [ आततायी । ] ( १४ ) द्वेषार्हस्य नामद्वयम् । [ द्वेष योग्य के २ नाम । ] ( १५ ) शिरश्छेदार्हस्य द्वे नामनी । [ शिरकाट लेने योग्य के २ नाम । ] ( १६ ) विषेण बध्यस्यैकम् 'विष्यः' । [ विष से मारने योग्य । ] ( १७ ) मुसलेन वध्यस्यैकम् । [ मुसल्य । ] ( १८ ) पुण्यकर्मणो नामद्वयम् । कृष्णवर्मा, इति पाठे तु पापाचारस्यैकम् । [ पुण्य कर्मा । ] ( १९ ) दोषमनिश्चित्य बधादिकमाचरतो नामद्वयम् । [ चपल के २ नाम । ] किंवा चञ्चलस्य नामद्वयम् इत्यपि केचित् । ( २० ) दोषैकग्राहकस्य द्वे नामनी । [ दोषदर्शक के २ नाम । ] ( २१ ) विपरीताशयस्य त्रीणि नामानि । [ शठ के ३ नाम । ]

[1]कर्णेजपः सूचकः स्यात् [2]पिशुनो दुर्जनः खलः ।
[3]नृशंसो घातुकः क्रूरः पापो [4]धूर्तस्तु वञ्चकः ॥ ४७ ॥
[5]अज्ञ मूढ-यथाजात-मूर्ख-वैधेय-बालिशाः ।
[6]कदर्ये कृपण-क्षुद्र-किम्पचानमितम्पचाः ॥ ४८ ॥
[7]निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।
[8]वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४९ ॥
[9]अहङ्कारवानहंयुः, [10]शुभंयुस्तु शुभान्वितः ।
[11]दिव्योपपादुका देवा, [12]नृगवाद्या जरायुजाः ॥ ५० ॥
[13]स्वेदजाः कृमिदंशाद्याः, [14]पक्षिसर्पादयोऽण्डजाः ।
[15]उद्भिदस्तरुगुल्माद्या, [16]उद्भिदुद्भिज्जमुद्भिदम् ॥ ५१ ॥

---

( १ ) सूचकस्य द्वे नामनी । [ चुगलखोर के ३ नाम । ] ( २ ) खलस्य त्रीणि । [ दुष्ट के ३ नाम । ] अन्ये तु पञ्चैव सूचकपर्याया इति । ( ३ ) नृशंसस्य चत्वारि नामानि । [ क्रूर के ४ नाम । ] ( ४ ) वञ्चकस्य नामद्वयम् । [ ठग के २ नाम । ] ( ५ ) मूर्खस्य षड् नामानि । [ मूर्ख के ६ नाम । ] ( ६ ) कृपणस्य पञ्च नामानि । [ कंजूस के ५ नाम । ] ( ७ ) निर्धनस्य पञ्च नामानि । [दरिद्र के ५ नाम ।] ( ८ ) याचकस्य पञ्च नामानि । [ भिखमंगा के ५ नाम । ] ( ९ ) अहङ्कारयुक्तस्य नामद्वयम् । [ अहंकार वाला के २ नाम । ] ( १० ) शुभान्वितस्य द्वे नामनी । [ शुभेच्छुक के २ नाम । ] ( ११ ) मातापित्रादिदृष्टकारणरहिता अदृष्टसहकृतेभ्योऽणुभ्यः समुत्पन्ना ये देवाः ते दिव्योपपादुकाः कथ्यन्ते । अत्र नारकव्यावृत्तये दिव्यपदप्रयोगः । देवानामेकम् । [ देवताओं का नाम । ] ( १२ ) जरायुजानामेकम् । [ मनुष्य, गाय आदि को जरायुज कहते हैं । ] ( १३ ) स्वेदजानामेकं नाम । [ जूँ आदि स्वेदज होते हैं । ] ( १४ ) अण्डजानामेकम् । [ पक्षि, सर्प आदि अण्डज होते हैं । ] ( १५ ) भूमिमुद्भिद्य जायन्ते, इति तेषां नाम । [ वृक्ष, गुल्म आदि को उद्भिज कहते हैं । ] ( १६ ) उद्भिदां नामत्रयम् । [ उद्भिज के ३ नाम । ]

[1]सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ ५२ ॥
[2]तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।
[3]अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥
[4]निकृष्टप्रतिकृष्टाऽर्वरेफयाप्याऽवनाऽधमाः ।
कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणकाः समाः ॥ ५४ ॥
[5]मलीमसं तु मलिनं कच्चरं मलदूषितम् ।
[6]पूतं पवित्रं मेध्यञ्च, [7]वीध्रस्तु विमलार्थकम् ॥ ५५ ॥
[8]निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।
[9]असारं फल्गु, [10]शून्यं तु वशिकं तुच्छरिक्तके ॥ ५६ ॥
[11]क्लीबे प्रधानं प्रमुखं प्रवेकाऽनुत्तमोत्तमाः ।
मुख्य-वर्य-वरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ॥ ५७ ॥
पराध्यार्ग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।
[12]श्रेयान् श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥ ५८ ॥
[13]स्युरुत्तरपदे व्याघ्र-पुङ्गवर्षभ-कुञ्जराः ।
सिंह-शार्दूल-नागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥
[14]अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।

( १ ) सुन्दरस्य द्वादश नामानि । [ सुन्दर के १२ नाम । ] ( २ ) यस्य दर्शनात् तृप्तिर्न भवति तस्य नाम, [आसेचनकम् । ] ( ३ ) प्रियस्य षड् नामानि । [ प्रिय के ६ नाम । ] ( ४ ) अधमस्य त्रयोदश नामानि । [ अधम के १३ नाम । ] ( ५ ) मलिनस्य चत्वारि नामानि । [ गन्दा के ४ नाम । ] ( ६ ) पवित्रस्य त्रीणि नामानि । [ पवित्र के ३ नाम । ] ( ७ ) विमलस्वभाववतो द्वे नामनी । [ निर्मल स्वभाव वाले के २ नाम । ] ( ८ ) दूरीकृतमलस्य पञ्च नामानि । [ साफ के ५ नाम । ] ( ९ ) असारस्य द्वे नामनी । [ निःसार के २ नाम । ] ( १० ) तुच्छस्य नामचतुष्टयम् । [तुच्छ के ४ नाम ।] ( ११ ) श्रेष्ठस्य सप्तदश नामानि । [ श्रेष्ठ के १७ नाम । ] ( १२ ) अतिशोभनस्य पञ्च नामानि । [ श्रेष्ठ के ५ नाम । ] ( १३ ) उत्तरपदस्था व्याघ्रादयः सप्त शब्दाः श्रेष्ठार्थवाचका भवन्ति । [ श्रेष्ठार्थ वाचक शब्दः । ] ( १४ ) अप्रधानस्य त्रीणि नामानि । अप्रधानोपसर्जने क्लीबे । [ गौण, अप्रधान के ३ नाम । ]

[1]विशङ्कटं पृथु बृहद् विशालं पृथुलं महत् ॥ ६० ॥
वड्रोरु विपुलं, [2]पीन-पीव्नी तु स्थूलपीवरे ।
[3]स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥ ६१ ॥
स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ।
[4]अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥ ६२ ॥
[5]प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ ६३ ॥
[6]परःशताद्यास्ते येषां परा सङ्ख्या शतादिकात् ।
[7]गणनीये तु गणेयं, [8]सङ्ख्याते गणितमथ [9]समं सर्वम् ॥ ६४ ॥
विश्वमशेषंकृत्स्नंसमस्तनिखिलाखिलानि निःशेषम् ।
समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥
[10]घने निरन्तरं सान्द्रं, [11]पेलवं विरलं तनु ।
[12]समीपे निकटाऽऽसन्न-सन्निकृष्ट-सनीडवत् ॥ ६६ ॥
सदेशाऽभ्याश-सविध-समर्याद-सदेशवत् ।
उपकण्ठान्तिकाऽभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ॥ ६७ ॥
[13]संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।
[14]नेदिष्ठमन्तिकतमं स्याद् [15]दूरं विप्रकृष्टकम् ॥ ६८ ॥

---

( १ ) विशालस्य नव नामानि । [ बड़ा के ९ नाम । ] ( २ ) स्थूलस्य चत्वारि नामानि । [ मोटा के ४ नाम । ] ( ३ ) सूक्ष्मस्य चतुर्दश नामानि । [ सूक्ष्म के १४ नाम । ] ( ४ ) स्वल्पस्य पञ्च नामानि । [ थोड़ा के ५ नाम । ] ( ५ ) बहुलस्य द्वादश । [ बहुत के १२ नाम । ] ( ६ ) शतात्परस्यैकं नाम, 'परश्शताः' । [ सैकड़ों । ] आद्येन परस्सहस्राः । [ हजारों । ] ( ७ ) गणयितुं शक्यस्य द्वे नामनी । [ गिनने योग्य संख्या के २ नाम । ] ( ८ ) गणितस्य द्वे नामनी । [ हिसाब, गणित के २ नाम । ] ( ९ ) सकलस्य चतुर्दश नामानि । [ सम्पूर्ण के १४ नाम । ] ( १० ) निविडस्य त्रीणि नामानि । [ घना के ३ नाम । ] ( ११ ) विरलस्य नामत्रयम् । [ विरला के ३ नाम । ] ( १२ ) समीपस्य पञ्चदश नामानि । [ नजदीक के १५ नाम । ] ( १३ ) संलग्नस्य नामत्रयम् । [ सटा हुआ के ३ नाम । ] ( १४ ) अतिनिकटस्य नामद्वयम् । [ अत्यन्त समीप के २ नाम । ] ( १५ ) दूरस्य नामद्वयम् । [ दूर के २ नाम । ]

[1]दवीयश्च दविष्ठं च सुदूरं, [2]दीर्घमायतम् ।
[3]वर्तुलं निस्तलं वृत्तं, [4]बन्धुरं तून्नतानतम् ॥ ६९ ॥
[5]उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ [6]वामने ।
न्यङ्-नीच-खर्व-ह्रस्वाः [7]स्युरवाग्रेऽवनतानते ॥ ७० ॥
[8]अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम् ।
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥
[9]ऋजावजिह्मप्रगुणौ, [10]व्यस्ते त्वप्रगुणाऽकुलौ ।
[11]शाश्वतस्तु ध्रुवो नित्य-सदातन-सनातनाः ॥ ७२ ॥
[12]स्थास्नुः स्थिरतरः [13]स्थेयानेकरूपतया तु यः ।
कालव्यापी स कूटस्थः, [14]स्थावरो जङ्गमेतरः ॥ ७३ ॥
[15]चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ।
[16]चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥ ७४ ॥
चञ्चलं तरलं चैव पारिप्लव-परिप्लवे ।
[17]अतिरिक्तः समधिको, [18]दृढसन्धिस्तु संहतः ॥ ७५ ॥
[19]कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।

---

( १ ) सुदूरस्य त्रीणि नामानि । [ अत्यन्त दूर के ३ नाम । ] ( २ ) दीर्घस्य नामद्वयम् । [ लम्बा के २ नाम । ] ( ३ ) वर्तुलस्य त्रीणि नामानि । [ गोल के ३ नाम । ] ( ४ ) उन्नतानतस्य द्वे नामनी । [ ऊँचा-नीचा के २ नाम । ] ( ५ ) उन्नतस्य षड् नामानि । [ ऊँचा के ६ नाम । ] ( ६ ) लघोः पञ्च नामानि । [ छोटा के ५ नाम । ] ( ७ ) अधोमुखस्य त्रीणि नामानि । [ औंधा मुख के ३ नाम । ] ( ८ ) वक्रस्य एकादश नामानि । [ टेढ़ा के ११ नाम । ] ( ९ ) सरलस्य त्रीणि नामानि । [ सीधे के ३ नाम । ] ( १० ) आकुलस्य नामत्रयम् । [ घबड़ाये हुए के ३ नाम । ] ( ११ ) सनातनस्य पञ्च नामानि । [ स्थायी के ५ नाम । ] ( १२ ) स्थिरतरस्य त्रीणि नामानि । [ स्थिरतर के ३ नाम । ] ( १३ ) कूटस्थस्यैकम् । [ कूटस्थित का नाम । ] ( १४ ) स्थावरस्य नामद्वयम् । [ पेड़ आदि के २ नाम । ] ( १५ ) चरस्य षड् नामानि । [ घूमना के ६ नाम । ] ( १६ ) चलस्य दश नामानि । [ चञ्चल के १० नाम । ] ( १७ ) अधिकस्य द्वे नामनी । [ अधिक, ज्यादा के २ नाम । ] ( १८ ) दृढसन्धेर्नामद्वयम् । [ दृढसन्धि के २ नाम । ] ( १९ ) कठिनस्य नव नामानि । [ कठिन के ९ नाम । ]

जठरं मूर्तिमन्मूर्तं, [1]प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥
[2]पुराणे प्रतन-प्रत्न-पुरातन-चिरन्तनाः ।
[3]प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥
नूत्नश्च, [4]सुकुमारन्तु कोमलं मृदुलं मृदु ।
[5]अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥
[6]प्रत्यक्षं स्यादैन्द्रियकम[7]प्रत्यक्षमतीन्द्रियम् ।
[8]एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥
अप्येकसर्ग एकाग्रचोऽप्येकायनगतोऽपि च ।
[9]पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ॥ ८० ॥
[10]अन्तो जघन्यञ्चरममन्त्यपाश्चात्यपश्चिमाः ।
[11]मोघं निरर्थकं [12]स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥ ८१ ॥
[13]साधारणं तु सामान्यमे[14]काकी त्वेक एककः ।
[15]भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥ ८२ ॥
[16]उच्चावचं नैकभेद[17]मुच्चण्डमविलम्बितम् ।
[18]अरुन्तुदन्तु मर्मस्पृ[19]गबाधन्तु निरर्गलम् ॥ ८३ ॥

( १ ) प्रवृद्धस्य त्रीणि नामानि । [ बढ़ा हुआ के ३ नाम । ] ( २ ) पुरातनस्य पञ्च नामानि । [ पुराना के ५ नाम । ] ( ३ ) नवीनस्य सप्त नामानि । [ नया के ७ नाम । ] ( ४ ) कोमलस्य नामचतुष्टयम् । [ कोमल के ४ नाम । ] ( ५ ) पश्चादित्यर्थे चत्वारि नामानि । [ पीछे के ४ नाम । ] ( ६ ) प्रत्यक्षस्य द्वे नामनी । [ प्रत्यक्ष के २ नाम । ] ( ७ ) परोक्षस्य द्वे नामनी । [ परोक्ष के २ नाम । ] ( ८ ) एकाग्रस्य सप्त नामानि । [ ध्यानमग्न के ७ नाम । ] ( ९ ) आद्यस्य पञ्च नामानि । [ प्रथम के ५ नाम । ] ( १० ) अन्त्यस्य षड् नामानि । [ आखिरी के ६ नाम । ] ( ११ ) निरर्थकस्य द्वे नामनी । [ व्यर्थ के २ नाम ।] ( १२ ) स्पष्टस्य चत्वारि नामानि । [ साफ के ४ नाम । ] ( १३ ) सामान्यस्य द्वे नामनी । [साधारण के २ नाम । ] ( १४ ) असहायस्य त्रीणि नामानि । एकल इत्यपि पाठः । [असहाय के ३ नाम ।] ( १५ ) भिन्नार्थकाः षट् शब्दाः । [अलग के ६ नाम । ] ( १६ ) बहुप्रकारस्य द्वे नामनी । [ अनेक प्रकार के २ नाम । ] ( १७ ) उत्तालस्य द्वे नामनी । तत्र स्वामी अविलम्बनमिति । [ अविलम्ब के २ नाम । ] ( १८ ) मर्मपीडकस्य द्वे नामनी । तत्र मर्मस्पृक् शान्तः । [ मर्म भेदक के २ नाम । ] ( १९ ) अबाधितस्य नामद्वयम् । [ पीड़ारहित के २ नाम । ]

[1]प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।
[2]वामं शरीरं सव्यं स्यादप[3]सव्यं तु दक्षिणम् ॥ ८४ ॥
[4]सङ्कटं नाति सम्बाधः, [5]कलिलं गहनं समे ।
[6]सङ्कीर्णे सङ्कुलाकीर्णे [7]मुण्डितं परिवापितम् ॥ ८५ ॥
[8]ग्रन्थितं सन्दितं दृब्धं, [9]विसृतं विस्तृतं ततम् ।
[10]अन्तर्गतं विस्मृतं स्यात् [11]प्राप्तप्रणिहिते समे ॥ ८६ ॥
[12]वेल्लित-प्रेङ्खिताऽऽधूत-चलिताऽऽकम्पिता धुते ।
[13]नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥
[14]परिक्षिप्तं तु निवृतं, [15]मूषितं मुषितार्थकम् ।
[16]प्रवृद्धप्रसृते, [17]न्यस्तनिसृष्टे, [18]गुणिताहते ॥ ८८ ॥
[19]निदिग्धोपचिते, [20]गूढगुप्ते, [21]गुण्डितरूषिते ।

---

( १ ) प्रतिकूलार्थस्य चत्वारि नामानि । [ प्रतिकूल के ४ नाम । ] ( २ ) सव्यशरीरस्यैकम् । [ शरीर का बांया भाग । ] ( ३ ) अपसव्यस्यैकम् । [ शरीर का दाहिना भाग । ] ( ४ ) सङ्कीर्णस्य द्वे नामनी । [ संकीर्ण के २ नाम । ] ( ५ ) दुष्प्रवेशस्य द्वे नामनी । [ भीड़ युक्त के २ नाम । ] ( ६ ) नानाजातीय-सम्मिलितस्य त्रीणि नामानि । [ अनेक जाति के लोगों की भीड़ के ३ नाम । ] ( ७ ) कृतक्षौरकर्मणो द्वे नामनी । [ मुण्डन किये हुए के २ नाम । ] ( ८ ) गुम्फितस्य त्रीणि नामानि । [ गुँथा हुआ के ३ नाम । ] ( ९ ) लब्धप्रसरस्य त्रीणि नामानि । [ फैला हुआ के ३ नाम । ] ( १० ) विस्मृतस्य द्वे नामनी । [ भूला हुआ के २ नाम । ] ( ११ ) स्थापितस्य नामद्वयम् । [ रखा हुआ के २ नाम । ] ( १२ ) ईषत्कम्पितस्य षड् नामानि । [थोड़ा कँपा हुआ के ६ नाम । ] ( १३ ) प्रेरितस्य सप्त नामानि । [ प्रेरित के ७ नाम । ] ( १४ ) परिखादिना वेष्टितस्य द्वे नामनी । [ परिखा आदि से घिरे हुए के २ नाम । ] ( १५ ) चोरितस्य नामद्वयम् । [ चुरायी वस्तु के २ नाम । ] ( १६ ) प्रवृद्धस्य नामद्वयम् । [ बढ़ा हुआ के २ नाम । ] ( १७ ) त्यक्तस्य द्वे नामनी । [ छोड़ा हुआ के २ नाम । ] ( १८ ) गुणितस्य नामद्वयम् । [ गुणा किया हुआ के २ नाम । ] ( १९ ) पुष्टिं प्रापितस्य नामद्वयम् । [ सुपुष्ट के २ नाम । ] ( २० ) गुप्तस्य द्वे नामनी । [ छिपा हुआ के २ नाम । ] ( २१ ) रूषितस्य द्वे नामनी । [ धूलि धूसरित के २ नाम । ]

[1]द्रुतावदीर्णे, [2]उद्गूर्णोद्यते, [3]काचितशिक्यिते ॥ ८९ ॥
[4]घ्राणाघ्राते, [5]दिग्धलिप्ते, [6]समुदक्तोद्धृते समे ।
[7]वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥
[8]रुग्णं भुग्नेऽथ [9]निशित-क्ष्णुत-शातानि तेजिते ।
[10]स्याद्विनाशोन्मुखं पक्वं [11]ह्रीण-ह्रीतौ तु लज्जिते ॥ ९१ ॥
[12]वृत्ते तु वृत्तव्यावृत्तौ, [13]संयोजित उपाहितः ।
[14]प्राप्यं गम्यं समासाद्यं, [15]स्यन्नं रीणं स्नुतं स्रुतम् ॥ ९२ ॥
[16]सङ्गूढः स्यात् सङ्कलितो[17]ऽवगीतः ख्यातगर्हणः ।
[18]विविधः स्याद् बहुविधो नानारूपः पृथग्विधः ॥ ९३ ॥
[19]अवरीणो धिक्कृतश्चाप्य[20]वध्वस्तोऽवचूर्णितः ।

---

( १ ) द्रुतस्य नामद्वयम् । [ पिघला हुआ के २ नाम । ] ( २ ) उत्तोलितस्य द्वे नामनी । [ उठाया हुआ के २ नाम । ] ( ३ ) शिक्यस्थापितस्य नामद्वयम् । [ छींका पर रखा हुआ के २ नाम । ] ( ४ ) आघ्रातस्य द्वे नामनी । 'घ्राणन्तु घ्रातघोणयो' । इति हैमः । [ सूंघा हुआ के २ नाम । ] ( ५ ) लिप्तस्य नामद्वयम् । [ लिपा हुआ के २ नाम । ] ( ६ ) निष्कासितजलादेर्नामद्वयम् । 'समे' इति प्रवृद्ध-प्रसृतादिकौ तुल्यार्थकौ । [ निकाले हुए जल आदि का २ नाम । ] ( ७ ) नद्यादिवेष्टितस्य पञ्च नामानि । [ नदी आदि से घिरा हुआ के २ नाम । ] ( ८ ) वक्रस्य नामद्वयम् । [ टेढ़ा के २ नाम । ] ( ९ ) शाणादिना तीक्ष्णीकृतस्य चत्वारि नामानि । [ शाण आदि से तेज किये हुए शस्त्र आदि के ४ नाम । ] ( १० ) विनाशोन्मुखस्य नामद्वयम् । [ विनाशोन्मुख के ३ नाम । ] ( ११ ) लज्जितस्य त्रीणि नामानि । [ शर्माया हुआ के ३ नाम । ] ( १२ ) स्वयंवृतस्य वरादेस्त्रीणि नामानि । [स्वयंवर विधि से वरण किये हुए के ३ नाम । ] ( १३ ) संयुक्तस्य नामद्वयम् । [ जोड़ा हुआ के २ नाम । ] ( १४ ) प्राप्तुं समर्थस्य त्रीणि नामानि । [ मिलने योग्य के ३ नाम । ] ( १५ ) प्रस्तुतस्य चत्वारि नामानि । [चूना हुआ के ४ नाम । ] ( १६ ) अङ्कान्तरेणैकीकृतस्याङ्कादेर्नामद्वयम् । [ जोड़ा हुआ के २ नाम । ] ( १७ ) अतिगर्हणस्य द्वे नामनी । [ अतिनिन्दित के २ नाम । ] ( १८ ) विविधस्य चत्वारि नामानि । [ विविधरूप के ४ नाम । ] ( १९ ) धिक्कृतस्य द्वे नामनी । [ निन्दित के २ नाम । ] ( २० ) अवचूर्णितस्य नामद्वयम् । केचित् प्रक्षिप्तसुधाचूर्णस्येति । [ चूर्ण किया हुआ । ]

[1]अनायासकृतं फाण्टं, [2]स्वनितं ध्वनितं समे ॥ ९४ ॥
[3]बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम् ।
[4]निष्पक्के क्वथितं, [5]पाके क्षीराज्यहविषां श्रृतम् ॥ ९५ ॥
[6]निर्वाणो मुनिवह्न्यादौ, [7]निर्वातस्तु गतेऽनिले ।
[8]पक्कं परिणतं, [9]गूनं हन्नं, [10]मीढं तु मूत्रिते ॥ ९६ ॥
[11]पुष्टे तु पुषितं, [12]सोढे क्षान्तमु[13]द्वान्तमुद्गते ।
[14]दान्तस्तु दमिते [15]शान्तःशमिते, [16]प्रार्थितेऽर्दितः ॥ ९७ ॥
[17]ज्ञप्तस्तु ज्ञपिते, [18]छन्नश्छादिते, [19]पूजितेऽञ्चितः ।
[20]पूर्णस्तु पूरिते, [21]क्लिष्टः क्लिशितेऽवसिते[22] सितः ॥ ९८ ॥
[23]प्रुष्टप्लुष्टोषिता दग्धे, [24]तष्टत्वष्टौ तनूकृते ।

---

( १ ) फाण्टस्य नामद्वयम् । [ चाय की भाँति पकाया हुआ क्वाथ के २ नाम । ] ( २ ) ध्वनितस्य नामद्वयम् । [ ध्वनित के २ नाम । ] ( ३ ) बद्धस्य षड् नामानि । [ बँधा हुआ के ६ नाम । ] ( ४ ) सम्पूर्ण पक्वस्य नामद्वयम् । [ पूरा पका हुआ के २ नाम । ] ( ५ ) क्षीरादिषु पक्वस्यैकम् । [ दूध, घी में पका हुआ । ] ( ६ ) मुनिवह्न्यादिनिर्वाणस्यैकम् । [ मुनि की मृत्यु तथा आग का बुझना । ] ( ७ ) निर्वातस्यैकम् । [ वायु रहित स्थान । ] ( ८ ) पक्वस्य नामद्वयम् । [ पका हुआ के २ नाम । ] ( ९ ) निःसृतमलस्य द्वे नामनी । [ मल त्याग के २ नाम । ] ( १० ) मूत्रितस्य नामद्वयम् । [ मूत्रत्याग के २ नाम । ] ( ११ ) लब्धपोषणस्य नामद्वयम् । [ पका हुआ के २ नाम । ] ( १२ ) सोढस्य नामद्वयम् । [ सहन किया हुआ के २ नाम । ] ( १३ ) कृतवमनस्य नामद्वयम् । [जिसने वमन किया हो, उसके २ नाम । ] ( १४ ) दमितस्य वृषभादेर्द्वे नामनी । [ दमन किये हुए बैल आदि के २ नाम । ] ( १५ ) शान्तस्य नामद्वयम् । [ शान्त के २ नाम । ] ( १६ ) प्रार्थितस्य द्वे नामनी । [ प्रार्थित के २ नाम । ] ( १७ ) लब्धबोधस्य नामद्वयम् । [ ज्ञान प्राप्त के २ नाम । ] ( १८ ) आच्छादितस्य नामद्वयम् । [ ढका हुआ के २ नाम । ] ( १९ ) पूजितस्य नामद्वयम् । [ पूजित के २ नाम । ] ( २० ) पूर्णस्य द्वे नामनी । [ पूर्ण के २ नाम । ] ( २१ ) लब्धकष्टस्य नामद्वयम् । [ कष्टप्राप्त के २ नाम । ] ( २२ ) समाप्तस्य नामद्वयम् । [ समाप्त के २ नाम । ] ( २३ ) दग्धस्य चत्वारि नामानि । [ जला हुआ के ४ नाम । ] ( २४ ) तनूकृतस्य त्रीणि नामानि । [ पतला किये हुए के ३ नाम । ]

[1]वेधितच्छिद्रितौ विद्धे, [2]विन्नवित्तौ विचारिते ॥ ९९ ॥
[3]निष्प्रभे विगताऽरोकौ, [4]विलीने विद्रुतद्रुतौ ।
[5]सिद्धे निर्वृत्तनिष्पन्नौ, [6]दारिते भिन्नभेदितौ ॥ १०० ॥
[7]ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्तते ।
[8]स्यादर्हितेनमस्यितनमसितमपचायितार्चितापचितम् ॥ १०१ ॥
[9]वरिवसिते वरिवस्यितमुपासितञ्चोपचरितञ्च ।
[10]सन्तापितसन्तप्तौ धूपितधूपायितौ च दूनश्च ॥ १०२ ॥
[11]हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।
[12]छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ॥ १०३ ॥
[13]स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ।
[14]लब्धं प्राप्तं विन्नं भावितमासादितं च भूतञ्च ॥ १०४ ॥
[15]अन्वेषितङ्गवेषितमन्विष्टं मार्गितं मृगितम् ।
[16]आर्द्रं सान्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तञ्च ॥ १०५ ॥
[17]त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ।
[18]अवगणितमवमतावज्ञातेऽवमानितञ्च परिभूते ॥ १०६ ॥

---

( १ ) विद्धस्य त्रीणि नामानि । [ विंधा हुआ के ३ नाम । ] ( २ ) विचारितस्य नामत्रयम् । [ विचार किया हुआ के ३ नाम । ] ( ३ ) निष्प्रभस्य नामत्रयम् । [ प्रभाहीन के ३ नाम । ] ( ४ ) स्वतो द्रवीभूतस्य नामत्रयम् । [ अपने से पिघले हुए के ३ नाम । ] ( ५ ) सिद्धस्य त्रीणि नामानि । [ सिद्ध कार्य के ३ नाम । ] ( ६ ) विदारितस्य त्रीणि नामानि । [ फाड़ा हुआ के ३ नाम । ] ( ७ ) स्यूतस्य नामचतुष्टयम् । [ सिले हुए के ४ नाम । ] ( ८ ) नमस्कृतस्य षड् नामानि । [ नमस्कार किये हुए के ६ नाम । ] ( ९ ) पूजितस्य नामचतुष्टयम् । [ पूजित के ४ नाम । ] ( १० ) सन्तापितस्य पञ्च नामानि । [ सन्तप्त के ५ नाम । ] ( ११ ) प्रहृष्टस्य षड् नामानि । [ प्रसन्न के ६ नाम । ] ( १२ ) छिन्नस्य अष्टौ नामानि । [ कटा हुआ के ८ नाम । ] ( १३ ) च्युतस्य सप्त नामानि । [ बिछुड़ा हुआ के ७ नाम । ] ( १४ ) प्राप्तस्य षड् नामानि । [ पाये हुए के ६ नाम । ] ( १५ ) गवेषितस्य पञ्च नामानि । [ ढूँढा हुआ के ५ नाम । ] ( १६ ) आर्द्रस्य सप्त नामानि । [ गीला के ७ नाम । ] ( १७ ) रक्षितस्य षड् नामानि । [ सुरक्षित के ६ नाम । ] ( १८ ) परिभूतस्य पञ्च नामानि । [ अपमानित के ५ नाम । ]

[1]त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ।
[2]उक्तंभाषितमुदितंजल्पितमाख्यातमभिहितंलपितम् ॥ १०७ ॥
[3]बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ।
[4]उरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥ १०८ ॥
सङ्गीर्ण-विदित-संश्रुत-समाहितोपश्रुतोपगतम् ।
[5]ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ॥ १०९ ॥
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ।
[6]भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातम् ॥ ११० ॥
अभ्यवहृताऽन्न-जग्ध-ग्रस्त-ग्लस्ताऽशितं भुक्ते ।
[7]क्षेपिष्ठ-क्षोदिष्ठ-प्रेष्ठ-वरिष्ठ-स्थविष्ठ-बंहिष्ठाः ॥ १११ ॥
क्षिप्र-क्षुद्राभीप्सित-पृथु-पीवर-बहुल-प्रकर्षार्थाः ।
[8]साधिष्ठ-द्राघिष्ठ-स्फेष्ठ-गरिष्ठ-ह्रसिष्ठ-वृन्दिष्ठाः ॥ ११२ ॥
बाढ-व्यायत-बहु-गुरु-वामन-वृन्दारकातिशये ।

इति विशेष्यनिघ्नवर्गः ।



## २. अथ सङ्कीर्णवर्गः

[9]प्रकृतिप्रत्ययार्थाद्यैः सङ्कीर्णे लिङ्गमुन्नयेत् ।

---

( १ ) त्यक्तस्य षड् नामानि । [ छोड़ा हुआ के ६ नाम । ] ( २ ) भाषितस्य सप्त नामानि । [ कहा हुआ के ७ नाम । ] ( ३ ) विदितस्य सप्त नामानि । [ मालूम के ७ नाम । ] ( ४ ) स्वीकृतस्यैकादश नामानि । [ स्वीकृत के ११ नाम । ] ( ५ ) स्तुतस्य द्वादश नामानि । [ वर्णित के १२ नाम । ] ( ६ ) भक्षितस्य चतुर्दश नामानि । [ खाया, पीया, चबाया, चाटा हुआ आदि के १४ नाम । ] ( ७ ) अतिशयेन क्षिप्रादीनामेकैकम् । [ क्षिप्र, क्षुद्र, प्रिय, उरु, स्थूल, बहुल के १-१ नाम । ] ( ८ ) साधिष्ठादीनां बाढादिभिर्यथासङ्ख्यं बोध्यम् । तद् यथा—अतिशयेन बाढं = साधिष्ठम् । एवमेव अन्येऽपि । [ अत्यन्त बढ़ा हुआ, दीर्घ, स्थिर, गुरु, ह्रस्व, वृन्दारक के १-१ नाम । ]

इति विशेष्यनिघ्नवर्गः ।



( ९ ) सङ्कीर्णार्थैः सङ्कीर्णलिङ्गैश्च प्रारब्धत्वात् सङ्कीर्णाऽभिधेऽस्मिन् वर्गे

[1]कर्म क्रिया, [2]तत्सातत्ये गम्ये स्युरपरस्पराः ॥ १ ॥
[3]साकल्याऽऽसङ्गवचने पारायण-तुरायणे ।
[4]यदृच्छा स्वैरिता, [5]हेतुशून्या त्वास्था विलक्षणम् ॥ २ ॥
[6]शमथस्तु शमः शान्ति [7]र्दान्तिस्तु दमथो दमः ।
[8]अवदानं कर्मवृत्तं, [9]काम्यदानं प्रवारणम् ॥ ३ ॥
[10]वशक्रिया संवननं, [11]मूलकर्म तु कार्मणम् ।
[12]विधूननं विधुवनं, [13]तर्पणं प्रीणनाऽवनम् ॥ ४ ॥
[14]पर्याप्तिः स्यात् परित्राणं हस्तवारणमित्यपि ।
[15]सेवनं सीवनं स्यूति[16]र्विदरः स्फुटनं भिदा ॥ ५ ॥

---

प्रकृत्यर्थेन प्रत्ययार्थेन च रूपभेदादिना लिङ्गनिर्णयं विदध्यात् । प्रकृत्यर्थेन—'अपरस्परः' अत्र द्वन्द्वसमासत्वेन परवल्लिङ्गता, अतः त्रिलिङ्गपरशब्दवत् अपरस्परशब्दोऽपि तथैव । **प्रत्ययार्थेन**—'शान्तिः' स्त्रियां क्तिनो विधानात् । 'विधूननम्' नपुंसके ल्युटो विधानात् । **साहचर्येण**—डिम्बादेः पुंस्त्वं विज्ञेयम् । ( १ ) क्रियाया नामद्वयम् । [ कर्म के २ नाम । ] ( २ ) क्रियायाः क्रियावताञ्च सातत्ये लिङ्गत्रयम्भवति । तद्यथा **पुंसि**—अपरस्पराः सार्था गच्छन्ति । **स्त्रियाम्**—अपरस्पराः स्त्रिय आगच्छन्ति । **क्लीबे**—अपरस्पराणि कुलानि विराजन्ते । अत्र-अपरे च परे च, इति द्वन्द्वः । [ अपरस्पर शब्द के रूप तीनों लिंगों में होते हैं । ] ( ३ ) साकल्यवचने पारायणम्, परायणं वा । आसङ्गवचने—तुरायणम् । 'रत्नपारायणं नाम लङ्केयं मम मैथिलि' ॥ इति भट्टिः । [ साकल्य और आसंगवचन । ] ( ४ ) स्वेच्छाया द्वे नामनी । [ अपनी इच्छा के २ नाम । ] ( ५ ) हेतुशून्याया आस्थाया एकम् । [ अकारणस्थिति । ] ( ६ ) शान्तेस्त्रीणि नामानि । [ शान्ति के ३ नाम । ] ( ७ ) तपः क्लेशसहनस्य दमस्य त्रीणि नामानि । [ दम के ३ नाम । ] ( ८ ) प्रशस्तकर्मणो द्वे नामनी । [ शुभकार्य के २ नाम । ] ( ९ ) स्वेच्छया दानस्य नामद्वयम् । [ स्वेच्छा से दिया हुआ दान के २ नाम । ] ( १० ) वशीकरणस्य नामद्वयम् । [ वशीकरण के २ नाम । ] ( ११ ) औषधिमूलादिभिरुच्चाटनकर्मणो द्वे नामनी । [ जादू के २ नाम । ] ( १२ ) कम्पनस्य नामद्वयम् । [ काँपने के २ नाम । ] ( १३ ) प्रीणनस्य नामत्रयम् । [ तृप्त करने के ३ नाम । ] ( १४ ) मारणोद्यतनिवारणस्य नामत्रयम् । [ बचाने के ३ नाम । ] ( १५ ) सूचीक्रियायास्त्रीणि नामानि । [ सिलाई के ३ नाम । ] ( १६ ) द्विधाभावस्य त्रीणि नामानि । [ फूटना के ३ नाम । ]

[1]आक्रोशनमभीषङ्गः, [2]संवेदो वेदना न ना।
[3]सम्मूर्च्छनमभिव्याप्तिर्[4]याच्ञा भिक्षाऽर्थनाऽर्दना ॥ ६ ॥
[5]वर्धनं छेदनेऽथ द्वे [6]आनन्दनसभाजने।
आप्रच्छन्नम[7]थाम्नायः सम्प्रदायः, [8]क्षये क्षिया ॥ ७ ॥
[9]ग्रहे ग्राहो, [10]वशः कान्तौ, [11]रक्षणस्त्राणे [12]रणः क्वणे।
[13]व्यधो वेधे, [14]पचा पाके, [15]हवो हूतौ, [16]वरो वृतौ ॥ ८ ॥
[17]ओषः प्लोषे, [18]नयो नाये, [19]ज्यानिर्जीर्णौ, [20]भ्रमो भ्रमौ।
[21]स्फातिर्वृद्धौ, [22]प्रथा ख्यातौ, [23]स्पृष्टिः पृक्तौ, [24]स्नवः स्रवे ॥ ९ ॥
[25]एधा समृद्धौ, [26]स्फुरणे स्फुरणा, [27]प्रमितौ प्रमा।

---

( १ ) शापस्य नामद्वयम्। [ शाप, गाली के ३ नाम। ] ( २ ) अनुभवस्य नामद्वयम्। [ अनुभव के २ नाम। ] ( ३ ) सर्वतोव्याप्तेर्द्वे नामनी। [ चारों ओर व्याप्त के २ नाम। ] ( ४ ) याच्ञायाश्चत्वारि नामानि। [ मांगना के ४ नाम। ] ( ५ ) कर्तनस्य नामद्वयम्। [ काटना के २ नाम। ] ( ६ ) आप्रच्छनस्य त्रीणि नामानि। [ कुशलपूछना, प्यार करना के ३ नाम। ] ( ७ ) गुरुपरम्परागतप्राप्तोपदेशस्य नामद्वयम्। [ गुरुपरम्परा से प्राप्त उपदेश आदि के २ नाम। ] ( ८ ) अपचयस्य द्वे। [ ह्रास के २ नाम। ] ( ९ ) ग्रहणस्य द्वे। [ ग्रहण करने के २ नाम। ] ( १० ) इच्छाया द्वे। [ इच्छा के २ नाम। ] ( ११ ) रक्षाया द्वे। [ बचाना के २ नाम। ] ( १२ ) शब्दकरणस्य द्वे। [ शब्द के २ नाम। ] ( १३ ) वेधनस्य नामद्वयम्। [ छेदने के २ नाम। ] ( १४ ) पाकस्य द्वे। [ पकाना के २ नाम। ] ( १५ ) आकारणस्य नामद्वयम्। [ बुलाना के २ नाम। ] ( १६ ) वेष्टनस्य, वरस्य वा द्वे नामनी। 'तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः', [ घेरना या वरण करना के २ नाम। ] ( १७ ) दाहस्य नामद्वयम्। [ जलन के २ नाम। ] ( १८ ) नीतेः द्वे। [ नीति के २ नाम। ] ( १९ ) जीर्णत्वस्य, हानेः च। [ वृद्धता के २ नाम। ] ( २० ) भ्रमणस्य द्वे नामनी। [ घूमने के २ नाम। ] ( २१ ) वृद्धेः द्वे नामनी। [ वृद्धि के २ नाम। ] ( २२ ) नामद्वयं प्रसिद्धेः। [ प्रसिद्धि के २ नाम। ] ( २३ ) स्पर्शनस्य द्वे। [ छूना के २ नाम। ] ( २४ ) प्रस्रवस्य द्वे नामनी। [ झरना के २ नाम। ] ( २५ ) धनसम्पत्तेर्द्वे नामनी। क्वचिद् 'विधा' इति पाठः। [धन सम्पत्ति के २ नाम।] ( २६ ) स्फुरणस्य नामद्वयम्। [सूझना के २ नाम।] ( २७ ) प्रमाज्ञानस्य नामद्वयम्। [ प्रमा ज्ञान के २ नाम। ]

[1]प्रसूतिः प्रसवे, [2]श्च्योते प्राघारः [3]क्लमथुः क्लमे ॥ १० ॥
[4]उत्कर्षोऽतिशये, [5]सन्धिः श्लेषे, [6]विषय आश्रये ।
[7]क्षिपायां क्षेपणं [8]गीर्णिर्गिरौ [9]गुरणमुद्यमे ॥ ११ ॥
[10]उन्नाय उन्नये, [11]श्रायः श्रवणे, [12]जयने जयः ।
[13]निगादो निगदे, [14]मादो मद, [15]उद्वेग उद्भ्रमे ॥ १२ ॥
[16]विमर्दनं परिमलेऽ[17]भ्युपपत्तिरनुग्रहः ।
[18]निग्रहस्तु निरोधः [19]स्यात् अभियोगस्त्वभिग्रहः ॥ १३ ॥
[20]मुष्टिबन्धस्तु सङ्ग्राहो डिम्बे [21]डमर विप्लवौ ।
[22]बन्धनं प्रसितिश्चारः, [23]स्पर्शः स्प्रष्टोपतप्तरि ॥ १४ ॥
[24]निकारो विप्रकारः [25]स्यादाकारस्त्विङ्ग इङ्गितम् ।

---

( १ ) प्रसवनस्य प्रेरणस्य वा नामद्वयम् । [ प्रेरणा के २ नाम । ] ( २ ) क्षरणस्य द्वे । [ क्षीण होने के २ नाम । ] ( ३ ) ग्लानेर्द्वे । [ ग्लानि के २ नाम । ] ( ४ ) उत्कर्षस्य द्वे । [ उत्कर्ष के २ नाम । ] ( ५ ) सन्धेर्नामद्वयम् । [ मेल के २ नाम । ] ( ६ ) आश्रयस्य द्वे । क्वचिद् 'आशये' इति पाठः । [ आश्रय या आशय के २ नाम । ] ( ७ ) प्रेरणस्य द्वे । [ प्रेरणा के २ नाम । ] ( ८ ) निगरणस्य द्वे । [ निगलना के २ नाम । ] ( ९ ) भाराद्युद्यमनस्य द्वे । तत्र—गुरणं, गूरणं, गोरणञ्च दृश्यते । [ बोझ उठाने के २ नाम । ] ( १० ) उन्नयनस्य द्वे । [ तर्क करना के २ नाम । ] ( ११ ) सेवाया नामद्वयम् । ( १२ ) जयस्य द्वे । [ जीत के २ नाम । ] ( १३ ) स्पष्टभाषणस्य द्वे । ( १४ ) हर्षस्य द्वे । [ प्रसन्नता के २ नाम । ] ( १५ ) उद्वेगस्य द्वे । [ घबड़ाहट के २ नाम । ] ( १६ ) कुङ्कुमादिमर्दनस्य द्वे । [ कुंकुम आदि को मसलने के २ नाम । ] ( १७ ) अनुग्रहस्य द्वे । केचित्—हितसम्पादनस्य, अहित निवारण-प्रवृत्तेरिति कथयन्ति । [ कृपा के २ नाम । ] ( १८ ) निग्रहस्य द्वे । [ निग्रह के २ नाम । ] ( १९ ) कलहाऽऽह्वानस्य नामद्वयम् । [ झगड़ा बुलाना के २ नाम ।] ( २० ) मुष्टिबन्धस्य नामद्वयम् । [ मुट्ठी में पकड़ना के २ नाम । ] ( २१ ) उपद्रवस्य त्रीणि नामानि अशस्त्रकलहस्य, इति **स्वामी** । ( २२ ) बन्धनस्य त्रीणि । [ बन्धन के ३ नाम । ] ( २३ ) सन्तप्तस्य, सन्तापस्य वा त्रीणि । [ सन्तप्त के ३ नाम । ] ( २४ ) अपकारस्य द्वे नामनी । [ बुराई के २ नाम । ] ( २५ ) अभिप्रायानुरूपचेष्टायास्त्रीणि । [ चेष्टा के ३ नाम । ]

[1]परिणामो विकारो द्वे, समे विकृतिविक्रिये ॥ १५ ॥
[2]अपहारस्त्वपचयः, [3]समाहारः समुच्चयः ।
[4]प्रत्याहार उपादानं, [5]विहारस्तु परिक्रमः ॥ १६ ॥
[6]अभिहारोऽभिग्रहणं, [7]निहारोऽभ्यवकर्षणम् ।
[8]अनुहारोऽनुकारः स्यात् [9]अर्थस्यापगमे व्ययः ॥ १७ ॥
[10]प्रवाहस्तु प्रवृत्तिः स्यात् [11]प्रवहो गमनं बहिः ।
[12]वियामो वियमो यामो यमः संयाम-संयमौ ॥ १८ ॥
[13]हिंसाकर्माऽभिचारः [14]स्याज्जागर्या जागरा द्वयोः ।
[15]विघ्नोऽन्तरायःप्रत्यूहः, [16]स्यादुपघ्नोऽन्तिकाश्रये ॥ १९ ॥
[17]निर्वेश उपभोगः स्यात् [18]परिसर्पः परिक्रिया ।
[19]विधुरं तु प्रविश्लेषे[20]ऽभिप्रायश्छन्द आशयः ॥ २० ॥

---

( १ ) प्रकृतेरन्यथाभावस्य चत्वारि । [ अस्वास्थ के ४ नाम । ] ( २ ) अपहरणस्य द्वे नामनी । [ छीनना के २ नाम । ] ( ३ ) समाहारस्य द्वे नामनी । राशीकरणस्य वा । [ इकट्ठा करना के २ नाम । ] ( ४ ) विषयेभ्य इन्द्रिय-परावर्तनस्य । [ विषयों से इन्द्रियों को हटा लेने के २ नाम । ] ( ५ ) क्रीडार्थं सञ्चरणस्य द्वे । [ मौजमस्ती के लिये घूमना के २ नाम । ] ( ६ ) आभिमुख्येन ग्रहणस्य द्वे । [ लूटना के २ नाम ] ( ७ ) शस्त्रोदेर्युक्त्या निःसारणस्य द्वे नामनी । [ निकालना के २ नाम । ] ( ८ ) अनुहारस्य नामद्वयम् । [ अनुकरण या नकल करना के २ नाम । ] ( ९ ) व्ययस्यैकम् । [ खर्च करना । ] ( १० ) जलादेः सततप्रवृत्तेर्द्वे । [ निरन्तर प्रवाह के २ नाम । ] ( ११ ) बहिर्गमनस्यैकम् । [ वाहर जाना । ] ( १२ ) संयमनस्य षड् नामानि । विविधयमनस्य द्वे, उपरतिमात्रस्य द्वे, संयमनस्य द्वे च, इति **स्वामी** । [ संयम के ६ नाम । ] ( १३ ) मारणादिक्रियाया द्वे नामनी । [ मन्त्रादि प्रयोग द्वारा मारण क्रिया के २ नाम । ] ( १४ ) जागरणस्य द्वे । [ जागना के २ नाम । ] ( १५ ) विघ्नस्य त्रीणि नामानि । [ विघ्न के ३ नाम । ] ( १६ ) सन्निहिताश्रयस्य द्वे नामनी । [ घर के समीप के २ नाम । ] ( १७ ) उपभोगस्य नामद्वयम् । [ उपभोग के २ नाम । ] ( १८ ) परिजनादिना वेष्टनस्य नामद्वयम् । [ कुटुम्बियों से घिरा हुआ के २ नाम । ] ( १९ ) अत्यन्तवियोगस्य द्वे नामनी । [ अत्यन्त वियोग के २ नाम । ] ( २० ) अभिप्रायस्य त्रीणि नामानि । [ अभिप्राय के ३ नाम । ]

**[1]सङ्क्षेपणं समसनं, [2]पर्यवस्था विरोधनम् ।**
**[3]परिसर्या परीसारः [4]स्यादास्या त्वासना स्थितिः ॥ २१ ॥**
**[5]विस्तारो विग्रहो व्यासः, स च [6]शब्दस्य विस्तरः ।**
**[7]संवाहनं मर्दनं स्याद् [8]विनाशः स्याददर्शनम् ॥ २२ ॥**
**[9]संस्तवः स्यात्परिचयः, [10]प्रसरस्तु विसर्पणम् ।**
**[11]नीवाकस्तु प्रयामः स्यात् [12]सन्निधिः सन्निकर्षणम् ॥ २३ ॥**
**[13]लवोऽभिलावो लवने, [14]निष्पावः पवने पवः ।**
**[15]प्रस्तावः स्यादवसरस्[16]त्रसरः सूत्रवेष्टनम् ॥ २४ ॥**
**[17]प्रजनं स्यादुपसरः, [18]प्रश्रय-प्रणयौ समौ ।**
**[19]धीशक्तिर्निष्क्रमोऽस्त्री तु, [20]संक्रमो दुर्गसञ्चरः ॥ २५ ॥**

---

( १ ) सङ्क्षेपस्य द्वे नामनी । [ संक्षेप के २ नाम । ] ( २ ) विरोधस्य द्वे । [ विरोध के २ नाम । ] ( ३ ) सर्वतोगमनस्य द्वे । [ सब जगह घूमने के २ नाम । ] ( ४ ) आसनस्य त्रीणि नामानि । [ बैठना के ३ नाम । ] ( ५ ) विस्तारस्य वस्त्रादेस्त्रीणि । [ फैलाव के ३ नाम । ] ( ६ ) स एव शब्दस्य विस्तरः कथ्यते । [ उसी को विस्तार कहते हैं । ] ( ७ ) पादसंवाहनस्य द्वे । [ पैर दबाना के २ नाम । ] ( ८ ) तिरोधानस्य द्वे । [ अदर्शन के २ नाम । ] ( ९ ) परिचयस्य द्वे । [ परिचय के २ नाम । ] ( १० ) व्रणादिप्रसरणस्य द्वे । [ घाव का फैलना के २ नाम । ] ( ११ ) धान्यसञ्चयस्य द्वे । [ धान्य संयम के २ नाम । ] ( १२ ) सन्निधानस्य द्वे । [ समीप के २ नाम । ] ( १३ ) लवनस्य नामत्रयम् । [ काटना के ३ नाम । ] ( १४ ) धान्यादिबहुलीकरणस्य त्रीणि । [ अनाज को साफ करने के ३ नाम । ] ( १५ ) अवसरस्य द्वे । [ उचित समय के २ नाम । ] ( १६ ) सूत्रवेष्टनस्य द्वे नामनी । [ धागा लपेटना के २ नाम । ] ( १७ ) प्रथमगर्भग्रहणस्य द्वे । [ पहलीबार गर्भवती होने के २ नाम । ] ( १८ ) प्रीत्या प्रार्थनस्य प्रणयस्य वा द्वे नामनी । [ प्रणय के २ नाम । ] ( १९ ) बुद्धिसामर्थ्यस्य नामद्वयम् । [ बुद्धि शक्ति के २ नाम । ] अष्टधा धियः शक्तिः—

'शुश्रूषा श्रवणं चैव ग्रहणं धारणन्तथा ।
ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणाः' ॥
'निष्क्रमो निर्गमे ख्यातो बुद्धिसम्पदि निष्क्रमः' । इति रुद्रः ।

( २० ) दुर्गप्रवेशनक्रियाया द्वे नामनी । [ किला में प्रवेश के २ नाम । ]

[1]प्रत्युत्क्रमः प्रयोगार्थः, [2]प्रक्रमः स्यादुपक्रमः ।
[3]स्यादभ्यादानमुद्घात आरम्भः, [4]सम्भ्रमस्त्वरा ॥ २६ ॥
[5]प्रतिबन्धः प्रतिष्टम्भोऽ[6]वनायस्तु निपातनम् ।
[7]उपलम्भस्त्वनुभवः, [8]समालम्भो विलेपनम् ॥ २७ ॥
[9]विप्रलम्भो विप्रयोगो, [10]विलम्भस्त्वतिसर्ज्जनम् ।
[11]विश्रावस्तु प्रतिख्याति[12]रवेक्षा प्रतिजागरः ॥ २८ ॥
[13]निपाठ-निपठौ पाठे, [14]तेमस्तेमौ समुन्दने ।
[15]आदीनवाऽऽस्रवौ क्लेशे, [16]मेलके सङ्गसङ्गमौ ॥ २९ ॥
[17]संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।
[18]परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥ ३० ॥
[19]निर्वर्णनन्तु निध्यानं दर्शनाऽऽलोकनेक्षणम् ।
[20]प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥
[21]उपशायो विशायश्च पर्यायशयनार्थकौ ।

---

( १ ) कर्मारम्भे प्रथमप्रयोगस्य नामद्वयम् । [ कार्यारम्भ के २ नाम । ] ( २ ) प्रथमारम्भस्य नामद्वयम् । [ प्रारम्भ करने के २ नाम । ] ( ३ ) आरम्भ-सामान्यस्य त्रीणि । केचित् पञ्चापि आरम्भस्येति । [ सामान्य आरम्भ के ३ नाम । ] ( ४ ) त्वराया द्वे नामनी । [ शीघ्रता के २ नाम । ] ( ५ ) प्रति-बन्धस्य द्वे । [ रुकावट के २ नाम । ] ( ६ ) अधोनयनस्य द्वे । [ नीचे ले जाने के २ नाम । ] ( ७ ) अनुभवस्य द्वे । [ अनुभव के २ नाम । ] ( ८ ) विलेप-नस्य द्वे । [ चन्दन आदि लगाने के २ नाम । ] ( ९ ) वियोगस्य नामद्वयम् । [ मित्रजन वियोग के २ नाम । ] ( १० ) दानस्य द्वे । [ दान के २ नाम । ] ( ११ ) अतिप्रसिद्धेर्द्वे नामनी । [ अतिप्रसिद्धि के २ नाम । ] ( १२ ) अवेक्ष-णस्य द्वे । [ देख-रेख के २ नाम । ] ( १३ ) पठनस्य त्रीणि । [ पढ़ने के ३ नाम । ] ( १४ ) आर्द्रीभावस्य त्रीणि । [ गीला करना के ३ नाम । ] ( १५ ) क्लेशस्य त्रीणि नामानि । [ कष्ट के ३ नाम । ] ( १६ ) सङ्गमस्य त्रीणि नामानि । [ मिलना के ३ नाम । ] ( १७ ) अन्वेषणस्य पञ्च । मृगणा-मृगया, इति पाठभेदः । ( १८ ) आलिङ्गनस्य चत्वारि । [ आलिंगन के ४ नाम । ] ( १९ ) दर्शनस्य पञ्च नामानि । [ देखना के ५ नाम । ] ( २० ) प्रत्याख्यानस्य चत्वारि । [ जवाब देना, नहीं कहना के ४ नाम । ] ( २१ ) पर्यायक्रमेण प्रहरादौ शयनस्य द्वे । [ पारी से सोना के २ नाम । ]

[1]अर्तनं च ऋतीया च हृणीया च घृणार्थकाः ॥ ३२ ॥
[2]स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।
[3]पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥
[4]प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।
[5]स संस्तावः ऋतुषु या स्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥
[6]निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।
[7]स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥
[8]आविधो विध्यते येन, [9]तत्र विष्वक्समे निघः ।
[10]उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥
[ [11]निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु । ]
[12]आरत्यवरतिविरतय उपरामेऽथास्त्रियान्तु [13]निष्ठेवः ।
निष्ठ्यूतिर्निष्ठीवनं निष्ठेवनमित्यभिन्नानि ॥ ३७ ॥
[14]जवने जूतिः, [15]सातिस्त्ववसाने स्यादथ [16]ज्वरे जूर्तिः ।

---

( १ ) घृणार्थकाश्चत्वारि । [ घृणा के ४ नाम । ] ( २ ) विपर्ययस्य चत्वारि । [ विपर्यय के ४ नाम । ] ( ३ ) अतिक्रमस्य चत्वारि । [ अतिक्रमण, (लांघना) के ४ नाम ।] ( ४ ) भृत्यादिप्रेषणस्यैकम् । [नौकर आदि को भेजना ।] ( ५ ) यज्ञे स्तुतिकर्तुर्द्विजावस्थानभूमेरेकम् । [ यज्ञ में स्तोत्र पाठ का स्थान । ] ( ६ ) उद्घनस्यैकम् । [ बढ़ई जिस मोटी लकड़ी पर रखकर अन्य लकड़ियों को काटता है उसको उद्घन=उठगना कहते हैं । ] ( ७ ) स्तम्बघनस्य द्वे । [ सांवा कोदो आदि की बाल को तोड़कर रखने के लिये बनाई गई बांस की टोकरी के २ नाम । ] ( ८ ) भ्रमरसूच्यादेरेकम् । [ वर्मा । ] ( ९ ) तुल्यारोहपरिणाहवृक्षादेरेकम् । बेधनभेदस्येति, केचित् । [ निघ । ] ( १० ) धान्यानामूर्ध्वक्षेपणस्य द्वे । [ पछोड़ना, फटकना के २ नाम । ] ( ११ ) निगरणम् । [ निगलना । ] उद्गरणम् । [ डकार लेना । ] विक्षवणम् । [ छींकना । ] उद्ग्रहणम् । [ उगलना । ] ( १२ ) उपरमणस्य चत्वारि । [ उपरति के ४ नाम । ] ( १३ ) निष्ठीवनस्य चत्वारि नामानि । [ थूकना के ४ नाम । ] ( १४ ) वेगस्य द्वे । [ वेग के २ नाम । ] ( १५ ) समापनस्य द्वे । [ समाप्त करना के २ नाम । ] ( १६ ) ज्वरस्य नामद्वयम् । [ ज्वर के २ नाम । ]

[1]उदजस्तु पशुप्रेरणम[2]करणिरित्यादयः शापे ॥ ३८ ॥
[3]गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ।
[4]आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥ ३९ ॥
[5]माणवानां तु माणव्यं, [6]सहायानां सहायता ।
[7]हल्या हलानां, [8]ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ॥ ४० ॥
[9]द्वे पर्शुकानां पृष्ठानां पार्श्वपृष्ठ्यमनुक्रमात् ।
[10]खलानां खलिनी खल्याऽप्यथ[11] मानुष्यकं नृणाम् ॥ ४१ ॥
[12]ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ।
[13]अपि साहस्रकारीषचार्मणाऽऽथर्वणादिकम् ॥ ४२ ॥

इति सङ्कीर्णवर्गः ॥ २ ॥



---

( १ ) पशुप्रेरणस्य द्वे । [ पशु को हाँकना के २ नाम । ] ( २ ) शापस्यैकम् । आदि पदेन-अजननिः, अवग्राहः, निग्राहः, इत्यादीनि । [ शाप । ] ( ३ ) गोत्रान्तेभ्यो वृन्दमित्यर्थे वुञ्प्रत्ययत्वाद् **औपगवकम्**, इत्यादि भवति । **तद् यथा**—उपगोः अपत्यम् = **औपगवः** । येषां समूहः, वृन्दं वा **औपगवकम्** । आदिपदेन—**गार्गकम्, दाक्षकम्** । [ गोत्रान्तनाम । ] ( ४ ) अचेतसाम् अपूपादीनां वृन्दे तु आपूपिकम्, **शाष्कुलिकम्**, आदिपदेन **साक्तुकम्** भवति । [ मालपुवा आदि के समूह के नाम । ] ( ५ ) माणवानां समूहस्यैकम्—**माणव्यम्** । [ बच्चों का समूह । ] ( ६ ) सहायानां समूहस्यैकम् । [ सहायता । ] ( ७ ) हलानां समूहस्यैकम् । [ हल्या । ] ( ८ ) ब्रह्मणानां समूहस्यैकम् । [ ब्राह्मण्यम् । ] वाडवानां समूहस्यैकम् । [ वाडव्यम् । ] ( ९ ) पर्शुकानां समूहस्यैकं **पृष्ठ्यम्** । [ पार्श्व और पृष्ठ्य । ] ( १० ) खलानां समूहस्य **खलिनी, खल्या** चेति नामद्वयम् । [ दुष्टों के समूह के २ नाम । ] ( ११ ) मनुष्याणां समूहस्यैकं नाम **मानुष्यकम्** । [ मनुष्यों का समूह । ] ( १२ ) ग्राम, जन, धूम, पाश, गलसमूहानां पृथगेकैकम् । [ ग्राम, जन, धूम, पाशों के समूह । ] ( १३ ) सहस्राणां, करीषाणां, चर्मणाम्, अथर्वणाम् च समूहस्यैकैकम् । [ हजारों का समूह, चमड़ों का समूह, अथर्ववेदियों का समूह । ]

**इति सङ्कीर्णवर्गः ।**



## ३. अथ नानार्थवर्गः

[1]नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।
भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
[2]आकाशे त्रिदिवे नाको, [3]लोकस्तु भुवने जने ।
[4]पद्ये यशसि च श्लोकः, [5]शरे खड्गे च सायकः ॥ २ ॥
[6]जम्बुकौ क्रोष्टुवरुणौ, [7]पृथुकौ चिपिटाऽर्भकौ ।
[8]आलोकौ दर्शनोद्योतौ, [9]भेरीपटहमानकौ ॥ ३ ॥
[10]उत्सङ्गचिह्नयोरङ्कः, [11]कलङ्कोऽङ्काऽपवादयोः ।
[12]तक्षको नागवर्धक्यो[13]रर्कः स्फटिकसूर्ययोः ॥ ४ ॥

---

( १ ) केचन अनेकार्थवाचकाः शब्दाः कान्तखान्तादिभेदेनैवात्र कथिताः सन्ति । क अन्ते येषां ते कान्ताः । इत्यभिप्रायेण येषु कान्तादय प्रचुरप्रयोगास्ते तेषु तेषु भेदेषु गृहीताः । अपि शब्देन पूर्वोक्ता 'नाक' प्रभृति प्रसङ्गप्राप्ताः पुनरपि इह सङ्गृहोतास्तत्र पुनरुक्तिदोषो नोद्भाव्यः । [ ककारान्त खकारान्त आदि शब्दों का संग्रह । ] ( २ ) आकाशे स्वर्गे च **नाकः** । [ आकाश, स्वर्ग का नाम नाक । ] ( ३ ) भुवने जने च **लोकः** । [ भुवन, जन का नाम लोक । ] ( ४ ) पद्ये पशसि च **श्लोकः** । [ पद्य, यश का नाम श्लोक । ] ( ५ ) खड्गे, बाणे च **सायकः** । [ खड्ग, बाण का नाम सायक । ] ( ६ ) शृगाले वरुणे च **जम्बुकः** । [ शृगाल, वरुण का नाम जम्बुक । ] ( ७ ) बाले चिपिटे च **पृथुकः** । [ चिउड़ा, च्यूड़ा । ] ( ८ ) दर्शने प्रकाशे च **आलोकः** । **विशेषः**—'आलोकस्तु पुमान् द्योते दर्शने वन्दिभाषणे' । इति मेदिनी । [ दर्शन, प्रकाश का नाम आलोक । ] ( ९ ) भेर्या पटहे च **आनकः** । **विशेषः**—आनकः पटहे भेर्या मृदङ्गे ध्वनदम्बुदे । इति मेदिनी । [ भेरी, पटह का नाम आनक । ] ( १० ) उत्सङ्गे चिह्ने च **अङ्कः** । [ गोद, चिह्न का नाम अंक । ]

**विशेषः**—'अङ्को रूपकभेदागश्चिह्ने रेखाजिभूषणे ।
रूपकाशान्तिकोत्सङ्गस्थानेऽकं पापदुःखयोः' ॥ इति मेदिनी ।

( ११ ) अङ्को अपवादे च **कलङ्कः** । **विशेषः**—'कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च' । इति मेदिनी । [ अंक, अपवाद का नाम कलंक । ] ( १२ ) सर्पभेदे वर्द्धकौ च **तक्षकः** । [ सर्पभेद, बढ़ई का नाम तक्षक । ] ( १३ ) स्फटिके सूर्ये च **अर्कः** । [ स्फटिक, सूर्य का नाम अर्क । ]

[1]मारुते वेधसि ब्रघ्ने पुंसि कः, कं शिरोऽम्बुनोः ।
[2]स्यात्पुलाकस्तुच्छधान्ये सङ्क्षेपे भक्तसिक्थके ॥ ५ ॥
[3]उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।
[4]कमण्डलौ च करकः, [5]सुगते च विनायकः ॥ ६ ॥
[6]किष्कुर्हस्ते वितस्तौ च, [7]शूककीटे च वृश्चिकः ।
[8]प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥ ७ ॥
[9]स्याद्भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च ।

---

( १ ) मारुते ब्रह्मणि सूर्ये च कः । शिरसि, अम्बुनि च कम् । [ वायु, ब्रह्म, सूर्य का नाम क । ]

**विशेषः**—को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजलेषु कम्' ॥ इति मेदिनी ।

( २ ) तुच्छधान्ये, सङ्क्षेपे, भक्तसिक्थके च **पुलाकः** । [ तुच्छ धान्य, संक्षेप, भातकी सीठी का नाम पुलाक । ] ( ३ ) उलूके करिणः पुच्छप्रान्तभागे च **पेचकः** । [ उल्लू, हाथी की पूंछ का अन्तिम भाग का नाम पेचक । ] ( ४ ) **कमण्डलौ च करकः** । [ कमण्डल का नाम करक । ]

**विशेषः**—'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च ।
द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ' ॥ इति मेदिनी ।

( ५ ) सुगते च **विनायकः**—[ बुद्ध का नाम विनायक । ] **विशेषः**—'विनायकस्तु हेरम्बे ताक्ष्ये विघ्ने जिने गुरौ ।' इति मेदिनी । ( ६ ) हस्ते वितस्तौ च **किष्कुः** । [ हाथ, वितस्ति ( बित्ता ) का नाम किष्कु । ] **विशेषः**—'किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि च' इति मेदिनी । ( ७ ) शूककीटे च **वृश्चिकः** । [ शूककीट का नाम वृश्चिक । ] **विशेषः**—वृश्चिकस्तु द्रुणौ राशौ शूककीटौषधीभिदोः ।' इति मेदिनी । ( ८ ) प्रतिकूले **प्रतीकः** । [ प्रतिकूल का नाम प्रतीक । ] अयमेकदेशे पुंसि, शेषे त्रिषु प्रयुज्यते । 'प्रतीकोऽवयवेऽपि स्यात् प्रतिकूलविलोमयोः । इति मेदिनी । ( ९ ) भूनिम्बे, कत्तृणे भूस्तृणेऽपि च **भूतिकम्** । [ भूनिम्ब कत्तृण, भूतृण का नाम भूतिक । ]

[1]ज्योत्स्निकायां च घोषे च कोशातक्यथ [2]कट्फले ॥ ८ ॥
सिते च खदिरे सोमवल्कः स्यादथ[3] सिल्हके।
तिलकल्के च पिण्याको, [4]बाल्हीकं रामठेऽपि च ॥ ९ ॥
[5]महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः।
[6]रुक् तापशङ्कास्वातङ्कः, [7]स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ १० ॥
[8]जैवातृकः शशाङ्केऽपि [9]खुरेऽप्यश्वस्य वर्तकः।
[10]व्याघ्रेऽपि पुण्डरीको ना, [11]यवान्यामपि दीपकः ॥ ११ ॥
[12]शालावृकाः कपिक्रोष्टुश्वानः, [13]स्वर्णेऽपि गैरिकम्।

---

( १ ) ज्योत्स्निकायां घोषे च **कोशातकी** । ज्योत्स्निका = पटोलिका, घोषो = अपामार्गः, इति स्वामी । [ ज्योत्स्निका, घोष का नाम कोषातकी । ] ( २ ) कट्फले सिते खदिरे च **सोमवल्कः** । [ कट्फल, श्वेत खदिर का नाम सोमवल्क । ] ( ३ ) सिह्लके तिलकल्के च **पिण्याकः** । [ सिह्लक, तिलकल्क का नाम पिण्याक । ] **विशेषः**—'पिण्याकोऽस्त्री तिलकल्के हिङ्गुवाह्लीकसिह्लके' । इति मेदिनी । ( ४ ) रामठे च **बाह्लीकम्** । [ रामठ ( हींग ) का नाम बाह्लीक । ] **विशेषः**—बाह्लीकं बाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोः' । इति **रभसः** । ( ५ ) महन्द्रे, गुग्गुलौ, उलूके, व्यालग्राहिणि च **कौशिकः** । [ महेन्द्र, गुग्गुलु, उलूक, व्यालग्राही का नाम कौशिक । ] ( ६ ) रुजि, तापे, शङ्कायाञ्च **आतङ्कः** । [ रोग, सन्ताप, शंका का नाम आतंक । ] ( ७ ) स्वल्पेऽपि **क्षुल्लकः** । स च त्रिषु भवति । [ स्वल्प का नाम क्षुल्लक । ] ( ८ ) शशाङ्केऽपि **जैवातृकः**, **दीर्घायुः** । [ चन्द्रमा का नाम जैवातृक । ] 'जैवातृकः पुमान् सोमे दीर्घायुकृशयोः स्त्रिषु' । इति मेदिनी । ( ९ ) अश्वस्य खुरेऽपि **वर्तकः** । [ घोड़े के खुर का नाम वर्तक । ] ( १० ) व्याघ्रेऽपि **पुण्डरीकः** । [ व्याघ्र का नाम पुण्डरीकः । ]

**विशेषः**—'पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे ।
पुंसि व्याघ्रोऽग्निदिङ्नागे कोशाकारान्तरेऽपि च ॥' इति मेदिनी ।

( ११ ) यवान्यामपि **दीपकः** । [ यवानी का नाम दीपक । ]

**विशेषः**—'दीपकं वागलङ्कारे वाच्यवद्दीप्तिकारके ।
दीपकश्चाजमोदायां यवानीबर्हिचूडयोः ॥' मेदिनी ।

( १२ ) वानरे, शृगाले, कुक्कुरे च **शालावृकः** । [ वानर, शृगाल, कुक्कुर का नाम शालावृक । ] ( १३ ) स्वर्णे रौक्मे च **गैरिकम्** । [सोना का नाम गैरिक ।]

[1]पीडार्थेऽपि व्यलीकं स्याद[2]लीकं त्वप्रियेऽनृते ॥ १२ ॥
[3]शीलान्वयावनूके द्वे, [4]शल्के शकलवल्कले ।
[5]साऽष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥ १३ ॥
दीनारेऽपि च निष्कोऽस्त्री, [6]कल्कोऽस्त्री शमलैनसोः ।
दम्भेऽप्यथ [7]पिनाकोऽस्त्री शूलशङ्करधन्वनोः ॥ १४ ॥
[8]धेनुका तु करेण्वाञ्च, [9]मेघजाले च कालिका ।
[10]कारिका यातनावृत्त्योः, [11]कर्णिका कर्णभूषणे ॥ १५ ॥
करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां, [12]त्रिषूत्तरे ।
वृन्दारकौ रूपिमुख्यावेके[13] मुख्यान्यकेवलाः ॥ १६ ॥
[14]स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ।
[15]लालाटिकः प्रभोर्भालदर्शी कार्याऽक्षमश्च यः ॥ १७ ॥

---

( १ ) पीडार्थे च **व्यलीकम्** । [ पीड़ा का नाम व्यलीक । ] ( २ ) अनृते अप्रिये च **अलीकम्** । [ अनृत, अप्रिय का नाम अलीक । ] ( ३ ) शीले अन्वये च **अनूकम्** । [ शील, अन्वय का नाम अनूक । ] ( ४ ) शकले च **शल्कम्** । [ शकल, वल्कल का नाम शल्क । ] ( ५ ) साष्टहेमशते, दीनारे, कर्षे, वक्षोऽलङ्करणे, हेमपात्रे, हेमपलेऽपि च **निष्कम्** । [ सोने की मोहर, दीनार, वक्षोलंकरण, स्वर्ण-पात्र का नाम निष्क । ] निष्कः पुंसि क्लीबे च प्रयुज्यते । ( ६ ) घृततैलादि-शेषे विष्ठायां, दम्भे पापे च **कल्कः** । स च पुंसि क्लीबे च । [ विष्ठा, दम्भ, पाप का नाम कल्क । ] ( ७ ) शूले रुद्रचापे च **पिनाकः** । [ शूल, शिवधनुष का नाम पिनाक । ] ( ८ ) करिण्यां धेनौ च **धेनुका** । [ करिणी, गाय का नाम धेनुका । ] ( ९ ) मेघजाले **कालिका** । [मेघजाल का नाम कालिका । ] ( १० ) नटयोषिति, यातनायां, विवरणश्लोके च **कारिका** । क्वचित् 'कृत्योः' इत्यपि । [ नट की स्त्री, यातना, विवरणश्लोक का नाम कारिका । ] ( ११ ) करिहस्ताग्रे कर्णभूषणे, करमध्याङ्गुलौ, पद्मबीजकोश्यां च कर्णिका । [ हाथी की सूंड, कर्णभूषण, हाथ की मध्यम अंगुली, पद्मबीजकोश का नाम कर्णिका । ] ( १२ ) खान्तेभ्यः प्राक् त्रिषु उत्तरे । सुरे, मनोज्ञे, श्रेष्ठे च **वृन्दारकः** । [ सुर, मनोज्ञ, श्रेष्ठ का नाम 'वृन्दारक' । ] ( १३ ) मुख्ये, अन्ये, केवले च **एकम्** । [ मुख्य, अन्य, केवल का नाम एक । ] ( १४ ) नीचैर्लोचने दाम्भिके च **कौक्कुटिकः** । [ नीचदृष्टि, दाम्भिक का नाम 'कौक्कुटिक' । ] ( १५ ) प्रभोर्भालदर्शिनि आलस्ययुक्ते च **लालाटिकः** । [ स्वामी की ओर देखने वाला, आलसी का नाम 'लालाटिक' । ]

[1]भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् ।
[2]सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ॥ १८ ॥
[3]पाकौ पक्तिशिशू, [4]मध्यरत्ने नेतरि नायकः ।
[5]पर्यङ्कः स्यात्परिकरे, [6]स्याद्व्याघ्रेऽपि च लुब्धकः ॥ १९ ॥
[7]पेटकस्त्रिषु वृन्देऽपि, [8]गुरौ देश्ये च देशिकः ।
[9]खेटकौ ग्रामफलकौ, धीवरेऽपि [10]च जालिकः ॥ २० ॥
[11]पुष्परेणौ च किञ्जल्कः, [12]शुल्कोऽस्त्री स्त्रीधनेऽपि च ।
[13]स्यात्कल्लोलेऽप्युत्कलिका, [14]वार्धकं भाववृन्दयोः ॥ २१ ॥
[15]करिण्यां चापि गणिका, [16]दारकौ बालभेदकौ ।

---

( १ ) पर्वतनितम्बे, वलये, चक्रेषु च कटकः । [ पर्वतनितम्ब, वलय, चक्र का नाम 'कटक' । ] ( २ ) सूच्यग्रभागे, स्वल्पबलवति रिपौ, रोमाञ्चे च **कण्टकः** । [ सुई की नोक, कमजोर शत्रु, रोमांच का नाम 'कण्टक' । ] ( ३ ) पाके शिशौ च **पाकः** । [ पाकक्रिया, शिशु का नाम 'पाक' । ] ( ४ ) हारस्थ-मध्यरत्ने, नेतरि च **नायकः** । [ हारमध्यस्थरत्न, नेता का नाम 'नायक' । ] ( ५ ) मञ्चे परिकरे च **पर्यङ्कः** । [ मंच, परिकर का नाम 'पर्यंक' । ] ( ६ ) व्याघ्रे व्याधे च **लुब्धकः** । [ व्याघ्र, व्याध का नाम 'लुब्धक' । ] ( ७ ) वृन्दे मञ्जूषायां च **पेटकः** । स च त्रिषु भवति । [ वृन्द, मञ्जूषा का नाम 'पेटक' । ] ( ८ ) गुरौ देश्ये च **देशिकः** । [ गुरु, देश्य का नाम 'देशिक' । ] ( ९ ) ग्रामे चर्मफलके च **खेटकः** । [ ग्राम, चर्मफलक का नाम—'खेटक' । ] ( १० ) धीवरे मायिके च **जालिकः** । [ धीवर, मायिक का नाम 'जालिक' । ] ( ११ ) केसरे पुष्परेणौ च **किञ्जल्कः** । [ केसर, फूलों के पराग का नाम 'किंजल्क' । ] ( १२ ) घट्टादिदेये स्त्रीधने च **शुल्कः** । [ घट्टादिदेयधन, स्त्रीधन का नाम 'शुल्क' । ] ( १३ ) उत्कण्ठायां कल्लोले च **उत्कलिका** । [ उत्कण्ठा, कल्लोल का नाम 'उत्कलिका' । ] ( १४ ) वृद्धानां वृन्दे भावे वा **वार्द्धकम्** । [ वृद्धों के समूह, वृद्धता का नाम 'वार्धक' । ] ( १५ ) करिण्यां वेश्यायां च **गणिका** । [ हथिनी, वेश्या का नाम 'गणिका' । ] ( १६ ) बालके भेदके च **दारकः** । [ बालक, भेदक का नाम 'दारक' । ]

[१]अन्धेऽप्यनेडमूकः स्याट्[२]टङ्कौ दर्पाऽश्मदारणौ ॥ २२ ॥

( इति कान्तवर्गः )

[३]मयूखस्त्विट्करज्वालास्[४]वलिबाणौ शिलीमुखौ ।
[५]शङ्खो निधौ ललाटास्थ्नि कम्बौ न [६]स्त्रीन्द्रियेऽपि खम् ॥ २३ ॥
[७]घृणिज्वाले अपि शिखे—

( इति खान्तवर्गः । )

—[८]शैलवृक्षौ नगावगौ ।
[९]आशुगौ वायुविशिखौ, [१०]शरार्कविहगाः खगाः ॥ २४ ॥
[११]पतङ्गौ पक्षिसूर्यौ च, [१२]पूगः क्रमुकवृन्दयोः ।
[१३]पशवोऽपि मृगा, [१४]वेगः प्रवाहजवयोरपि ॥ २५ ॥

---

( १ ) अन्धे, वक्तुं श्रोतुं च असमर्थे **अनेडमूकः** । [ अन्धा, बोलने तथा सुनने में असमर्थ का नाम 'अनेडमूक' । ] ( २ ) अश्मभेदने गर्वे च **टङ्कः** । [ अश्मभेदन, गर्व का नाम 'टंक' ( छेनी या टांकी ) । ]

**इति कान्ताः शब्दाः ।**

( ३ ) किरणे, ज्वालायां, शोभायां च **मयूखः** । [ किरण, ज्वाला, शोभा का नाम 'मयूख' । ] ( ४ ) भ्रमरे, बाणे च **शिलीमुखः** । [ भ्रमर, बाण का नाम 'शिलीमुख' । ] ( ५ ) निधौ, ललाटास्थ्नि, शङ्खे च **शङ्खः** । [निधि, ललाटास्थि, शंख का नाम 'शंख' । ] ( ६ ) इन्द्रिये, पुरे, क्षेत्रे, शून्ये च **खम्** । [ इन्द्रिय, पुर, क्षेत्र, शून्य का नाम 'खम्' । ] ( ७ ) चूडायां, शिफायां, ज्वालायां, प्रपदे च **शिखा** । [ चूडा, शिफा, ज्वाला, प्रपद का नाम 'शिखा' । ]

**इति खान्ताः शब्दाः ।**

( ८ ) शैले वृक्षे च **नगः**, **अगः** च । [ शैल, वृक्ष का नाम नग तथा 'अग' । ] ( ९ ) वायौ बाणे च **आशुगः** । [ वायु वाण का नाम 'आशुग' । ] ( १० ) सूर्ये, ग्रहे, शरे च **खगः** । [ सूर्य, ग्रह, शर का नाम 'खग' । ]

**विशेषः**—'खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे' । इति मेदिनी ।

( ११ ) खगे सूर्ये च **पतङ्गः** । [ खग सूर्य का नाम 'पतंगः' । ] ( १२ ) क्रमुके वृन्दे च **पूगः** । [ क्रमुक, वृन्द का नाम 'पूग' । ] ( १३ ) पशौ, कुरङ्गे च **मृगः** । [ पशु, कुरंग का नाम 'मृग' । ] ( १४ ) प्रवाहे जवे च **वेगः** । [ प्रवाह, जव का नाम 'वेग' । ]

[1]परागः कौसुमे रेणौ स्नायीयादौ रजस्यपि ।
[2]गजेऽपि नागमातङ्गाव[3]पाङ्गस्तिलकेऽपि च ॥ २६ ॥
[4]सर्गः स्वभावनिर्मोक्षनिश्चयाऽध्यायसृष्टिषु ।
[5]योगः संनहनोपायध्यानसङ्गतियुक्तिषु ॥ २७ ॥
[6]भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।
[7]चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ २८ ॥
[8]कपौ च प्लवगः, [9]शापे त्वभिषङ्गः पराभवे ।
[10]यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ २९ ॥

---

( १ ) कौसुमे रेणौ, स्नानीयादौ, रजसि च परागः । [ कुसुमरेणु, स्नानीय-चूर्ण, रजस् का नाम 'पराग' । ] ( २ ) 'नागं नपुंसके रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूराचारिषु तोयदे' ॥ नागकेसर-पुन्नाग-नागदन्तकमस्तके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थित.' ॥ इति मेदिनी । 'मातङ्गः श्वपचे गजे' । इति मेदिनी । [ नाग, मातंग का नाम 'गज' । ] ( ३ ) 'अपाङ्गस्त्वङ्गहीने-स्यान्नेत्रान्ते तिलकेऽपि च' । इति मेदिनी । 'अपाङ्गो नयनस्यान्ते स्याच्चित्रक-प्रधानयोः' । इत्यजयः । [ तिलक का नाम 'अपांग' । ] ( ४ ) 'सर्गस्तु निश्च-याऽध्यायमोहोत्साहात्मसृष्टिषु' । इति मेदिनी । निर्मोक्षः त्यागः, मोक्षस्याभावश्च । [ स्वभाव, निर्मोक्ष, निश्चय, अध्यायारम्भ का नाम 'सर्ग' । ] ( ५ ) 'योगोऽपूर्वार्थ सम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपुः स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे ॥ विस्रब्ध-घातके द्रव्योपायसंहननेष्वपि । कार्मणेऽपि च' । इति मेदिनी । संनहनं कवचम् । उपायः—सामादिः । [ संहनन, उपाय, ध्यान, संगति, युक्ति का नाम 'योग' । ] ( ६ ) 'भोगः सुखे धने चाहेः शरीरफणयोर्मतः । पालनेऽभ्यवहारे च योषिदादि-भृतावपि' । इति मेदिनी । 'पालनेऽभ्यवहारे च निर्देशे पण्ययोषिताम्' । इति विश्वः । [सुख, स्त्रीसहवास, सर्प का फण तथा शरीर का नाम 'भोग' । ] ( ७ ) चातके, हरिणे, शबले सारङ्गः । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले' । इति मेदिनी । [ चातक, हरिण, शबल, का नाम 'सारंग' । ] ( ८ ) सूर्यसारथौ, वानरे, भेके—प्लवगः । [ कपि का नाम 'प्लवग' । ] ( ९ ) पराभवे शापे अभिषङ्गः । [पराभव, अभिषंग का नाम 'शाप' ।] ( १० ) यानाङ्गे हलाङ्गे च युगः । [ यानांग, हलांग का नाम 'युग' और युग्म, सत्ययुग का नाम 'युगम्' । ]

[1]स्वर्गेषु-पशु-वाग्वज्र-दिङ्नेत्र-घृणि-भूजले ।
लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौर्लिङ्गं [2]चिह्नशेफसो ॥ ३० ॥
[3]शृङ्गं प्राधान्यसान्वोश्च, [4]वराङ्गं मूर्धगुह्ययोः ।
[5]भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ ३१ ॥
( इति गान्ताः )
[6]परिघः परिघातेऽस्त्रे[7]ऽप्योघो वृन्देऽम्भसां रये ।
[8]मूल्ये पूजाविधावर्घो[9]ऽहोदुःखव्यसनेष्वघम् ॥ ३२ ॥
त्रिष्विष्टेऽल्पे [10]लघुः—
( इति घान्ताः )

---

( १ ) स्वर्गे, बलीवर्दे, किरणे, कुलिशे, सौरभेय्या च **गौः** । लक्ष्यदृष्ट्या प्रयोगानुसारेण च गोशब्दः स्त्रियां पुंसि च प्रयुज्यते । 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्वाणदिग्वाग्भूस्वप्सु भूम्नि च' ॥ इति मेदिनी । [ स्वर्ग, बैल, किरण, कुलिश, सौरभेयी का नाम 'गौः' । ] ( २ ) चिह्ने मेहने च **लिङ्गम्** । 'लिङ्गं चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि । शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्' ॥ इति मेदिनी । [ चिह्न, पुरुष मूत्रेन्द्रिय का नाम 'लिंग' । ] ( ३ ) 'शृङ्गं प्रभुत्वं शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात् कूर्चशीर्षके ॥ स्त्रीविषायां स्वर्णमीनभेदयोर्ऋषभौषधौ' इति मेदिनी । [ प्रधानता, सानु का नाम 'शृंग । ] ( ४ ) मूर्धनि गुह्ये च **वराङ्गम्** । [ मूर्धा, गुह्य अंग का नाम 'वरांग' । ] ( ५ ) 'भगं श्रीर्योनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ' ॥ इति मेदिनी । [ श्रीः, काम, माहात्म्य, वीर्य, यत्न, सूर्य, कीर्ति का नाम 'भग' । ]

**इति गान्ताः शब्दाः ।**

( ६ ) अस्त्रे परिघाते च **परिघः** । [ परिघात, अस्त्र का नाम 'परिघ' । ] ( ७ ) अम्भसां रये, वृन्दे च **ओघः** । [ जल के वेग, वृन्द का नाम 'ओघ' । ] ( ८ ) पूजाविधौ मूल्ये च **अर्घः** । [ मूल्य, पूजाविधि का नाम 'अर्घ' । ] ( ९ ) अहंसि दुःखे, व्यसने च **अघम्** । [अह, दुःख, व्यसन का नाम 'अघ' ।] ( १० ) इष्टे, अल्पे च **लघुः** । स च त्रिषु भवति । 'कृष्णागुरुणि शीघ्रे च लघु क्लीबे गुरौ त्रिषु । निःसारे च मनोज्ञे च पृक्काया च लघुः स्त्रियाम्' ॥ इति **रभसः** । 'लघुनि गुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णाऽगुरुणि च पृक्कानामौषधौ तु स्त्री' ॥ इति मेदिनी । [ इष्ट, अल्प, का नाम 'लघु' । ]

**इति घान्ताः शब्दाः ।**

—[1]काचाः शिक्यमृद्भेदद्दग्रुजः ।
[2]विपर्यासे विस्तरे च प्रपञ्चः, [3]पावके शुचिः ॥ ३३ ॥
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।
[4]अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥ ३४ ॥
( इति चान्ताः )

[5]प्रसन्ने भल्लुकेऽप्यच्छो, [6]गुच्छः स्तबकहारयोः ।
[7]परिधानाऽञ्चले कच्छो जलप्रान्ते त्रिलिङ्गकः ॥ ३५ ॥
( इति छान्ताः )

[8]केकिताक्ष्यविहिभुजौ, [9]दन्तविप्राण्डजा द्विजाः ।
[10]अजा विष्णुहरच्छागा, [11]गोष्ठाध्वनिवहा व्रजाः ॥ ३६ ॥

---

( १ ) शिक्ये, मृद्भेदे, दृग्रुजि च **काचः** । [ शिक्य, मृद्भेद, नेत्ररोग का नाम 'काच' ( मोतियाबिन्द ) । ] ( २ ) विपर्यासे विस्तरे च **प्रपञ्चः** । [ विपर्यास, विस्तार का नाम 'प्रपञ्च' । ] ( ३ ) 'शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्ध-मन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' ॥ इति मेदिनी । पावके, ज्येष्ठे आषाढे च मासि, पवित्रे च **शुचिः** । [ पावक, ज्येष्ठ-आषाढ़ मास, मन्त्री, मेध्य, सित का नाम 'शुचि' । ] ( ४ ) अभिष्वङ्गे स्पृहायां किरणे च **रुचिः** । रुचि-शब्दः स्त्रियाम् । [ आलिंगन, स्पृहा, गभस्ति, का नाम 'रुचि' । ]

**इति चान्ताः शब्दाः ।**

( ५ ) प्रसन्ने भल्लुके च **अच्छः** । [ प्रसन्न, भालू का नाम 'अच्छ' । ] ( ६ ) स्तबके हारे च **गुच्छः** । [ स्तबक, हार का नाम 'गुच्छ' । ] ( ७ ) अञ्चले परिधाने, जलप्रान्ते च **कच्छः** । अयं त्रिषु लिङ्गेषु प्रयुज्यते । [ परिधान, अञ्चल, जलप्रान्त का नाम 'कच्छ' । ]

**इति छान्ताः शब्दाः ।**

( ८ ) मयूरे गरुडे च **अहिभुक्** । [ ताक्ष्य, अहिभुक् का नाम 'केकि' ( मयूर गरुड ) । ] ( ९ ) दन्ते, विप्रे, अण्डजे च **द्विजः** । [ दांत, विप्र, अण्डज का नाम 'द्विज' । ] ( १० ) 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' । इति विश्वः । विष्णौ, शिवे, छागे च **अजः** । [ विष्णु, हर, छाग का नाम 'अज' । ] ( ११ ) गोष्ठे मार्गसमूहे च **व्रजः** । [ गोस्थान, मार्गसमूह का नाम 'व्रज' । ]

[1]धर्मराजौ जिनयमौ [2]कुञ्जो दन्तेऽपि न स्त्रियाम् ।
[3]वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥ ३७ ॥
[4]समक्ष्मांशे रणेऽप्याजिः, [5]प्रजा स्यात्सन्ततौ जने ।
[6]अब्जौ शङ्खशशाङ्कौ च, [7]स्वके नित्यं निजं त्रिषु ॥ ३८ ॥
( इति जान्ताः )
[8]पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः ।
[9]संज्ञा स्याच्चेतना नामहस्ताद्यैश्चार्थसूचना ॥ ३९ ॥
( इति ञान्ताः )
[10]काकेभगण्डौ करटौ, [11]गजगण्डकटी कटौ ।
[12]शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ४० ॥
[13]देवशिल्पिन्यपि त्वष्टा, [14]दिष्टं दैवेऽपि न द्वयोः ।

---

( १ ) बुद्धे, यमे, युधिष्ठिरे च **धर्मराजः** । [जिन, यम का नाम 'धर्मराज' ।] ( २ ) निकुञ्जे हनौ दन्तिनां दन्ते च **कुञ्जः** स स्त्रियां न । [ दाँत का नाम 'कुञ्ज' । ] ( ३ ) गोपुरे क्षेत्रे वरयोषिति, वलजे, सुन्दर्यां च **वलजा** । [ क्षेत्र, पूर्द्वार का नाम वलज और सुन्दरी का नाम 'वलजा' । ] ( ४ ) समभूमौ युद्धे च **आजिः** । [ समतल भूमि, युद्ध का नाम 'आजि' । ] ( ५ ) सन्ततौ जने च **प्रजा** । [ सन्तान, जनता का नाम 'प्रजा' । ] ( ६ ) शङ्खे शशाङ्के च **अब्जः** । [ शंख, शशांक का नाम 'अब्ज' । ] ( ७ ) आत्मीये नित्ये च **निजः** । तत् त्रिषु । [ आत्मीय, नित्य का नाम 'निज' । ]

**इति जान्ताः शब्दाः ।**

( ८ ) आत्मनि क्षेत्रज्ञशब्दः पुंसि स एव कुशले वाच्यलिङ्गको भवति । [ आत्मज्ञ, प्रवीण का नाम क्षेत्रज्ञ । ] ( ९ ) अर्थस्य सूचनायां, नामनि, चेतनायां, रवियोषिति, हस्तादिसङ्केते च **संज्ञा** । [ चेतना, हाथ आदि के संकेत से प्राप्त सूचना का नाम 'संज्ञा' । ]

**इति ञान्ताः शब्दाः ।**

( १० ) काके इभगण्डे च **करटः** । [ कौआ, गजगण्डस्थल का नाम 'करट' । ] ( ११ ) गजगण्डे, पिप्पल्यां च **कटी** । तथा—श्रोणौ, कलिञ्जे, अतिशये, शवे च **कटः** । [ गजगण्डस्थल, कटि का नाम 'कट' । ] ( १२ ) महेश्वरे, दुश्चर्मणि, खलतौ च **शिपिविष्टः** । [ खलति, दुश्चर्म, महेश्वर का नाम 'शिपिविष्ट' । ] ( १३ ) रथकारे देवशिल्पिनि च **त्वष्टा** । [ देवशिल्पी का नाम 'त्वष्टा' । ] ( १४ ) दैवे पुमान्काले च **दिष्टम्** । [ दैव का नाम 'दिष्ट' । ]

[1]रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ४१ ॥
[2]रिष्टं क्षेमाऽशुभाऽभावेष्व[3]रिष्टे तु शुभाशुभे ।
[4]माया-निश्चल-यन्त्रेषु कैतवानृतराशिषु ॥ ४२ ॥
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।
[5]सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ॥ ४३ ॥
[6]आर्त्युत्कर्षाश्रयः कोट्यो, [7]मूले लग्नकचे जटा ।
[8]व्युष्टिः फलं समृद्धौ च, [9]दृष्टिर्ज्ञानेऽक्षिणदर्शने ॥ ४४ ॥
[10]इष्टिर्यागेच्छयोः, [11]सृष्टं निश्चिते बहुनि त्रिषु ।
[12]कष्टे तु कृच्छ्रगहने [13]दक्षामन्दाऽगदेषु च ॥ ४५ ॥
पटु,–द्वौ वाच्यलिङ्गौ च—

( इति टान्ताः )

—[14]नीलकण्ठः शिवेऽपि च ।

---

( १ ) मत्सरे, तीक्ष्णे, कट्वकार्ये, रसे च कटुः । [ कटुरस, अकार्य, मत्सर, तीक्ष्ण का नाम 'कटु' । ] ( २ ) खड्गे, फेनिले, क्षेमे, शुभे च रिष्टम् । [ क्षेम, अशुभाऽभाव का नाम 'रिष्ट' । ] ( ३ ) लशुने, निम्बे, तक्रे, सूतिकागारे, आसवे, शुभे, मरणचिह्ने च **अरिष्टम्** । [ शुभ, अशुभ का नाम 'अरिष्ट' । ] ( ४ ) मायायां, यन्त्रे, कैतवे, अयोघने, सीराङ्गे, अमृते, राशौ च कूटम् । [ निश्चलयन्त्र, कैतव, अनृतराशि, अयोघन, शैलशृंग, सीरांग कूट का नाम 'कैतव' । ] ( ५ ) सूक्ष्मैलायाम्, अल्पेकाले, संशये च **त्रुटिः** । [ सूक्ष्मैला ( छोटी इलायची ), अल्पकाल, संशय का नाम 'त्रुटि' । ] ( ६ ) अश्रौ, धनुषोऽग्रभागे, संख्याभेदे प्रकर्षे च **कोटिः** । अर्तिरपि पाठः । [ अश्रु, संख्याभेद का नाम 'कोटि' । ] ( ७ ) मूले लग्नकचे **जटा** । [ मूल, सटे हुए बालों का नाम 'जटा' । ] ( ८ ) फले समृद्धौ च **व्युष्टिः** । [ फल, समृद्धि का नाम 'व्युष्टि' । ] ( ९ ) अक्षिण दर्शने च **दृष्टिः** । [ ज्ञान, दर्शन का नाम 'दृष्टि' । ] ( १० ) इच्छायां यागे च **इष्टिः** । [ याग, इच्छा का नाम 'दृष्टि' ] ( ११ ) निश्चिते, बहुनि, प्रचुरे च **सृष्टम्** । तत् त्रिषु । [ निश्चित, बहुत का नाम 'सृष्ट' । ] ( १२ ) कष्टे गहने च **कष्टः** । [ कृच्छ्र, गहन का नाम 'कष्ट' । ] ( १३ ) अमन्दे, दक्षे, अगदे च **पटुः** । कष्टपटू द्वाविमौ वाच्यलिङ्गौ स्तः । [ दक्ष, अमन्द अगद का नाम 'पटु' । ]

**इति टान्ताः शब्दाः ।**

( १४ ) दात्यूहे कलविङ्के खञ्जे शिवे च नीलकण्ठः । [ शिव, काकातुआ का नाम 'नीलकण्ठ' । ]

[1]पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥ ४६ ॥
[2]निष्ठा निष्पत्तिनाशान्ताः, [3]काष्ठोत्कर्षे स्थितौ दिशि ।
[4]त्रिषु ज्येष्ठोऽतिशस्तेऽपि, [5]कनिष्ठोऽतियुवाल्पयोः ॥ ४७ ॥
( इति ठान्ताः )
[6]दण्डोऽस्त्री लगुडेऽपि [7]स्याद्गुडो गोलेक्षुपाकयोः ।
[8]सर्पमांसात्पशू व्याडौ, [9]गोभूवाचस्त्विडा इलाः ॥ ४८ ॥
[10]क्ष्वेडा वंशशलाकाऽपि, [11]नाडी नालेपि षट्क्षणे ।
[12]काण्डोऽस्त्री दण्डवाणाऽर्ववर्गाऽवसरवारिषु ॥ ४९ ॥
[13]स्याद् भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।
( इति डान्ताः )

---

( १ ) अन्तर्जठरे कुसूले मध्ये अन्तर्गृहे च **कोष्ठः** । [ अन्तर्जठर, कुसूल, अन्तर्गृह का नाम 'कोष्ठ' । ] ( २ ) निष्पत्तौ नाशे अन्ते च **निष्ठा** । [ निष्पत्ति, नाश, अन्त का नाम 'निष्ठा' । ] ( ३ ) दिशि उत्कर्षे, च **काष्ठा** । [ उत्कर्ष, स्थिति, दिशा का नाम काष्ठा' । ] ( ४ ) श्रेष्ठे वृद्धे मासान्तरे च **ज्येष्ठः** । [ प्रशस्त का नाम 'ज्येष्ठ' । ] गृहगोधायां, जन्तौ, नक्षत्रभेदे च **ज्येष्ठा** । ( ५ ) अतियूने, अत्यल्पानुजे, स्त्रियि दुर्बलाङ्गुलौ च **कनिष्ठः** । [अतियुवा, अति अल्पानुज आदि का नाम 'कनिष्ठ' । ]

**इति ठान्ताः शब्दाः ।**

( ६ ) यमे, मानभेदे, लगुडे च **दण्डः** । [ लगुड का नाम 'दण्ड' । ] ( ७ ) गोलके, हस्तिसन्नाहे, इक्षुविकारे च **गुडः** । [ इक्षुपाक तथा गोली का नाम 'गुड' । ] ( ८ ) व्याघ्रे खले सर्पे च **व्याडः** । व्यालोऽपि पाठः । [ सर्प, पशु का नाम 'व्याड' । ] ( ९ ) बुधयोषिति, सौरभेय्यां, वसुमत्यां च **इडा** । कलत्रे गवि वाचि च **इला** । [ गाय, भूमि, वाणी का नाम 'इडा' ( इला । ) ] ( १० ) सिंहनादे वंशशलाकायां च **क्ष्वेडा** । [ वंश शलाका का नाम 'क्ष्वेडा' । ] ( ११ ) षट्क्षणे नाले ( काले वा पाठभेदः ) शिरायां कुहनस्य चर्यायां **नाडी** । [ नाल, षट्क्षणकाल का नाम 'नाडी' । ] ( १२ ) अवसरे वाणे नाले शाखिनां स्कन्धे स्तम्बे रहसि वर्गे च **काण्डः** । [ अवसर, बाण, नाल, वृक्षस्कन्ध, स्तम्ब, रहस्, वर्ग का नाम 'काण्ड' । ] ( १३ ) पात्रे, वणिङ्मूलधने च **भाण्डम्** । [ पात्र, वणिक् मूलधन का नाम 'भाण्ड' । ]

**इति डान्ताः शब्दाः ।**

[1]भृशप्रतिज्ञयोर्बाढं, [2]प्रगाढं भृशकृच्छ्रयोः ॥ ५० ॥
[3]शक्तस्थूलौ त्रिषु दृढौ [4]व्यूढौ विन्यस्तसंहतौ ।
( इति ढान्ताः )
[5]भ्रूणोऽर्भके स्त्रैणगर्भे, [6]बाणो बलिसुते शरे ॥ ५१ ॥
[7]कणोऽतिसूक्ष्मे धान्यांशे, [8]संघाते प्रमथे गणः ।
[9]पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ ५२ ॥
[10]मौर्व्यां द्रव्याश्रिते सत्त्वे शौर्ये सन्ध्यादिके गुणः ।
[11]निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ ५३ ॥
[12]वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाऽक्षरे ।
[13]अरुणो भास्करेऽपि स्याद् वर्णभेदेऽपि च त्रिषु ॥ ५४ ॥
[14]स्थाणुः शर्वेऽप्यथ [15]द्रोणः काके [16]ऽप्याजौ रवे रणः ।

---

( १ ) भृशे प्रतिज्ञायाञ्च **बाढम्** । [ भृश, प्रतिज्ञा का नाम 'बाढ' । ] ( २ ) दृढे कृच्छ्रे च **प्रगाढः** । [ दृढ, कृच्छ्र का नाम 'प्रगाढ' । ] ( ३ ) शक्तौ स्थूले च **दृढः** । [ शक्ति, स्थूल का नाम 'दृढ' । ] ( ४ ) संहतविन्यस्ते पृथुले च **व्यूढः** । [ संहतविन्यस्त, पृथुल का नाम 'व्यूढ' । ]

इति ढान्ताः शब्दाः ।

( ५ ) स्त्रैणगर्भे अर्भके च **भ्रूणः** । [ स्त्रीगर्भ, अर्भक का नाम 'भ्रूण' । ] ( ६ ) बलिसुते शरे च **बाणः** । [ बलिपुत्र, शर का नाम 'बाण' । ] ( ७ ) अतिसूक्ष्मे धान्यांशे च **कणः** । [ अतिसूक्ष्म, धान्यांश का नाम 'कण' । ] ( ८ ) प्रथमे सङ्घाते च **गणः** । [ प्रथम, संघात का नाम 'गण' । ] ( ९ ) द्यूतादिषु उत्सृष्टे, भृतौ, मूले धने च **पणः** । [ द्यूतादि में दिया गया धन, भृति, मूल्य, धन का नाम 'पण' ] ( १० ) मौर्व्यां द्रव्याश्रिते सत्वे शौर्ये सन्ध्यादिके च **गुणः** । [ मौर्वी, द्रव्याश्रित, सत्व, शौर्य, सन्ध्यादिक का नाम 'गुण' । ] ( ११ ) निर्व्यापारस्थितौ कालविशेषे उत्सवे च **क्षणः** । [ निर्व्यापारस्थिति, कालविशेष, उत्सव का नाम क्षण' । ] ( १२ ) द्विजादौ, शुक्लादौ, स्तुतौ च **वर्णः** । अक्षरे **वर्णम्** । [ द्विजादि, शुक्ल आदि, स्तुति का नाम 'वर्ण' । तथा अक्षर का नाम 'वर्णम्' । ] ( १३ ) वर्णभेदे भास्करे च त्रिषु **अरुणः** । [वर्णभेद, भास्कर का नाम 'अरुण' ।] ( १४ ) कीले शिवे च **स्थाणुः** । [ कील, शिव का नाम 'स्थाणु' । ] ( १५ ) आढके कृष्णकाके च **द्रोणः** । [ आढक, कृष्णकाक का नाम 'द्रोण' । ] ( १६ ) शब्दे, कोणे, क्वणे, समरे च **रणः** । [शब्द, कोण, क्वण, समर का नाम 'रण' ।]

[१]ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥ ५५ ॥
[२]ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
[३]हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ ५६ ॥
[४]त्रिषु पाण्डौ च हरिणः, [५]स्थूणा स्तम्भेऽपि वेश्मनः ।
[६]तृष्णे स्पृहापिपासे द्वे, [७]जुगुप्साकरुणे घृणे ॥ ५७ ॥
[८]वणिक्पथे च विपणिः, [९]सुरा प्रत्यक् च वारुणी ।
[१०]करेणुरिभ्यां स्त्री नेभे, [११]द्रविणं तु बलं धनम् ॥ ५८ ॥
[१२]शरणं गृहरक्षित्रोः [१३]श्रीपर्णं कमलेऽपि च ।
[१४]विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ५९ ॥
[१५]प्रमाणं हेतु-मर्यादा-शास्त्रेयत्ता-प्रमातृषु ।
[१६]करणं साधकतमे क्षेत्रगात्रेन्द्रियेष्वपि ॥ ६० ॥

---

( १ ) नापिते श्रेष्ठे ग्रामाधिपे च त्रिषु **ग्रामणीः** । [ नापित, श्रेष्ठ ग्रामाधिप का नाम 'ग्रामणी' । ] ( २ ) अन्तरावर्तके, मेषादिलोम्नि, भ्रुवोः च **ऊर्णा** । [ अन्तरावर्तक, मेषादिलोम, भ्रू, का नाम 'ऊर्णा' । ] ( ३ ) हरितायां मृग्यां, हेमप्रतिमायां च **हरिणी** । [ हरितमृगी, हेमप्रतिमा का नाम 'हरिणी' । ] ( ४ ) सारङ्गे शबले पाण्डौ च **हरिणः** । [ सारंग, शबल, पाण्डु का नाम 'हरिण' । ] ( ५ ) सूर्म्यां वेश्मनःस्तम्भे च **स्थूणा** । [ सूर्मि, वेश्मस्तम्भ का नाम 'स्थूणा' । ] ( ६ ) स्पृहायां पिपासायां च **तृष्णा** । [ स्पृहा, पिपासा का नाम 'तृष्णा' । ] ( ७ ) करुणे जुगुप्सायां च घृणा । [ करुणा, जुगुप्सा का नाम 'घृणा' । ] ( ८ ) आपणे पण्यवीथ्यां च **विपणिः** । [ आपण, पण्यवीथि का नाम 'विपणि' । ] ( ९ ) गण्डदूर्वायां सुरायां च **वारुणिः** । [ गण्डदूर्वा, सुरा का नाम 'वारुणी' । ] ( १० ) गजयोषिति मतङ्गजे च **करेणुः** । [ गजयोषित्, मतङ्गज का नाम 'करेणु' । ] ( ११ ) काञ्चने पराक्रमे च **द्रविणम्** । [ काञ्चन, पराक्रम का नाम 'द्रविण' । ] ( १२ ) गृहे रक्षके च **शरणम्** । [ गृह, रक्षक का नाम 'शरण' । ] ( १३ ) कमले अग्निमन्थे च **श्रीपर्णम्** । [ कमल, अग्निमन्थ का नाम 'श्रीपर्ण' । ] ( १४ ) विषे युद्धे बले खरे लोहे च **तीक्ष्णम्** । [ विष, युद्ध, बल, खर, लौह का नाम 'तीक्ष्ण' । ] ( १५ ) मर्यादायां सत्यवादिनि शास्त्रे च **प्रमाणम्** । [ मर्यादा, सत्यवादी, शास्त्र का नाम 'प्रमाण' । ] ( १६ ) कारणे काये साधने इन्द्रियकर्मसु च **करणम्** । [ कारण, काय, साधन, इन्द्रियकर्म का नाम 'करण' । ]

[1]प्राण्युत्पादे संसरणमसम्बाधचमूगतौ ।
घण्टापथेऽथ [2]वान्ताऽन्ने समुद्गिरणमुन्नये ॥ ६१ ॥
अतस्त्रिषु, [3]विषाणं स्यात्पशुशृङ्गेभदन्तयोः ।
[4]प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥ ६२ ॥
[5]संकीर्णौ निचिताऽशुद्धा[6]वीरिणं शून्यमूषरम् ।
[ [7]सेतौ च वरणो, [8]वेणी नदीभेदे कचोच्चये ] ।
( इति णान्ताः )
[9]देवसूर्यौ विवस्वन्तौ, [10]सरस्वन्तौ नदाऽर्णवौ ॥ ६३ ॥
[11]पक्षितार्क्ष्यौ गरुत्मन्तौ [12]शकुन्तौ भासपक्षिणौ ।
[13]अग्न्युत्पातौ धूमकेतू, [14]जीमूतौ मेघपर्वतौ ॥ ६४ ॥
[15]हस्तौ तु पाणिनक्षत्रे, [16]मरुतौ पवनाऽमरौ ।

---

( १ ) असम्बाधचमूगतौ प्राण्युत्पादे घण्टापथे च **संसरणम्** । [ निर्बाधसेना की गति, प्राणि उत्पादन, घण्टापथ का नाम 'संसरण' । ] ( २ ) वान्ते उद्धरणे उन्नये भुक्तोज्झिते उन्मूलिते च **'समुद्गिरणम्'** । अत इत्यारम्भ ईरिणशब्दं यावत् त्रिषु वाच्यलिङ्गाः शब्दाः । [ उन्नयन, भुक्तोज्झित, उन्मूलित का नाम 'समुद्गिरण' । ] ( ३ ) गवादि पशुशृङ्गे गजदन्ते च **विषाणम्** । [शृंग, गजदन्त का नाम 'विषाण' । ] ( ४ ) चतुष्पथे प्रह्वे निम्नभूमौ च **प्रवणम्** । [ चतुष्पथ, प्रह्व, निम्न भूमि का नाम 'प्रवण' ।] ( ५ ) सङ्कटे, वर्णसङ्करे च **सङ्कीर्णः** । [संकट, वर्णसंकर का नाम 'सङ्कीर्ण' । ] ( ६ ) ऊषरे शून्ये च **ईरिणम्** । [ ऊषर, शून्य का नाम 'ईरिण' । ] ( ७ ) सेतौ प्राकारे च **वरणः** । [ सेतु, प्राकार का नाम 'वरण' । ] ( ८ ) नदीभेदे केशसमूहे च **वेणी** । [ नदीभेद, केशसमूह का नाम 'वेणी' । ]

**इति णान्ताः शब्दाः ।**

( ९ ) सुरे सूर्ये च **विवस्वान्** । [ सुर, सूर्य का नाम 'विवस्वत्' । ] ( १० ) नदे अब्धौ च **सरस्वत्** । [ नद, समुद्र का नाम 'सरस्वत्' । ] ( ११ ) गरुडे पक्षिणि च **गरुत्मत्** । [ गरुड, पक्षी का नाम 'गरुत्मत्' । ] ( १२ ) भासे पक्षिणि च **शकुन्तः** । [ भास, पक्षी सामान्य का नाम 'शकुन्त' । ] ( १३ ) अग्नौ उत्पाते च **धूमकेतुः** । [ अग्नि उत्पात का नाम 'धूमकेतु' । ] ( १४ ) मेघे पर्वते च **जीमूतः** । [ मेघ, पर्वत का नाम 'जीमूत' । ] ( १५ ) पाणौ नक्षत्रे च **हस्तः** । [ पाणि, नक्षत्र का नाम 'हस्त' । ] ( १६ ) देवे वायौ च **मरुत्** । [ देवता, वायु का नाम 'मरुत्' । ]

[1]यन्ता हस्तिपके सूते, [2]भर्ता धातरि पोष्टरि ॥ ६५ ॥
[3]यानपात्रे शिशौ पोतः [4]प्रेतः प्राण्यन्तरे मृते ।
[5]ग्रहभेदे ध्वजे केतुः, [6]पार्थिवे तनये सुतः ॥ ६६ ॥
[7]स्थपतिः कारुभेदेऽपि, [8]भूभृद्भूमिधरे नृपे ।
[9]मूर्धाभिषिक्तो भूपेऽपि, [10]ऋतुः स्त्रीकुसुमेऽपि च ॥ ६७ ॥
[11]विष्णावप्यजिताऽव्यक्तौ, [12]सूतस्त्वष्टरि सारथौ ।
[13]व्यक्तः प्राज्ञेऽपि, [14]दृष्टान्तावुभे शास्त्रनिदर्शने ॥ ६८ ॥
[15]क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायाञ्च शूद्रजे ।
[16]वृत्तान्तः स्यात्प्रकरणे प्रकारे कात्स्न्र्यवार्तयोः ॥ ६९ ॥
[17]आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः ।

( १ ) हस्तिपके सारथौ च **यन्ता** । [ हस्तिपक, सारथि का नाम 'यन्ता' । ] ( २ ) ब्रह्मणि रक्षके च **भर्ता** । [ ब्रह्मा, रक्षक का नाम 'भर्ता' । ] ( ३ ) शिशौ यानपात्रे च **पोतः** । [ यानपात्र, शिशु का नाम 'पोत' ] ( ४ ) प्राण्यन्तरे मृते च **प्रेतः** । [ प्राण्यन्तर, मृत का नाम 'प्रेत' । ] ( ५ ) ध्वजे ग्रहभेदे च **केतुः** । [ ध्वज, ग्रहभेद का नाम 'केतु' । ] ( ६ ) पुत्रे पार्थिवे च **सुतः** । [ पुत्र, पार्थिव का नाम 'सुत' । ] ( ७ ) कञ्चुकिनि तक्षके च **स्थपतिः** । [ कञ्चुकी, कारुभेद का नाम 'स्थपति' । ] ( ८ ) नृपे भूमिधरे ( पर्वते ) च **भूभृत्** । [ राजा, भूमिधर का नाम 'भूभृत्' । ] ( ९ ) भूपाले मन्त्रिणि क्षत्रियेऽपि च **मूर्धाभिषिक्तः** । [ भूपाल, मन्त्री, क्षत्रिय का नाम 'मूर्धाभिषिक्त' । ] ( १० ) वसन्तादौ स्त्रीकुसुमे च **ऋतुः** । [ वसन्त आदि, स्त्री कुसुम का नाम 'ऋतु' । ] ( ११ ) विष्णौ रुद्रे अव्यक्ते च **अजितः** । [ विष्णु, रुद्र, अव्यक्त का नाम 'अजित' । ] ( १२ ) तक्षिण, सारथौ, क्षत्रियाद् ब्राह्मणी सुते **सूतः** । [ तक्षा, सारथि, क्षत्रिय ब्राह्मणी में उत्पन्न का नाम 'सूत' । ] ( १३ ) स्फुटे बुद्धिमति च **व्यक्तः** । [ स्फुट, बुद्धिमान् का नाम 'व्यक्त' । ] ( १४ ) उदाहृतौ, शास्त्रे, मरणे च **दृष्टान्तः** । [ उदाहरण, शास्त्र, मरण का नाम 'दृष्टान्त' । ] ( १५ ) द्वाःस्थे सारथौ शूद्रात् क्षत्रियायां जाते च **क्षत्ता** । [ द्वारस्थित, सारथि, शूद्र से क्षत्राणी में उत्पन्न का नाम 'क्षत्ता' । ] ( १६ ) प्रकरणे प्रकारे कात्स्न्र्ये वार्तायां च **वृत्तान्तः** । [ प्रकरण, प्रकार, कृत्स्नता, वार्ता का नाम 'वृत्तान्तः' । ] ( १७ ) नृत्यस्थाने जने रणे देशभेदे च **आनर्तः** । [ नृत्यस्थान, जन, रण, देशभेद का नाम 'आनर्त' । ]

[1]कृतान्तो यमसिद्धान्तदैवाऽकुशलकर्मसु ॥ ७० ॥
[2]श्लेष्मादि रसरक्तादि महाभूतानि तद्‌गुणाः ।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥ ७१ ॥
[3]कक्षान्तरेऽपि शुद्धान्तो नृपस्याऽसर्वगोचरे ।
[4]कासूसामर्थ्ययोः शक्ति[5]र्मूर्तिः काठिन्यकाययोः ॥ ७२ ॥
[6]विस्तारवल्ल्योर्व्रतति[7]र्वसती रात्रिवेश्मनोः ।
[8]क्षयाऽर्चयोरपचितिः, [9]सातिर्दानाऽवसानयोः ॥ ७३ ॥
[10]अर्तिः पीडाधनुष्कोटयो[11]र्जातिः सामान्यजन्मनोः ।
[12]प्रचारस्यन्दयो रीति[13]रीतिर्डिम्बप्रवासयोः ॥ ७४ ॥
[14]उदयेऽधिगमे प्राप्तिस्त्रेता[15] त्वग्नित्रये युगे ।
[16]वीणाभेदेऽपि महती, [17]भूतिर्भस्मनि सम्पदि ॥ ७५ ॥

---

( १ ) यमादिषु **कृतान्तः** । [ यम, सिद्धान्त, दैव, अकुशलकर्म का नाम 'कृतान्त' । ] ( २ ) श्लेष्मादयः श्लोकोक्ता **धातवः** । [ कफ आदि, रसरक्त आदि, पञ्चमहाभूत, पृथिवी आदि के गुण, इन्द्रियाँ, गेरू आदि, भूवादि का नाम 'धातु' । ] ( ३ ) कक्षान्तरे नृपस्याऽसर्वगोचरे च **शुद्धान्तः** । [ कक्षान्तर, राजा के अन्तःपुर का नाम 'शुद्धान्त' । ] ( ४ ) अस्त्रान्तरे गौर्याम् उत्साहादौ बले च **शक्तिः** । [ कासू, सामर्थ्य का नाम 'शक्ति' । ] ( ५ ) काठिन्ये, शरीरे च **मूर्तिः** । [ काठिन्य, काय का नाम 'मूर्ति' । ] ( ६ ) विस्तारे लतायाञ्च **व्रततिः** । [ विस्तार, वल्ली का नाम 'व्रतति' । ] ( ७ ) स्त्रियां निवासे रात्रौ निकेतने च **वसतिः** । [ रात्रि, वेश्म का नाम 'वसति' । ] ( ८ ) अर्चायां क्षये च **अपचितिः** । [ क्षय, अर्चा का नाम 'अपचिति' । ] ( ९ ) अवसाने दाने च **सातिः** । [ दान, अवसान का नाम 'साति' । ] ( १० ) धनुष्कोटौ पीडायां च **अर्तिः** । [ धनुष्कोटि, पीडा का नाम 'अर्ति' । ] ( ११ ) सामान्ये जन्मनि च **जातिः** । [ सामान्य, जन्म का नाम 'जाति' । ] ( १२ ) प्रचारे स्यन्दे लोहकिट्टे आरकूटे च **रीतिः** । [ प्रचार, स्यन्द, लोहकिट्ट, आरकूट का नाम 'रीति' । ] ( १३ ) डिम्बे प्रवासे च **ईतिः** । [ डिम्ब, प्रवास का नाम 'ईति' । ] ( १४ ) उदये, अधिगमे च **प्राप्तिः** । [ उदय, अधिगम का नाम 'प्राप्ति' । ] ( १५ ) अग्नित्रये युगे च **त्रेता** । [ अग्नित्रय, युग विशेष का नाम 'त्रेता' । ] ( १६ ) प्राज्ये वल्लकी भेदे च **महती** । [ प्राज्य, वल्लकी भेद का नाम 'महती' । ] ( १७ ) भस्मनि सम्पदि च **भूतिः** । [ भस्म, सम्पत्ति का नाम 'भूति' । ]

[1]नदीनगर्योर्नागानां भोगवत्यथ [2]सङ्गरे ।
सङ्गे सभायां समितिः, [3]क्षयवासावपि क्षितिः ॥ ७६ ॥
[4]रवेर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः ।
[5]जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥ ७७ ॥
[6]पङ्क्तिश्छन्दोऽपि दशमं,[7]स्यात्प्रभावेऽपि चाऽऽयतिः ।
[8]पत्तिर्गतौ च, [9]मूले तु पक्षतिः पक्षभेदयोः ॥ ७८ ॥
[10]प्रकृतिर्योनिलिङ्गे च [11]कैशिक्याद्याश्च वृत्तयः ।
[12]सिकताः स्युर्बालुकाऽपि, [13]वेदे श्रवसि च श्रुतिः ॥ ७९ ॥
[14]वनिता जनिताऽत्यर्थानुरागायां च योषिति ।
[15]गुप्तिः क्षितिव्युदासेऽपि, [16]धृतिर्धारणधैर्ययोः ॥ ८० ॥
[17]बृहती क्षुद्रवार्ताकीछन्दोभेदे महत्यपि ।

---

( १ ) नद्यां नागानां नगर्यां च भोगवती । [ नदी, नागों की नगरी का नाम 'भोगवती' । ] ( २ ) सङ्गरे, सङ्गे, सभायां च समितिः । [ सङ्ग, सभा का नाम 'समिति' । ] ( ३ ) निवासे भूमौ कालभेदे क्षये च क्षितिः । [ निवास, क्षय, का नाम 'क्षिति' । ] ( ४ ) सूर्यतेजसि शस्त्रे अग्निज्वालायां च हेतिः । [ सूर्य का तेज, शस्त्र, वह्नि ज्वाला का नाम 'हेति' । ] ( ५ ) भुवने, भूमौ छन्दोभेदे जने च जगती । [ भुवन, भूमि, छन्दभेद का नाम 'जगती' । ] ( ६ ) दशसङ्ख्यायां दशाक्षरच्छन्दसि च पङ्क्तिः । [ दस संख्या, दस अक्षर वाले छन्द का नाम 'पंक्ति' । ] ( ७ ) प्रभावे संयमे दैर्घ्ये आगामिनि काले च आयतिः । [ प्रभाव आदि का नाम 'आयति' । ] ( ८ ) पदगे गतौ च पत्तिः । [ गति का नाम 'पत्ति' । ( ९ ) पक्षमूले प्रतिपत्तिथौ च पक्षतिः । [ पक्षमूल, प्रतिपदा का नाम 'पक्षति' । ] ( १० ) योनौ लिङ्गे च प्रकृतिः । [ योनि, लिग का नाम 'प्रकृति' । ] ( ११ ) विवरणे जीव्ये कैशिक्यादिषु च वृत्तिः । [ कैशिकी आदि का नाम 'वृत्ति' । ] ( १२ ) सिकतिले बालुकायां भूम्नि च सिकताः । [ बालुका का नाम 'सिकता' । ] ( १३ ) वेदे, श्रवसि च श्रुतिः । [ वेद, श्रवण का नाम 'श्रुति' । ] ( १४ ) 'वनिता जातरागस्त्री स्त्रियोः स्त्री, त्रिषु याचिते' । इति मेदिनी । [ जनिता, अत्यन्त अनुराग वाली स्त्री का नाम 'वनिता' । ] ( १५ ) कारायां रक्षायां च गुप्तिः । [ जेल, रक्षा का नाम 'गुप्ति' । ] ( १६ ) धैर्ये च धृतिः । [ धारण, धैर्य का नाम 'धृति' । ] ( १७ ) क्षुद्रवार्ताक्यां छन्दोभेदे महत्यां च बृहती । [ क्षुद्रवार्ताकी, महती, छन्दोभेद का नाम 'बृहती' । ]

[1]वासिता स्त्रीकरिण्योश्च, [2]वार्त्ता वृत्तौ जनश्रुतौ ॥ ८१ ॥
[3]वार्तं फल्गुन्यरोगे च, [4]त्रिष्वप्सु च घृताऽमृते ।
[5]कलधौतं रूप्यहेम्नो[6]र्निमित्तं हेतुलक्ष्मणोः ॥ ८२ ॥
[7]श्रुतं [8]शास्त्राऽवधृतयोर्युगपर्याप्तयोः कृतम् ।
[9]अत्याहितं महाभीतिः कर्म जीवाऽनपेक्षि च ॥ ८३ ॥
[10]युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।
[11]वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ८४ ॥
[12]महद्राज्यं [13]चाऽवगीतं जन्ये स्याद्गर्हिते त्रिषु ।
[14]श्वेतं रूप्येऽपि, [15]रजतं हेम्नि रूप्ये सिते त्रिषु ॥ ८५ ॥
[16]त्रिष्वितो जगदिङ्गेऽपि, [17]रक्तं नील्यादिरागि च ।

---

( १ ) करिण्यां योषिति च **वासिता** । भाविते रुते च **वासितम्** । [ करिणी, स्त्री का नाम 'वासिता' । ] ( २ ) जनश्रुतौ वृत्तौ च **वार्ता** । [ वृत्त, जनश्रुति का नाम 'वार्ता' । ] ( ३ ) आरोग्ये फल्गुनि च **वार्तम्** । [ आरोग्य, फल्गु का नाम वार्तं' । ] ( ४ ) यज्ञशेषे पीयूषे सलिले घृते स **अमृतम्** । [ घृत, जल का नाम अमृत । ] ( ५ ) सुवर्णे रजते च **कलधौतम्** । [ रूप्य, हेम का नाम 'कलधौत' । ] ( ६ ) हेतौ निमित्ते च **निमित्तम्** । [ हेतु, निमित्त का नाम 'निमित्त' । ] ( ७ ) श्रवणे शास्त्रे च **श्रुतम्** । [ श्रवण, शास्त्र का नाम 'श्रुत' । ] ( ८ ) युगे अलमर्थे विहिते हिंसिते च **कृतम्** । [ युग, पर्याप्त का नाम 'कृत' । ] ( ९ ) महाभीतौ जीवनानपेक्षे कर्मणि च **अत्याहितम्** । [ महाभीति, जीवनानपेक्ष-कर्म का नाम 'अत्याहित' । ] ( १० ) उचिते क्ष्मादौ पिशाचादौ जन्तौ प्राप्ते वृत्ते समे सत्ये च त्रिषु **भूतम्** । [ उचित, क्ष्मादि, पिशाच आदि का नाम 'भूत' । ] ( ११ ) अधीते अतीते वर्तुले मृते वृत्ते छन्दसि चरित्रे च **वृत्तम्** । [ पद्य, चरित्र, अतीत, दृढ, निस्तल का नाम 'वृत्त' । ] ( १२ ) महति राज्ये च **महत्** । [ महान्, राज्य का नाम महत्' । ] ( १३ ) निर्वादे दुष्टे गर्हिते च **अवगीतम्** । [ जन्य, गर्हित का नाम 'अवगीत' । ] ( १४ ) द्वीपे अद्रिभेदे रूप्ये च **श्वेतम्** । वराटिकायां शङ्खिन्याश्च श्वेता । [ रूप्य का नाम श्वेत' । ] ( १५ ) हेम्नि रूप्ये सिते च त्रिषु **रजतम्** । इतः परं तान्ताः शब्दास्त्रिषु । [ हेम, रूप्य, सित का नाम 'रजत' । ] ( १६ ) लोके क्लीबे, पवने पुंसि जङ्गमे च त्रिषु **जगत्** । [ इङ्ग (जंगम, इंगित) का नाम 'जगत्' । ] ( १७ ) अनुरक्ते लोहिते नीलादि-रञ्जिते **रक्तम्** । [ अनुरक्त, रक्तवर्ण, नीलादिरंजित का नाम 'रक्त' । ]

[1]अवदातः सिते पीते शुद्धे, [2]बद्धाऽर्जुनौ सितौ ॥ ८६ ॥
[3]युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ [4]संस्कृतम् ।
कृत्रिमे लक्षणोपेतेऽप्य[5]नन्तोऽनवधावपि ॥ ८७ ॥
[6]ख्याते हृष्टे, प्रतीतो[7]ऽभिजातस्तु कुलजे बुधे ।
[8]विविक्तौ पूतविजनौ, [9]मूर्च्छितौ मूढसोच्छ्रयौ ॥ ८८ ॥
[10]द्वौ चाऽम्लपरुषौ शुक्तौ, [11]शिती धवलमेचकौ ।
[12]सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥ ८९ ॥
[13]पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।
[14]निवातावाश्रयाऽवातौ शस्त्राऽभेद्यं च वर्म यत् ॥ ९० ॥
[15]जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता, [16]उत्थितास्त्वमी ।

---

( १ ) सिते पीते शुद्धे च **अवदातः** । [सित, पीत, शुद्ध का नाम 'अवदात' ।] ( २ ) बद्धे धवले शर्करायाम् अवसिते च **सितम्** । [ बद्ध, अर्जुन का नाम 'सित' । ] ( ३ ) युक्ते अतिसंस्कृते मर्षिणि च **अभिनीतः** । [ युक्त, अति-संस्कृत, मर्षणशील का नाम 'अभिनीत' । ] ( ४ ) कृत्रिमे शस्त्रे भूषिते च **संस्कृतम्** । [ कृत्रिम, भूषित का नाम 'संस्कृत' । ] ( ५ ) विष्णौ शेषनागे पुंसि निरवधौ च त्रिषु **अनन्तः** । [ विष्णु, शेषनाग, निरवधि का नाम 'अनन्त' । ] ( ६ ) ख्याते हृष्टे च **प्रतीतः** । [ ख्यात, हृष्ट का नाम 'प्रतीत' । ] ( ७ ) कुलजे बुधे च अभिजातः । [ कुलीन, बुध का नाम 'अभिजात' । ] ( ८ ) पूते विजने च **विविक्तः** । [ पूत, विजन का नाम 'विविक्त' । ] ( ९ ) उच्छ्रिते मूढे च **मूर्च्छितः** । [ उच्छ्रित, मूढ का नाम 'मूर्च्छित' । ] ( १० ) पूते अम्ले निष्ठुरे च **शुक्तम्** । [ पूत, अम्ल, निष्ठुर का नाम 'शुक्त' । ] ( ११ ) भूर्जे धवले मेचके च **शिती** । [ धवल, मेचक का नाम 'शिती' । ] ( १२ ) सत्ये साधौ विद्यमाने प्रशस्ते अभ्यर्हिते च **सत्** । [ सत्य, साधु, विद्यमान, प्रशस्त, अभ्यर्हित का नाम 'सत्' । ] ( १३ ) पूजिते अरातौ अभियुक्ते अग्रतः कृते च **पुरस्कृतः** । [ पूजित, अराति, अभियुक्त, अग्रतः कृत का नाम 'पुरस्कृत' । ] ( १४ ) दृढसन्नाहे वातवर्जिते निवासे च **निवातः** । [ दृढसन्नाह, वातवर्जितनिवास का नाम 'निवात' । ] ( १५ ) समुन्नद्धे प्रवृद्धे च **उच्छ्रितम्** । [ समुन्नद्ध, प्रवृद्ध का नाम 'उच्छ्रित' । ] ( १६ ) उत्पन्ने प्रोद्यते वृद्धिमति च उत्थितम् । [ उत्पन्न, प्रोद्यत आदि का नाम 'उत्थित' । ]

[1]वृद्धिमत्प्रोद्यतोत्पन्ना, आदृतौ सादरार्चितौ ॥ ९१ ॥
( इति तान्ताः )
[2]अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।
[3]निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥ ९२ ॥
[4]समर्थस्त्रिषु शक्तिस्थेऽसम्बद्धार्थे हितेऽपि च ।
[5]दशमीस्थौ क्षीणरागवृद्धौ, [6]वीथी पदव्यपि ॥ ९३ ॥
[7]आस्थानीयत्नयोरास्था, [8]प्रस्थोऽस्त्री सानुमानयोः ।
[ [9]शास्त्रद्रविणयोर्ग्रन्थः, [10]संस्थाऽऽधारे स्थितौ मृतौ । ]
( इति थान्ताः )
[11]अभिप्रायवशौ छन्दा [12]वब्दौ जीमूतवत्सरौ ॥ ९४ ॥
[13]अपवादौ तु निन्दाऽऽज्ञे, [14]दायादौ सुतबान्धवौ ।

---

( १ ) सादरम् अर्चिते च आदृतः । [ सादर पूजित का नाम 'अर्चित' । ]

इति तान्ताः शब्दाः ।

( २ ) अभिधेयादिषु अर्थेषु अर्थः । [अभिधेय, रै, वस्तु, प्रयोजन, निवृत्ति का नाम 'अर्थ' । ] ( ३ ) निपानं जलावतारः । निदानमिति पाठभेद इति मुकुटः । ऋषिजुष्टे सेविते च जले, गुरौ च तीर्थम् । [ निपान, आगम, ऋषिजुष्ट जल, गुरु का नाम 'तीर्थ' । ] ( ४ ) शक्तिस्थे असम्बद्धार्थे हिते च त्रिषुः समर्थः । [ शक्तिस्थ, असम्बद्धार्थ, हित का नाम 'समर्थ' । ] ( ५ ) नष्टबीजे, क्षीणरागे, वृद्धे च दशमीस्थः । [ नष्टबीज, क्षीणराग, वृद्ध का नाम 'दशमीस्थ' । ] ( ६ ) पङ्क्तौ गृहाङ्गे रूपकान्तरे वर्त्मनि च वीथी । [ पंक्ति, पदवी, रूपकान्तर का नाम 'वीथी' । ] ( ७ ) आस्थान्यां यत्ने च आस्था । [ आस्थानी, यत्न का नाम 'आस्था' । ] ( ८ ) मानभेदे सानौ उन्मितवस्तुनि च प्रस्थः । [ मानभेद, सानु का नाम 'प्रस्थ' । ] ( ९ ) शास्त्रे द्रविणे च ग्रन्थः । [ शास्त्र, द्रविण का नाम 'ग्रन्थ' । ] ( १० ) आधारे स्थितौ मृतौ च संस्था । [ आधार, स्थिति, मृति ( मृत्यु ) का नाम 'संस्था' ।

इति थान्ताः ।

( ११ ) अभिप्राये वशे च छन्दः । [ अभिप्राय, वश का नाम 'छन्द' । ] ( १२ ) जीमूते वत्सरे च अब्दः । [ जीमूत, वत्सर का नाम 'अब्द' । ] ( १३ ) अज्ञे निन्दायां च अपवादः । [ अज्ञ, निन्दा का नाम 'अपवाद' । ] ( १४ ) सुते बान्धवे च दायादः । [ सुत, बान्धव का नाम 'दायाद' । ]

[१]पादा रश्म्यङ्घ्रितुर्यांशा[२]श्चन्द्राग्न्यर्कास्तमोनुदः ॥ ९५ ॥
[३]निर्वादो जनवादेऽपि, [४]शादो जम्बालशष्पयोः ।
[५]सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ ९६ ॥
[६]स्यात्प्रसादोऽनुरागेऽपि, [७]सूदः स्याद्व्यञ्जनेऽपि च ।
[८]गोष्ठाध्यक्षेऽपि गोविन्दो, [९]हर्षेऽप्यामोदवन्मदः ॥ ९७ ॥
[१०]प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।
[११]स्त्री संविज्ज्ञानसम्भाषाक्रियाकाराऽऽजिनामसु ॥ ९८ ॥
[१२]धर्मे रहस्युपनिषत्[१३] स्याहतौ वत्सरे शरत् ।
[१४][illegible]

२२० अमरकोषः [ तृतीयकाण्डे

[१]पादा रश्म्यङ्घ्रितुर्यांशा[२]श्चन्द्राग्न्यर्कास्तमोनुदः ॥ ९५ ॥
[३]निर्वादो जनवादेऽपि, [४]शादो जम्बालशष्पयोः ।
[५]सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ ९६ ॥
[६]स्यात्प्रसादोऽनुरागेऽपि, [७]सूदः स्याद्व्यञ्जनेऽपि च ।
[८]गोष्ठाध्यक्षेऽपि गोविन्दो, [९]हर्षेऽप्यामोदवन्मदः ॥ ९७ ॥
[१०]प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।
[११]स्त्री संविज्ज्ञानसम्भाषाक्रियाकाराऽऽजिनामसु ॥ ९८ ॥
[१२]धर्मे रहस्युपनिषत्[१३] स्याहतौ वत्सरे शरत् ।